॥ श्रीः ॥

॥ विषयसूचिका ॥

---*---

---

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL. XX.

No. 1.




PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.



**Registered No. M. 103.**

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).
6. Annual subscription is Rs. 3 only, including postage.



भक्तश्च यः कार्तिकेये काकुत्स्थ भुवि मानवः ।
आयुष्मान्पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत् ॥

—वाल्मीकिः ।

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविकासमनोहरा ।

सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८.] राक्षसवर्ष चैत्रमासः । [संचि. १.

## सुभाषितानि ।

प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः
स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः ।
अतिपरिचयदोषात्कस्य नो मानहानिः
नवनवगुणरागी प्रायशः सर्वलोकः ॥ १ ॥

भवति हृदयहारी कोऽपि कस्यापि हेतुः
न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयितवनान्ते कोकिलारावरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ २ ॥

कलास्तास्ताः सम्यग्वहसि यदसि त्वं द्विजपति-
र्द्युतिस्तादृग्नूना जनिरपि च रत्नाकरकुले ।
बहु ब्रूमः किं वा पुरहरशिरोमण्डनमसि
त्वदीयं तत्सर्वं शशधर कलङ्काद्विफलितम् ॥ ३ ॥

॥ श्रीः ॥

# ॥ विज्ञापना ॥

साहितीदेवतेव मूर्तिमतीयं रसमयी सहृदया चाटुवचनैर्व्यङ्ग्यगर्भैरनुवाचकानामान्तरमापूरयन्त्यन्यादृशेन प्रमोदेन, अद्य परिपूर्णोनविंशतिवयस्का विंशतितमे हायने कृतपदा प्रागल्भ्यमनितरसाधारणमाविष्कुर्वती, अभिनन्द्यमानागमना अभिज्ञैः, प्रशस्यमानप्रचारा प्राज्ञैः, संस्तूयमानपदविन्यासा सहृदयैः, संभावितनवनवोन्मिषद्भागधेया सुमनसां बृन्दैः, आशास्यमानमङ्गलोदया अवनिपैः, गङ्गेव वसुजननी, यमुनेव कृष्णपदविन्यासालंकृता, कमलिनीव सूर्यनिन्दितमुखविलासा, कावेरीव सर्वजनास्वादनीयरसा ताम्रपर्णीव तिलकितदक्षिणाशामुखा राजति रमणीयवेषोज्ज्वलेति सर्वानन्दानामुपरि वर्तामहे ।

सेयमिदानीं विशेषतश्चित्रकर्मकौशलं अभिनन्दन्तीव यस्य कस्यापि हृदयहारिणः संनिवेशस्य महापुरुषस्य वा प्रतिकृतिमात्मनो हृदयेनावहन्ती प्रगल्भवनितामनुकरोति ।

एषा ह्यतीते वयसि अमरसिंहप्रणीतानां पद्यानामर्थज्ञानं विनैव मुखस्थीकरणे अमान्तं परिश्रममातन्वतां बालकानामध्यापकानां चातिकरुणामवस्थामनुशोचन्ती तान्येव नैघण्टुकानि पद्यान्यवलम्ब्य ब्रह्मविष्णुरुद्रादिदेवानां दिक्पालकानां च स्वरूपादिकं हृदयावर्जकेन कथारूपेण केनचित्प्रकारेण सुखमवबोधयन्ती निघण्टुपठनरीतिं कामप्यपूर्वामुपादिक्षत् । अक्षरलेखनप्रकारेऽपि

समीचीनं कमपि पन्थानं निरूप्य शिशूनां तदध्यापनव्यापृतानां च महान्तमुपकारमातनोत् । प्राचीनकविप्रणीतानां ग्रन्थानां केषांचित्कथासारमतिमधुरया गद्यसरण्या संग्रहेणाबोधयत् । अवतारयामास च अमुद्रितमपूर्वरसमेदुरं किमपि प्राचीनं रूपकम् । अभिनन्दनीयचरितानां सीमन्तिनीललामभूतानां कासांचिद्वरवर्णिनीनां वैभवमनुवर्ण्य नारीमणिभिरेवं खलु वर्तितव्यम् इत्यन्वशिक्षयत् ।

अनया च तदा तदा साहितीहृदयपरिज्ञानसरणिः, राजभक्तिः, आरोग्यसंपादनम्, इत्येतान्यन्यानि चाधिकृत्य विषयाः सोपपत्तिकं निरूप्यन्ते । महाकवीनां जीवनचरितवर्णने तदीयग्रन्थव्याख्यास्वारस्यनिर्णये देशान्तरीयनाटककथानिरूपणे चेयमात्मनो नैपुण्यं प्रकाशयति । अस्याश्चोपासकाः गद्यमय्याः सरस्वत्या विलासमधिगत्य सर्वमिदं जीवलोकं वाङ्मयमारचयितुमुद्युञ्जते ।

अस्याश्च सरणिं कात्स्न्येंनावगच्छन्तः कामप्युदारां मानसीं वृत्तिमुपलभ्य महाशया भवन्ति । हृदयवैपुल्यं गद्यरचनाकौशलं लोकस्वभावपरिज्ञानं प्राचीनेतिवृत्तनिर्णयकौतूहलं शब्दहेतुसमयविद्यास्वरूपावबोधनं अध्यात्मरहस्यविज्ञानं सदसद्विवेचनचातुरी ऊहापोहशक्तिः प्रायः सर्वेष्वपि विषयेषु संपद्यन्ते सहृदयोपासकानाम् । किं बहुना—— इयं हि रसायनं सहृदयशिरोमणीनाम्, विलासभूमिर्गद्यमय्या भारत्याः, अवतरणसोपानमपूर्वग्रन्थानम्, अवसानभूमिरधर्मव्यवहाराणाम्, चित्रशाला महापुरुषप्रतिकृतीनाम्, परा काष्ठा मुद्रणसौष्ठवस्य ॥

विशेषतो राक्षसे अस्मिन्वत्सरे, विजृम्भमाणे महत्याबोधने, सर्वलोकक्षेमाय अस्मच्चक्रवर्तिनो विजयमाशंसमानेयं सहृदया गौरीप्रसादनादृते मनीषितलाभमपश्यन्ती तद्वैभवप्रकाशकानां महाकवेर्मुखान्निरर्गलं प्रसृतानां कुमारसंभवसूक्तीनामनुध्याननिरता प्रसंगतः काव्यस्यास्य माधुर्यसौकुमार्यादिगुणसंपत्ति अन्यादृशीं सुषमां चानुवर्णयितुमुद्यता समावर्जयिष्यति मानसं भावुकानामिति सप्रमोदं निवेदयामः ॥

संपादकः ।

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

निगमनिगूढार्थतत्वविनिश्चिखिलशास्त्रमर्मवेदी महाकविः कालिदासः निरन्तरानुध्यानविषयीकृतदिव्यविग्रहां निरुपमैश्वर्यसम्पन्नस्येश्वरस्यापि निरतिशयं माहाभाग्यमुपजनयन्तीं भवानीमिष्टदेवतामतिरमणीयेन प्रबन्धेनोपश्लोकयितुम्, तत्प्रसादलब्धमात्मनः काव्यकरणकौशलं सफलयितुञ्चाभिलषन् 'शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान्' इत्यारभ्य 'एष ते राम गङ्गाया विस्तरोऽभिहितो मया । कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च' इत्येतदन्तमादिकविनाऽनुवर्णितां कथामवलम्ब्यातिशयितसुधाधोरण्या वाक्सरण्या कुमारसंभवं नामेदं काव्यमारचयन्विनोदयति मानसं सहृदयानाम् ॥

देवतापरत्वमस्याः कृतेरादावेवावबोधयन्निव 'अस्त्युत्तरस्यां दिशि देवतात्मा—' इत्युपक्रममाणो महाकविः 'भक्तश्च यः कार्ति-

केये काकुत्स्थ भुवि मानवः । आयुष्मान्पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत्' इति प्राचेतसभाषितमुपदेशमिव गृह्णन्, आगममिव स्मरन्, मंत्रमिव जपन्नात्मनः काव्येषु महापुरुषवर्णनावसरे प्रायः पार्वतीनन्दनमेवोपमानत्वेन निर्दिशन् 'अत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः' इति तस्मिन्नसाधारणीमात्मनो भक्तिमाविष्कुर्वन् वाल्मीकिमुखान्निर्गलिता 'कुमारसंभवः' इति वर्णावलिरेवास्य काव्यस्यानुरूपं नामधेयं भवितुमर्हतीत्याकलयन् सर्गैरष्टभिः कुमारोदयप्रस्तावमतिपावनमनुवर्णयितुमारभते ॥

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ वारिनिधी विगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥

अत्रादावेव महाकविर्देवतानामस्तित्वमनभ्युपगच्छतां नास्तिकानामपि महासत्त्वमिव पृथिवीमभिव्याप्य विलसन्, अम्बरलेखिशिखरैर्मन्दाकिनीमावहन्, आवासभूमिरप्सरोगणानाम्, आश्रयो महावनस्पतीनाम्, आकरो निधीनाम्, आधारः संयमीन्द्राणाम्, आरोहणद्वारममरलोकानामयमधिराजो नगानां सकृद्दर्शनेनैवास्तिक्यमधिकमवश्यमुत्पादयेदिति आत्मनो दृढनिश्चयमतिमधुरमवगमयति व्यञ्जचसरण्या ॥

अश्वत्थपर्णसमानाकारायाः पार्श्वयोरुभयोरपि पूर्वेण पश्चिमेन चोदधिना परिवृताया अस्या वसुंधराया उत्तरस्यां दिशि सीमान्तलेखेवोदधिद्वयमभिव्याप्य स्थितं हिमवन्तं मानदण्डत्वेन निरूपय

न्महाकविरात्मनो देशसंस्थाभिज्ञतामभिव्यञ्जयतीति मोदन्ते भूगोलावस्थितितत्त्वविदः । वरवर्णिनीत्वेनोत्प्रेक्षिताया मेदिन्या हिमालयोपान्तभूमय एव शिरः, सरस्वत्या पवित्रिताः ब्रह्मावर्तादिप्रदेशाः वदनम्, [1]मन्दाकिनी कण्ठगता मुक्तावली, चित्रकूटस्थली निरन्तरपयोधरौ, विन्ध्याटवी मेखला, गोदावरीनर्मदादिनद्यस्त्रिवल्यः, [2]सह्याद्रिर्नितम्बः, ततो दक्षिणभागाश्चरणस्थानीया इतीमां मानसीं वृत्तिमस्य महाकवेरनुध्यायन्तः सहृदयाः प्रहर्षमतुलमनुभवन्ति ॥

भट्टबाणोऽपि विन्ध्याटवीं 'अस्ति पूर्वापरजलनिधिवेलावलग्ना मध्यदेशालङ्कारभूता मेखलेव भुवः' इति वर्णयन्, उत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानां ततः परतो निर्मानुषमरण्यम्, तच्चातिक्रम्य कैलासगिरिः, इति च निर्दिशन् पूर्वोक्तमाशयमुपबृंहयति ॥

एवञ्च सम्यग्विमृश्यमाने वर्षपर्वतत्वेन पौराणिकैर्निर्दिष्टस्य देवतात्मनो हिमालयस्य देवसंचरणयोग्येषु किंपुरुषवर्षत्वेन व्यवहृतेषु प्रदेशेष्वेवान्तर्भावः सर्वथाभ्युपगन्तव्यो भवति इतीदमेवाभिप्रेत्य महाकविरुत्तरत्र 'पितुः प्रदेशास्तव देवभूमयः' इति सुव्यक्तं निर्दिशति ॥

अथ वाल्मीकिना संक्षेपतो निर्दिष्टं हिमालयस्य शैलेन्द्रत्वम्, महत्त्वम्, धातूनामाकरत्वं च श्लोकत्रयेण सरसमुद्धृणाति ॥

---

१. मन्दाकिनी भाति नगोपकण्ठे
मुक्तावली कण्ठगतेव भूमेः ।—रघुवंशे

२. नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ।—रघुवंशे

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोदहक्षे ।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥

यश्चाप्सरो विभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्ति ।
बकालहककश्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ॥ ४ ॥

कदाचिदियं रत्नाकरमेखला वसुंधरा प्रलये जलमयी समभवत् । तदानीं समग्रो मेरुः, शिखरावशिष्टो हिमालयश्च बहिरदृश्येताम् । तदा भास्वन्ति रत्नानि महौषधिमूलानि बीजानि च प्राचुर्येण हिमवतः सानुषु किञ्चित् किञ्चिदन्येषु क्षुद्रेषु शैलेषु च प्रवाहेणानीतानि स्थितिमलभन्त—– इत्यादिकथा भूस्वरूपनिरूपकेष्वाधुनिकेषु शास्त्रेषु समुद्रस्य भुवो भागेषु क्वचिदपसरणं क्वचिदाक्रमणं इत्यादिगमनविशेषप्रस्तावेषूदाहृता हिमालयादिवर्षपर्वता अपि पुरा समुद्रेणाक्रान्ता आसन्निति प्रत्यायति हेतुवादिनः ॥

**गो** शब्दस्य जलवाचकत्वं धेनुवाचकत्वं चावगच्छन्त ऐतिहासिकाः— दोग्धा मेरुः, हिमालयो वत्सः, पृथ्वी गौः, रत्नान्यो-

षधयश्च दुग्धानि, सर्वेऽपि पर्वताः सविभागिनश्चासन्— इति तामेव कथामन्यथा निरूपयन्ति ।

एवमेव देवलोकगताः कल्पवृक्षादयः पदार्थाः क्षीराब्धेर्मथनेनाधिगता इति वर्णयन्ति । चिरप्रवृत्त एष पन्थाः ।

भगवान्यास्कः वृत्रशब्दानिर्वचनप्रसङ्गे— 'वृत्रो नाम कश्चन मेघः, इन्द्रः सूर्यः, अपां च ज्योतिषां च मिश्रीभावकर्मणो वर्षकर्म जायते । तदेतदुपमार्थेन युद्धवर्णा भवन्तीत्यैतिहासिकाः तदेतदुपेक्षितव्यम्' इत्यनुशास्ति ॥

(क्रमशः ।)

॥ श्रीः ॥

## ॥ पुस्तकसमालोचना ॥

———❋———

**ऋग्विधानम्**— महर्षिणा शौनकेन प्रणीतोऽयं ग्रन्थः । प्रधानानां मन्त्राणां जपे विनियुक्तानां फलश्रुतिरिहानुवर्णिता तत्तन्मन्त्राणां वीर्यमिदृशमीत्यवबोधयति वैदिकाचारनिरतानास्तिकशिखामणीन् । तथा हि—

'अहेलमानो मन्त्रं च दिनं प्रति जपेच्छतम् ।
शास्त्रेषु संशयो नास्ति विश्वासः सर्वथा भवेत् ॥

इति वदन् शौनकः तादृशमन्त्रस्य जपे प्रेरयत्यास्तिकान् । मन्त्रजपस्य सर्वपापहरत्वमुपदिशता महर्षिणा जपस्य उत्कर्ष एवानुशिक्षितः ॥

एवमेव ऋग्वेदीयापूर्वरहस्यमन्त्रप्रयोगबोधकानि लक्षणप्रकाशकानि ऋग्वेदसप्तलक्षणम्, व्यालिशिक्षा, सर्वानुक्रमणीवृतिः, ऋग्वेदरहस्यम्, पाणिनिहृदयम्, स्वरशिरोमणिः इत्यादीनि ग्रन्थरत्नानि अतिदुर्लभान्यमूल्यानि अचिरादेव अभिजनवरैः ए. यस्. वेङ्कटरमणशास्त्रिभिः श्रीरामभद्रदीक्षितैश्च श्रीवाणीविलासमुद्रालये प्रकाश्येरन्निति नितरां संतुष्यामः ॥

**रामवर्मशतकम्**-- ग्रन्थोऽयं सहृदयशिरोमणिना रामपिषारकेण राष्ट्रभरणव्यापारान्निवृत्तं शास्त्रेषु प्रशस्तेन पाण्डित्येन प्रथितयशसं माटमहाराजमधिकृत्य विरचितः तदीयं चरितं गुणगणांश्चावगमयति । पद्यानि च मधुराणि सरसानि सरलानि च ॥

**रामस्तवः**-- अत्यन्तमास्वादनीयोऽयं स्तवः श्रीमद्रघुनाथमहिमवर्णनपरः अन्यादृशया सरसया गंभीरया च सरण्या समावर्जयति मानसं सहृदयानाम् । रामनम्पियार्नामा कविरयं निरन्तरानुध्यानविषयीकृतनारायणीयसरणिः श्रीरामभक्तिपरवशान्तरङ्गः अधिगतदेवताप्रसाद इव मधुराणि पद्यान्यवशमुद्गृणातीव दृश्यते । किष्किन्धाकाण्डावधि कथाभागोऽनुवर्णितः त्रिंशता दशकेन । अदसीयोत्तरार्धपरिपूरणाय परमनुगृह्णातु रघुनन्दनः कविवरमेनमिति आशास्महे ॥

**शिवरहस्यम्**-- इतिहासेषु प्रधानतमोऽयं ग्रन्थः समुद्रवदत्युदारः द्वादशांशात्मकः ज्ञानोपासनाख्यकाण्डद्वयपरिमितः सकलमपि विषयजातं विविधया भङ्ग्या विमलतरं विस्पष्टं विबोधयति । ग्रन्थमिममधिकृत्य मुद्रापका एवं वदन्ति-- 'अतिमहनीयमिदमितिहासरत्नमतिप्रसिद्धमपि स्कान्दान्तर्गतशिवरहस्य-

खण्डस्यास्य च भेदमजानद्भिरधुनातनैरीषज्ज्ञातं अज्ञातप्रायं वा संवृत्तमित्यस्मिन्विषये कालस्य कौटिल्यमेव हेतुरिति कलनीयम् । कालवशादेवमेतद्ग्रन्थमहिमज्ञानविरलतां मनसालोच्य सात्विकः शैववर्यः सद्गोष्ठीसंस्तवगरिष्ठः सदाशिवचरणारविन्द-निरन्तरसेवानन्दितहृदयः सदाशिवश्रेष्ठचाख्यः सन्मणिः एतद्ग्रन्थं मुद्राप्य पुस्तकरूपेण प्रख्यापयितुं प्रववृते' इति ॥

अभिनन्दनीयोऽयमस्योद्यमः । पुस्तकं च रमणीयवेषोज्वलमनुवाचनाय प्रेरयति मानसं प्रेक्षकाणाम् ॥

पशुपतिरेव परं तत्वम् । विष्णुः प्रकृतिपरवशः । शिवभक्तानामेवान्यमोक्तृत्वम । रामायणस्य काव्यत्वं तच्छ्रवणे दुःखाधिक्यञ्च जायते-- तथाचोक्तम्

'किं वेदैरखिलैः पुराणनिचयैरन्योन्यनिन्दापरैः
किं वा भारतयुद्धकीर्तनमुभे किं क्षुद्रधर्मादिभिः ।
यत्रेशानकथाप्रचारविधुरा निःसारभूताकथा
काव्येनापि किमत्र रामकथया दुःखोत्कटायाः फलम् ॥'

ऊर्ध्वपुण्ड्रधारिणाम् नित्यनरकप्राप्तिः-- इत्यादि रहस्यानि उद्घाट्यन्तेऽस्मिन्ग्रन्थरत्ने । वीरशैवानामत्यन्तमुपकृतमस्य ग्रन्थस्य प्रकाशनेन ॥






॥ श्रीः ॥

# ॥ तद्वदनांबुजम् ॥

(पूर्वतोऽनुवृत्तम्)

——*——

हृदयनिहितं भावाकूतं वमंती साभिज्ञतमा दृष्टिर्वारं वरमभिसूचयति स्म मह्यम्—— हेजड, अनित्याः सांसारिका भावाः, यत् दृष्टं तन्नष्टम्, तद्वदिदमपि मुखमण्डलम् । माऽतश्चान्यादृशं मोहमवाप्नुहि । नेदमेतल्लोकीयम् । कस्यापि कृते नेदमत्र निवसति । अद्य श्वो वा यदा कदाऽपि वा विहायाऽमुं जडलोकं स्वोचितं द्युलोकमेवावरोहेदिति । हा! मूर्खशिरोमणिरयं कुतो वेद— अचिरमेव लोचनयोरगोचरतां गमिष्यतीति । हा ! तदीयहास्यम् । हृदये विद्यमानान् सर्वान् भावान् स्फुटमेवाभिदर्शयिष्यन् शौक्ल्ये अद्वितीयतां भजन् चन्द्रिकामपि, मौक्तिकमपि, यशोऽपि पयोऽपि सहस्ततालमुपहसिष्यन् स एव हासः हृदयमापूरयति । अहो! स एव सुंदरवक्षःप्रदेशः, तत्रोषितमनन्तं प्रेम । हंत ! हंत !! नाभिलष्यामि तदीयस्मरणम् । अङ्ग ईश्वर, एतत्सर्वं केन निर्मितम् ? । यथा कश्चन डिंभः मनोरमां सुमनसं स्वकीयपादतलाधस्तान्निक्षिप्य पादप्रहारेणोत्सादयति तथैव सुंदरतरं तदाऽऽस्यसरसीरुहं को दुरात्माऽविमर्शादर्शसार्वभौमः संमुध्वंसयांचकार ? तद्वदनपंकेरुहोन्मूलने न कियन्ति चाभिलषितानि निष्फलतां प्रयातानि कियंतो साध्याश्चापूर्णतां गताः कियंत्यो तृष्णा अतृप्त्या अवशिष्टाः । हा! कियानेव समाधिगतोनुरागः स्मृतेरंधकारगह्वरे ससंकटं विलुठन् निपतितः यस्मिन्दिने मे दर्शनपदवीमुपगतं तद्वदनांबुजं तस्मिन् घस्रे चाहं निश्चितवान्—

अस्या: दिव्यसृष्टे: निर्माता य: कोऽपि निश्चयेनैव वर्तेत । यदेतादृशं कार्यं न संजाघटीति केवलमंधनियमैरेव । परं यस्मिन् दिने सा तनुलता करालकालहतकस्य प्रभावेन निष्प्रभीकृता, सा माधवीलता झंझावातेन विच्छिन्ना, तन्मृदुतरं कुसुमं चंडतरचंडांशुकरस्पर्शेनैव म्लानतामुपयातं, सा स्निग्धा पीयूषभानुकला प्रभातसमयेनेव मालिन्यमाश्रिता, सा हृदयाल्हादिनी कमलिनी हेमंतसमयेनेव रामणीयकं विजहौ, तेज:पुंजरंजिता सा दीपकलिका उषसेव विशीर्णताप्ता, सा कमनीया चूतलता निदाघकालेनेवाचक्षुष्यतामापन्ना, संत्तापसंततिनाशिनी नीरदराजिरसौ शरत्कालेनेव नीरसतां समेता, ललिता निर्झरिणी उष्णसमयेनेव कृशिमानमवलंबिता, मदीयाशा यदोन्मूलिता तदा तां दुर्बलां गात्रलतां हृदये निधाय विचारितवानहं--

अस्मिन् परिदृश्यमाने जगति नास्ति विचार:, न विद्यते कारुण्यम्, नो वर्तते परसुखकामना, इति । अये भगवन् देवाधीश भूमंडलमंडनमदस्तुंडपुंडरीकम्, तां कांचनीं मृदुतरां देहलतां विरचयेति को वा त्वदीयचेलांचलं धारयन् हठात् त्वामाचकर्ष, साधु निर्मितं निर्माणानंतरं प्रणाशयेति कोवा त्वां निरबध्नात् केवलं लोकोत्तरं तावकीनं कौशलमेव दर्शयितुं तन्निर्माणमकार्षी: ? मादृशं हतभाग्यं निराशापावके दग्धुमेव कच्चित्तामस्राक्षी: ? यस्मिन्नहनि एकवाक्येवाहमवशिष्ट: तद्दुर्दिनं कथमहं वर्णयामि ? तस्मिन्नहनि मदीयभाग्यभास्करश्चरमगिरिमारूढ: । मदानंदामृतं गरलसरस्वति निमग्नं । प्रलयकालीनझंझावातस्य भयंकरतरे स्तनिते विलुप्तं तत्प्रणयसंगीतं । यो मदीयकांक्षाया उपरि हुताशनवर्षणमाविश्चकार

यो मामकहृदयं सहस्रधा विभेद, यस्तां सौंदर्यसारसमुदायोदवसितां देवतां चोरयांबभूव, यस्तां परिस्फुरतीम् तारां दारुणे वारिदपटले निमज्जयांचकार अयि भोः करुणाकर परमात्मन्, तं दुरात्मानं न शिक्षयसि? तमधमाधमं न निर्भर्त्सयसि?— आः, निष्प्रयोजनमेवाहमन्यं दूषयामि । असौ सकला गाधेतरा लीलाकरुणावरुणालयभूमिकां गृहीतस्य तवैव वर्तते । नात्र शंकाकलंकावकाशः । परम्, महामहिमशालिन् मदीयं धनं मत्तः अपाकरणवेलायां मामविचारयन् मदनुमतिमप्यगृण्हानः, मदीयमश्रुमलिनं दीनवदनमपश्यन् केवलं त्वदीयमेव वांछितं समपूरयः । साधु साधु कृतम् । नात्र विद्यते तवापि दोषः । तवाहमेव त्वयानुष्ठितं । त्वं गरिष्ठः अहं कनिष्ठः । त्वमनंतशक्तिमान् अहंदुर्बलः। अस्मिन् दृश्ये जगति विद्यमानं सर्वं वस्तु तावकीनं । न किमपि वर्तते मदीयं । तस्मात् तन्मदीयमानंदनिकेतनम् जीवनसर्वस्वम संसारसारं समुपहरता भवता सरलतैव प्रकाशिता दीनरक्षणदीक्षिततैव प्रकटिता । योऽदीनमनुष्यम् न भाययति तस्य महत्वं कथं स्फुटीभवति? यो दुर्बलं न पीडयिष्यति तस्य शक्तिः कथंकारं सफलीभवति? अहह!!! यो हीनदीनः, यस्य प्रणयमाविष्कर्तुं विषयो नास्ति, यस्मिन् नानुरागं कोपि समाचरिष्यति, यस्य भविष्यत्कालः गाढांधतमसावृतः वर्तमानसमयस्ततोऽपि भीषणतरः, येनेदमखिलमपि वसुधातलं कांतारप्रायमवलोक्यते, तमधुन्वानस्य माहात्म्यं कथं क्षितितले प्रसारं विन्दति? स श्रेष्ठत्वमपि कथं संपादयति? तस्य कर्तव्यमपि किमवशिष्यते? जक्षिदिहि कंठीरवः कदम्बकं निर्बलपशूनां हत्वाटव्याम् । केसरी हि पशुराजः । सामान्यश्रेष्ठजंतूनामवस्थिति·

रीदृशी भवांस्तु विश्वविश्वैकविभुः । अतः दुर्बलतरं मां पीडयसि । किमाश्चर्यमत्र ? योऽबलः, यो दीनः, यः क्षुद्रः तद्वदनात् 'त्राहि त्राहि, इत्यक्षराणि न निःसारयसि चेत्कथमीश्वरो भवति भवान् ? अनाथान् पादतले विन्यस्य प्रहरणं इदं शोभते महीयसाम् ? नेदं महतां कर्म । यः प्रतिकर्तुमसमर्थः तदीयहिंसनं समुचितं महिष्ठनाम् ? मां प्रतिभाति-- किं तु मया किं कथनीयमासीत् ? प्रसक्तानुप्रसक्तात् दूरतरमायातोऽहम् । विस्मरणसरणिमुपागमद्वक्तव्यं आं तदेव चारुवदनांबुजम्-- मदीयहृदयपेटिकायां संगृहीतमूल्यं रत्नम् । तां पेटिकां निर्भिद्य कोवा तद्रत्नं चोरयांबभूव ? यदा मदंतिके रत्नमेतदास तदाऽखिलमपि मेदिनीमंडलमाखंडलवनमिवालक्षि तम् । संसारोऽमृतमय एव बभूव । परमद्य तेषु किमपि किमपि नावशिष्टम् । तत्समये मदीयदृष्टिः अधिसौंदर्यवारिधिमध्यमवगाहिता ॥

रमणीयतरं तदेव चोद्यानं, सैव बाल्यकालीनक्रीडाभूमिः, सैव लीलावतीचरणविन्यासझणझणायमानमंजुमजीरनादानुकारिणा हृदयहारिणा कलरवेण विलसंती जन्हुनंदिनी, सौन्दर्यवत्याः कामिन्या इव तस्याः गतिविलासश्चाद्यापि तादृश एव, तस्यास्तीरे पूर्वमिवाऽद्यापि सुंदरतराः पक्षिणः मंजुलं कलरवमातन्वते कांतायाः रहस्यालाप इव तदव्यक्तगायनध्वनिरिदानीमपि पूरयति गगनतलम् । ता एव माधव्यो निशीथिन्यः, स एव चंदनाचलगुहागृहान्मन्दं मन्दं संचरमाणो गंधवहस्तनंधयः, हरिद्वारविलासिनीकुचतटीचन्दनचर्चायिता सैव चन्द्रिका, सकलमेतदविकलं पूर्वकालीयमेव । अहं तु न तथा । मम सर्वस्वमुध्वस्तम् । विचित्रनक्षत्रगणविभूषितं

विशालं विष्णुपदमद्य निबिडांधकारसंभृतमिवालक्ष्यते । एतदनन्तं ब्रह्माण्डगोलं दवपावकप्रखरज्वालामालावलीढमिव विलोक्यते संप्रति। शोकपावकदग्धोहमद्य क्षुभितमनसः शांतये कं वा शरणमाकलयामि? हन्त मे वैदग्ध्याकुलीं को वा द्रुतमपनयेत्? न दृश्यते चाद्य सौंदर्ये रामणीयकम्, गन्धे माधुर्यम्, संगीते मोहकारित्वम्, मानवे देहभावः, जगति विचित्रता । अन्तरेऽपि किमपि नास्ति? कश्चावबुध्यते? न स्यात्किमपि न विद्यते मदन्तःकरणे किमपि ।

तदेव चारु वदनाम्बुजम् । नास्तीदानीं आसीदेकदा अखिलामप्यानंदानामुद्गमस्थानं अनिद्यगंधबंधुनिश्वासगंधवहमाधुरीभरितमंदमंदस्मितम् चलाचलदृगंचलम्, चलितचारुचेलांचलम्, विशालनिटिलस्थलीकलितनीलनीलालकम्, श्रमांबुतनुतरशीकरललितललितम्, शिखरिदंतदष्टबिंबाधरम्, कंदर्पधनुर्विभ्रमानुकारि भ्रूलतम्, कपोलपालिबिंबितश्रवणभूषणम्, रत्यन्तकान्तनयनम्, रमणीयम, सुन्दरम्, मधुरम्, पवित्रम् अमरपुरीयसौंदर्यमंडितं स्वर्गीयं तद्वक्त्रांबुजं कथमहं वर्णयेयम्? मभ मानसमुकुरे प्रतिबिंबितमिव स्मृतिभित्तिकायां चित्रितमिव ध्यानफलके विलिखितमिवान्तः पश्चात् पुरस्तात् सन्ततं कान्तायाः वदनांबुजमेव परिस्फुरति । ईदृशं निरुपमं मुखं केनोपहृतम्? कोऽपि न पृच्छति? अपि मर्षयति दुराचारमसुं सर्वलोकः? को विचारयेत् नास्ति कोऽपि विधाता वा नियन्ता वा अस्याः सृष्टेः । वर्तते चेदपि स अनन्तशक्तिमान् । नात्र संदेहः । अथाऽपि महानिष्ठुरः प्रस्तरहृदयः । न हि कोऽपि पारयति तस्य निर्घृणतासीमानमवगन्तुम । तस्येश्वरस्य वर्तते न वा चात्मा विद्यते न वा विचारशक्तिः नाहं निश्चेतुं शक्नोमि । अथापि

तस्य हृदयं नास्तीध्यवसातुं प्रभवामि। तस्य हृदयं न विद्यते। सचास्ति महानिष्ठुरः इति किमर्थमहं भणिष्यामि। रहस्यं जिज्ञासध्वे।

केशवशर्मा (गलगलि.)

(क्रमशः।)

॥ श्रीः ॥

# ॥ अमरवाणी ॥

—*—

**रामशास्त्री—** पण्डितवर्य चिराद्दृष्टोऽसि। कथं वर्तते गैर्वाणी-प्रवचनं युष्मदीयाङ्गलमहापाठशालायाम्?

**लक्ष्मणशास्त्री—** जिह्रेम्यहं वक्तुम। बह्वीषु आङ्गलकलाशालासु एषा अनुपयुक्तेति अर्धचन्द्रं दत्त्वा निष्कासिता। मदीये विद्यालये तु यथेयं स्वयमेव क्षीणा क्रमेणादर्शनं गच्छेत् तथा प्रयत्न अनुष्ठीयते।

**राम--** किमपराद्धमनया तपस्विन्या?

**लक्ष्मण--** तस्याः सत्तैवापराध्यति।

**राम--** न खल्ववगच्छामि।

**लक्ष्मण--** सा हि पूर्वमेव आङ्गलैर्विपश्चिद्भिः मृतकोटिषु परिगणिता। अस्मदीयाः पण्डितास्तु न तथा मन्यन्ते। एते ह्येनां चिरजीविनीं देववाणीं अमृतकोटिषु गणयन्ति।

**राम—** परस्परविरुद्धमिदमाशयद्वयं विमृश्यकोटिमाटीकते।

**लक्ष्मण**-- किमत्र विमर्शेन । ते ते स्वीयं सिद्धान्तं सोपपत्तिकं निरूपयितुमुद्युञ्जते । तस्मादियं मृता अमृता चेत्यभ्युपगन्तव्यमेव ।

**राम** — विरुद्धधर्माणामेकत्र समावेशः कथमभ्युपगन्तव्यः सूक्ष्मदर्शिभिः ?

**लक्ष्मण**— 'अस्तीत्येके नायमस्तीति चैके' इत्युक्तरीत्या पाश्चात्यानां तन्मतानुयायिनां चैषा मृतैव । अस्माकं तु नित्येयममरवाणी ।

**राम**— कैर्हेतुभिरेषा मृतेति निश्चिता पाश्चात्यैः ।

**लक्ष्मण**-- स्वीयेन दौर्भाग्येन ।

**राम**— कस्य ?

**लक्ष्मण**— उभयोरपि ।

**राम**— पाश्चात्यानां गैर्वाण्याश्च दौर्भाग्यमत्र निदानमित्याशङ्कत इव ते हृदयम् ।

**लक्ष्मण**-- आम् तथा— पाश्चात्याः प्रायः सर्वेष्वपि विषयेषु अभिनन्दनीयं बुद्धिवैशद्यमावहन्तीति सर्वविदितमिदम् । अथाप्येते गैर्वाण्याः स्वरूपं कात्स्न्येनावगन्तुं न प्रभवन्ति । गैर्वाण्यपि आत्मनः सौन्दर्यमस्माकं सर्वेणापि प्रकारेण प्रदर्शयन्ती पाश्चात्यैः केवलं चर्ममेदोमांसादिविरहिता अस्थिमात्रावशेषा परिदृश्यते । किं क्रियतामस्मिन् दैवायत्ते कर्मविपाके !

**राम**-- नेदं विश्वसनीयम् । भाषापठने सर्वेऽप्यधिकारिण एव ।

अस्माभिरवगता विषयाः पाश्चात्यैर्नाबोधिषत इति किल भवानाह।

**लक्ष्मण--** कः संशयः। पाश्चात्यानां भाषायां पाण्डित्यं नास्ति। छन्दसां अध्ययने यावानानन्दः, श्लोकानां पठने यावती रसस्फूर्तिः, रमणीयानां पद्यानामनुशीलने यावानाह्लादः, सरसानां गद्यानामुच्चारणे यावती च प्रीतिः समुन्मिषति इत्यादिकं स्वानुभवेनेमे ज्ञातुं न शक्नुवन्ति।

**राम--** किमेतावता?

**लक्ष्मण--** सरसैर्वाग्विलासैरावर्जितलोकलोचनां हावभावादिभिराकृष्टयुवजनमानसां सुन्दरीमनुपश्यन्तः कविवराः तस्या विलासविभ्रमादिकं प्रशंसन्ति। तामेव मूकीभूतवाग्व्यापारां रुग्णशय्यामधिगतामनुपश्यन्तो भिषग्वराः नासादीनामवयवानां च परस्परमानुगुण्यं जठरादीनां अन्तर्नाडीनां च मानोन्मानादिष्वैचित्र्यं च प्रशंसन्ति। एवमेव गैर्वाणीविषये वयं कविवराः पाश्चात्यास्तु भिषग्वराः। इयानेव भेदः।

**राम--** भाषायाः सौकुमार्यविज्ञाने अस्मदीयेष्वपि शास्त्रिवर्येषु परस्परमाशयभेद उपलभ्यते। इदमेवाभिप्रेत्य नीलकण्ठदीक्षितेनोक्तम्—

'वाचं कवीनामुपलालयन्यां
भुङ्क्ते रसज्ञो युवतिं युवेव।
तामेव भुङ्क्ते ननु तार्किकोऽपि
प्राणान्हरन्भूत इव प्रविष्टः॥' इति

**लक्ष्मण—** सत्यम् । तार्किकाः शाब्दबोधविचारतत्पराः, शाब्दिकाः प्रक्रियानिपुणाः, मीमांसकाः न्यायसंचारवेदिनः, वेदान्तिनः अध्यात्मरहस्यावगमबद्धदीक्षाः, स्वीयसंस्कारानुगुणं भाषाया रसमास्वादयन्ति । भिन्नरुचिर्हि लोकः इति न्यायमनुसृत्य रसास्वादनप्रकारे भेदः स्वाभाविक एव । अथापि भाषायाः सौन्दर्यसौकुमार्यादिविषये अस्मदीयपण्डितानां आशयः प्रायेण एकरूप एव ।

**राम—** पाश्चात्याः किमर्थमीदृशान्गुणान् न गणयन्ति?

**लक्ष्मण—** ते हि धातूनां प्रकृतीनां प्रत्ययानां च स्वरूपविज्ञाने महान्तं परिश्रममङ्गीकृत्य भाषाणां परस्परसंबन्धावेदकं नवीनं किमपि शास्त्रं निर्माय तदङ्गतया गैर्वाणीपठनोद्यममनुतिष्ठन्ति।

**राम—** इदमप्यावश्यकमेव किल ।

**लक्ष्मण—** अस्थीनि शरीरस्य आवश्यकानीत्यत्र कस्य वा विप्रतिपत्तिः? शुष्कास्थिपरिशीलनेन भाषायाः सौकुमार्यादिकं न ज्ञायेत । मनुष्यशरीरस्य वानरशरीरस्य च सौसादृश्यमनेकेष्वंशेषूपलभ्यते इत्यतो हेतोः मनुष्यो वानरात्समुत्पन्नः इति सिद्धान्तितं केनचित्पाश्चात्यपण्डितेन । एवमेव गैर्वाण्याः भाषान्तराणां च प्रकृतिप्रत्ययधातुस्वरूपेषु संवादः सादृश्यं वा वर्तते इति हेतोः तासामेकस्मिन्गणे निवेशः अङ्गीक्रियते । आर्यभाषागणः; द्रमिडभाषागणः, इत्यादयो भाषाशास्त्रे निरूप्यन्ते ।

**राम—** किं प्रयोजनमनया काकदन्तपरीक्षया ।

**लक्ष्मण**— भाषाशास्त्रं नामेदं वैदुष्यस्य निकषत्वेन परिगण्यते पाश्चात्यैः ।

**राम**— तर्हि यद्यद्भाषाशास्त्रे नोपयुज्यते तत्सर्वं पठनानर्हमिति ते विश्वसन्तीति प्रतिभाति ।

**लक्ष्मण** – विषयान्तराणां पठनेन बुद्धिवैशद्यं न लभ्यते इति ते विश्वसन्ति ।

**राम**— सर्वः कान्तमात्मीयं पश्यति ।

(क्रमशः ।)

॥ श्रीः ॥

## ॥ कुसुमम् ॥

—*—

भगवता विरिंचेन प्रपंचे किल बहुविधं विचित्रतरं हृदयाह्लादकं यद्वस्तुजालं विनिर्मितं । तत्र पुष्पमेवोच्चपदार्हं भवतीति ब्रूमः । कुसुमविनाकृता विश्वसृजः सृष्टिरेव नैतादृशं महिमानं विंदते स्म । कालमेतावंतं बहुभिः कविप्रवरैर्यानि विरचितानि काव्यानि जगतीतलमानन्दयन्ति तानि पुष्पव्यतिरेके हि प्रधान-विषयाभावान्नोत्पद्यन्ते स्म। चित्रपटान्यपि हृदयंगमालेख्याभावान्न शोभंते स्म । बहुविधभवतापतप्तस्यापि चित्तस्य यत्कुसुमदर्शने-नानितरसाधारणं सुखं भवति तत्कुसुमवैधुर्ये कथं नाम तत्कल्प-नापि स्यान्मनुजानाम् । किं बहुना— प्रसूनं नाम जगदीश्वरदत्तम-नर्घं वस्त्वित्याकलयामः । एतदुद्दिश्य जगन्नियंत्रे बहूनपि वितीर्णान् कृतज्ञतावादान् स्तोकानेव मन्यामहे । प्रसूनं नाम प्रमदानां

प्रीतिसर्वस्वमेव। तैः प्रतिदिनं भूषयन्ति वेणीमात्मनो ललनाः। पुरुषा अपि सभक्त्युन्मेषं देवपादमूले समर्पयन्ति सुमनोनिकरम्। प्रेषयंति च सप्रणयं सुहृत्प्रवरेभ्यस्तदा तदा। एतत्सर्वं सुमेषु विना हृदयंगमधर्मं कथं नाम संघटताम्।



सौरभ्यसौंदर्यमार्दवानि कुसुमानां मोहयंति मानवान्। विरलाः खलु तादृशा नरा येभ्यो न रोचन्ते कुसुमानि। भ्रमरमुखा क्षुद्रजंतवोपि सानंदं सझंकारं कुसुमान्यासेवन्ते। कृपालुना देवदेवेन प्रदत्तधिषणा मर्त्याः कथं नाम नासेवंतां। हंत विना रसनां निखिलज्ञानेंद्रियाणि प्रीणयति प्रसूनम्। तथाहि सौष्ठवेन नयनद्वयस्य प्रीतिमुपजनयति। सौगंध्येन घ्राणमाप्याययति। आलिकुलझंकारेण श्रुतियुगं सुखयति। मार्दवेन त्वगिंद्रियमाल्हादयति।

पाठकमहाभागाः, प्रफुल्लबकुलमल्लिकादिकुसुमभासुरमुपवनं तत्र इतस्ततो भ्रमतश्चंचरीकानप्यवलोयतो निखिलहरिदंतरविसृत्वरप्रत्यग्रोद्भिन्नपरिमलवाहिना मंदानिलेनानन्दितस्य कस्य वा मानसं विस्मृताशेषविषयं क्षणं न भवति। न केवलमानन्दमनुभूय तूष्णीं स्थातव्यं प्रज्ञावता मनुजेन। किंतु भवोपवनेऽपि विद्यमानानां सत्याहिंसाऽस्तेयब्रह्मचर्यादिसद्गुणसुमनोलतानामवनमप्रमादं विधाय सर्वत्र प्रसृतेन तद्गन्धेनागच्छतो लोकान्परितोषयित्वात्मापि परितोषणीयः। एतदेव लोकान्बोधयितुं सर्वेषां प्रीतिभाजनं कुसुमं नाम ससर्ज भगवान्विधिरिति प्रतीमः। अयमेको जागर्ति गुणः कुसुमे। य आबालवृद्धमादुर्गताढ्यं सममेव रंजयति लोकम्। यादृशी शोभा कुसुमेषु न तादृशी वैडूर्यादिम-

णिगणखचितेषु कृतकेषु कर्बुरमयपुष्पेषु ? विधातृनिर्मितेन कुसुमेन यादृशीं शोभां समवाप्नोति कबरी नारीणां तादृशीं सुवर्णकुसुमशतेनापि न लभते श्रियमेतन्नविस्मरणीयमाभरणलोलुपललनाभिलाषपूरकैः पुरुषधौरेयैः ॥

अयमपरो ग्राह्यो गुणः प्रकाशते पुष्पे । चिरं विन्यस्तमपि दुर्गंधिवस्तुसविधे कुसुमं न नैसर्गिकं गुणं जहाति ।

नरोपि तथा नैकदोषजालजटिले संसारे निवसन्न परित्यजतु सद्गुणगणं । रक्षतु च सद्वर्तनम् । सद्वर्तनमेव भूषणं समेषां । भवाम्बुधौ बहुदुःखरूपतरंगाघातविदूनः सद्गुणरूपप्लवमारुह्यैवाऽऽत्मानं त्रायेत । न हि पुष्पं बहिरंगसौष्ठवेनैव पूर्णां शोभामुपैति । अपि तु सौरभ्येणापि । तथा नरोपि न केवलेन देहनैर्मल्येन शोभां समवाप्नोति । किं तु सुसंस्कृतेन ज्ञानेनापि । उभयविधसौष्ठवेन समलंकृता महनीयचरिताः श्रीवासुदेवधर्मराजप्रभृतयः पुरुषप्रकांडा महीतलमिदं चिरमलंचक्रुः । अद्यापि शुभकीर्तिरूपेणालंकुर्वंति । विना ज्ञानादिसद्गुणगणं नार्यावर्तस्य भवति समुन्नतिः । यैः किल काम्येत भरतभुवस्समुन्नतिः तैरवश्यं संपादनीयं ज्ञानमिति शुभम् ।

रामाचार्य (गलगली)

॥ श्रीः ॥

## ॥ अस्मदीयदेवतार्चनम् ॥

(पूर्वतोऽनुवृत्तम्)

---*---

नावलेपदूषितश्चासीदिभेंद्रः ईश्वरमनन्यभावेन समर्चयत् ।

दृष्ट्वामामुपहसति जनता, उताऽभिष्टौति, अथवा निन्दति, इत्यादिकल्पनया न पूर्णमभवत्तस्य चेतः । ईदृशी निरहंकृतिः कास्मास्वाविर्भवति । ईश्वरभक्तानस्मान् जनता मन्येत ; तथा विज्ञाय, यत्र वयं यास्यामः, तत्रास्मान्मानयेत् । काममस्मान् प्रशंसेदिति च वयमीहामहे । अस्माकं पूजासमये यद्यपरेषामागमो भवेदुच्चैरुद्घुष्यामो मंत्राक्षराणि । गन्धाक्षतधूपदीपनैवेद्यादीन् समर्पयतामस्माकमभिवर्धते प्रागल्भ्यं । जनानां चित्तं वशयितुमेवास्माकं देवार्चनमिति मन्वानाः, यथा साध्नोति तत्कर्म, तथा वयं सर्वात्मना प्रयतामहे । जनान् प्रतार्य, देवार्चनमिषेण अस्मदीयकार्यं साधयामः । परेषां पुरस्ताद्देवार्चनचारुतां जल्पामः । अपरेषां ग्रामे गृहे सर्पिषाद्रनिकवर्तिभिर्विना न जिगमिषति देवार्चनम् । मिष्टान्नाद्विना नैवेद्यमेव न निर्वर्त्यते । अन्य एव पन्थाः अस्मदीयमन्दिरे । दीपिकामन्तराऽपि संतुष्यति देवः । सति च समये प्रहरपर्यंतमपि नावसानं यात्यपचितिः । एकदा पंचषनिमेषेष्वेवावसीयते सपर्या । अस्मासु संसृतितापजर्जरितेषु जातुचिदपचितिं याति संपूर्णतया मार्ष्टुं शक्नुमो महिषीशतं नत्वेकं शालिग्राममिति औदासीन्यं पदे पदे प्रादुष्कुर्महे । किं बहुना ? वर्ततां नाम भक्त्या समभ्यर्चनं देवस्य । प्रत्युत असह्यमनिवार्यं भवति तदर्चनम् । एतादृशदुरभिमानान्वितानां प्रागल्भ्यसंगमितानामर्हणया कथं प्रसीदेदीश्वरः ?

इत्थं मानसैकाग्रतामन्तरा दम्भाचरणेन देवमापूजयंतो वयं स्वार्थवागुरायां पतिता भवामः । ईशनमस्यादंभाद्याचरणेनाऽऽवगतवसुना कुटुंबपोषणमाचरामः । अनेकेषां दारिद्र्यदेवता-

ऽनुकंपादृगंचलभाजनीभूतानामामूलमुन्मूल्य हिरण्यम्, अरण्यं विधाय तन्निकेतनम्, विधाय देववेदिकायां तदीयस्वापतेयेनाखंडदीपिकाम्, सिद्धार्थमात्मानं कर्तुं वांछामः।

हन्त! हन्त!! दुराचारजालमेतादृशमस्मदीयमनुस्मरतां प्रकम्पते नश्चेतः। स्वेदजलस्नाता भवति गात्रयष्टिः। देवार्चनाय समानीतेषु कुसुमेषु अविशङ्कितमन्विष्य चानुत्तमानि, सहधर्मचरीसून्वादीन् परितोषयितुं प्रयस्यामः। जीर्णसर्पिषि देवमंगलार्तिक्यवर्तीनार्द्रीकर्तुं, तन्निवेदनीयं देवालये विनिधातुमथवा स्रोतस्वत्यां प्रक्षेप्तुं मोदकानारचयितुम्, द्वित्रैरपि घृतपूरितद्रोणैस्तुष्टिमनधिगच्छंतो वयं द्वित्रैरेव घृतकणैः देवनिवेदितं सेक्तुम्, न वहामः संशयकणिकामपि। ईश्वरविषये ईदृशीं कदर्यतां वहमाना वयं परेषां पुरतः देवार्चनडंबरं द्विगुणीकृत्य समीरयंतः 'सत्यं वद' इति निगमशतोद्घुष्टमुपदेशं दूरीकृतवतामेनसा लिप्यामहे। रहस्यनेकानि दुष्कृत्यानि समाचरंतो वयं श्रुतिमन्त इति निरातङ्कं निःसंकोचं देवमुपस्पृशामः। एतादृशस्वार्थपरायणानां नीचतमानामस्माकमभ्यर्हणया कथंकारं प्रसादपदवीमधिरोहत्वीश्वरः?

प्रियपाठकमहाभागाः, अस्मत्कृते अनन्तं सुखदायकं वस्तुजातमुत्पादितवन्तं भगवन्तं परमेश्वरं अनेकधा प्रतार्य अध्यन्तरङ्गं तमननुध्यायतां दंभाचरणेन सपर्यां कुर्वतामस्माकं न्याय्यः पंथाः? एतादृशार्हणया कथमनुगृह्णीयादीश्वरोऽस्मान्? वैराग्यज्ञानभक्तिविरहितानां अस्माकमर्चनातरुफलं वयमिदानीमुपभुञ्ज्महे। (क्रमशः।)

॥ श्रीः ॥

# ॥ वासन्तिकस्वप्नम् ॥

---*---

## प्रथमोऽङ्कः ।

श्रीब्रह्माच्युतशङ्करादितनुभृत्त्रैगुण्यमाश्रित्य य-
द्यद्वेदैः परिमृग्यमाणमपि सत्तत्त्वेन नो बुध्यते ।
यस्येच्छापरिसृष्टमेतदखिलं ब्रह्माण्डमद्वैतिनां
स्वप्ने दृष्टमिवावभाति तदिदं ध्यानैकवेद्यं नुमः ॥ १ ॥

(नान्द्यन्ते सूत्रधारः)

अलमलमनया वेदान्तजिज्ञासया ।

(सामाजिकानवलोक्य साञ्जलिबन्धम् ।)

सदसद्व्यक्तिपारीणानमितज्ञानसम्पदः ।
सहर्षभक्ति सभयं प्रणमामि सभासदः ॥ २ ॥

(नेपथ्याभिमुखम् ।) मारिष! किं विलम्ब्यते ।

**पारिपार्श्वकः**— (प्रविश्य) भाव, आश्चर्यानन्दसागरे किञ्चिन्मग्नः क्षणं स्तब्धोऽभवम् ।

**सूत्रधारः**— कुत एवम् ।

**पारिपार्श्वकः**— भाव, यद्वयं यत्र कुत्रचिद्वर्तमानाः क्षणादेवै-तेषाममन्दानन्दजनकमहिम्नां दिष्ट्याऽत्र काकतालीयत्वेन सङ्ग-

तानां विदुषां पुरतश्चिरादधिगतं नाट्यप्रयोगं हेमेव निकषेषु दर्शयितुमाहूताः स्मः ।

**सूत्रधारः**— स्थान एवात्र ते संमोदः । कथं पुनरपि किञ्चिच्चिन्तयन्निव दृश्यसे ।

**पारिपार्श्वकः**— अस्मदधिगतेषु परिषदाराधने श्लाघ्यतमं प्रबन्धं नाधिगच्छामि ।

**सूत्रधारः**— अये किं विस्मृतं त्वया! यदाङ्गलभौमदेशेऽवतार इव कविताया अस्मत्कालिदासादीनपि क्वचिदतिक्रान्तो निजयशोधवलीकृततद्देशजनः कश्चित् कविरद्यापि स्वग्रथितग्रन्थरत्नैर्जीवति किल । स एष **षेक्स्पियर**नाम यः परान् दृप्तान् कवीन् स्वनाम्नैव कम्पयति ।

**पारिपार्श्वकः**— आं स्मृतं मया । परं तद्विरचितानि सर्वाण्यपि नाटकानि सममेकां तुलामारोहन्ति । तेषु कतमदद्य प्रस्तूयताम् ।

**सूत्रधारः**— **वासन्तिकस्वप्नमेव** युज्यते। कालोऽप्ययं वसन्तः। तत्किं सर्वेऽप्यस्मद्वर्ग्यास्तत्प्रयोगोद्युक्ताः ।

**पारिपार्श्वकः**— वयं तत्र सज्जा हर्षवन्तश्च ।

**सूत्रधारः**— यद्येवं किन्न गीयते ।

**पारिपार्श्वकः**— किमधिकृत्य गास्यामः ।

**सूत्रधारः**— रे मुग्ध! वसन्तोऽद्य सर्वोत्कृष्टतया राजते ।

**पारिपार्श्वकः**— प्रत्युत्पन्नमतिरत एव भवान् सूत्रधारः ।

**सूत्रधारपारिपार्श्वकौ**— (सहर्षम् ।)

माद्यत्कोकिलकान्तनिस्वनमिमं श्रुत्वा प्रहृष्यज्जगत्
झङ्कारैरलयोऽतिमोदमधुना सर्वत्र सन्तन्वते ।
सर्वेषां नवमालिकादिकुसुमैरम्यैर्मधुस्यन्दिभि-
र्हृद्याः श्यामवनश्रियोऽमितमुदं संपादयन्त्यात्मनाम् ॥

**पारिपार्श्वकः**— (पार्श्वतोऽवलोक्य सभयम् ।) कथमस्मद्गीतमाधुर्याक्रान्तहृदय इवाद्य समग्रसामन्तमौलिनिवेशितमणिकिरणराजिरञ्जितचरणयुगलः, प्रथमे वयसि वर्तमानोऽपि सुरासुरदुरवगाहमहाबिलमद्वितीय एवावगाह्य, भीम इव बकम्, सङ्कर्षण इव वृषम्, वृषासुरमुन्मथ्य, संकटात्पितरमुन्मोच्य, निजबलविजिताशेषदृप्तराजराजिस्सम्पदा राजराजमप्यतिक्रान्तो रूपविभ्रमाकृष्टाशेषलीलावतीशेखरमणिरवन्तीनाथ इन्द्रवर्मा देव्या सहेत एवाभिवर्तते । तद्गच्छावः ।

(इति निष्क्रान्तौ ।)

(प्रस्तावना ।)

(ततः प्रविशति कनकलेखयाऽनुगम्यमानः सप्रमोदः सपरिवारो राजा इन्द्रवर्मा ।)

**राजा**—

प्रिये कनकलेखेऽद्य कुहूर्नेयं दवीयसी ।
चतुर्भिर्दिवसैर्भाविन्यप्यहं दीनमानसः ॥ ४ ॥

वसामि मदनाक्रान्तः शशाङ्कस्त्वतिनिर्घृणः ।
यतोऽसौ क्षीयमाणोऽपि सत्वरं क्षीयते न मे ॥ ५ ॥

अस्मदुद्वाहमुद्दिश्य सोऽस्मि पर्युत्सुकः सखि ।
किं करोमि वरारोहे, नाडिकाऽपि युगायते ॥ ६ ॥

**कनकलेखा**-- वल्लभ, दिनचतुष्टयं तु प्रायो रात्रिचतुष्टयं भूत्वा क्षणमिव निद्रालुभिरस्माभिर्नीयमानमचिरेणैव दर्शमानेष्यति यस्य निशायामावयोः परिणयमहोत्सवो भविष्यति । तत्किमिति दूयते महाराजेन ।

**राजा**-- रे प्रमोद, गच्छ सम्प्रति प्रतिरथ्यमस्मन्नगरस्य । तथा कुरुष्व यथा सर्वेऽपि युवानो महोत्सवाभिनिविष्टचित्ताः परमाह्लादभरिता वर्तेरन् । दुःखं विद्रावय वैवस्वतनगरमावर्जय सर्वतः प्रमोदम् ।

**प्रमोदः**— यथाज्ञापयति देवः । (इति प्रणम्य निष्क्रान्तः ।)

**राजा**-- प्रणयवति कनकलेखे, जितवानस्मि त्वामसिधारया, तवाप्रियं कृत्वाऽभवं प्रियस्तव। तस्मादद्य तादृशमप्रशस्तमार्गमुज्झित्वा महोत्सवप्रमोदप्रसाधनपूर्वं त्वां परिणेष्ये ।

(नेपथ्ये पदशब्द इव निपुणं निरूप्य ।)

किमयमागच्छन् वृद्धः कोपशोकाविष्ट इव दृश्यते । तमनु द्वौ युवानौ काचिदिन्दुवदना च ।

(ततः प्रविशति इन्दुशर्मा वसन्तः मकरन्दः कौमुदी च ।)

**इन्दुशर्मा** — (हस्तमुद्यम्य) विजयतामस्माकमवनिपः ।

**राजा**— नमो भवत इन्दुशर्मन्, कथं कार्यातुर इव दृश्यते भवान् ।

इन्दुशर्मा—

राजन्नियं मे दुहिता मदाज्ञा-
मुल्लङ्घयेदित्यतिदुःखितोऽहम् ।

(मकरन्दं तर्जन्या निर्दिश्य ।)

एतं वरं सम्मतमेव कन्या
सम्प्राप्य मे नन्दतु कौमुदीयम् ॥ ७ ॥

(ततो वसन्तं सक्रोधं दृष्ट्वा पुनरपि राजानं प्रति ।)

महाराज, दीयतां दयार्द्रं चित्तम् । अयं यौवनमत्तः कलाभिमानी तैस्तैरुपायैरेनां बालां मे दुहितरं मोहयित्वा वशीकरोति तन्मनः । (सरोषविस्मयं वसन्तं प्रति ।)

रे रे वसन्त,

अहो ! ते गानमाधुर्यमहो ! ते वाक्यपद्धतिः ।
अहो ! वैदग्ध्यशालित्वं स्त्रीमनोहरणे तव ॥ ८ ॥

यतः

आकृष्टवानसि मम प्रियकन्यकाया-
श्चेतः प्रमुग्धमधुना मृदुचाटुवाक्यैः ।
ज्योत्स्नाभिरामगृहजालमुपाश्रितोऽस्याः
कर्णेऽनुरागरसवर्षि करोषि गानम् ॥ ९ ॥

तत्साम्प्रतम् ।

तथा मुषितचित्ताऽभूत् कौमुदीयं त्वया शठ ।
यथा न गणयत्येषा पितरं तद्वचोऽपि वा ॥ १० ॥

त्वया प्रेषितवस्त्रादि ह्यल्पञ्च बहु मन्यते ।
(राजानम्प्रति ।)
न कोऽप्यत्र मया निन्द्यो राजन् कुरु दयां मयि ॥

यावदियं वराकी मकरन्दमुपयम्य मन्मतन्त्रानुवर्तते तावदस्मद्देशाचारमनुसृत्य पित्राज्ञाऽतिवर्तिनोऽपत्यस्य यावान् दण्डो विहितस्तावन्तमेषाऽनुभवत्वित्याज्ञां दत्त्वाऽहमनुग्राह्यपक्षे गणयितव्य इति प्रार्थये ।

**राजा**— (कौमुदीं प्रति ।) कथय वासु, किं वा युक्तं समयविरुद्धाचरणम् ।

प्रायो जनयिता तन्वि कुमारीणां हि दैवतम् ।
बिम्बस्य तस्य यत्पुत्र्यः प्रतिबिम्बपदं श्रिया ॥ १२ ॥

किञ्च । रमणीयोऽयं तरुणस्ते वरो मकरन्दः ।

**कौमुदी**— महीपते, तथैव वसन्तोऽपि ।

**राजा**— बाले, वसन्तः प्रियदर्शनोऽपि पितृपक्षपातोऽस्मिन्निति तव प्रेयान् मकरन्द एव ।

**कौमुदी**-- यदि मे जनको वीक्षते मदीक्षणेनैनं वसन्तं तदा बहुमानयिष्यति स एव मन्मानसम् ।

**राजा**— परं तद्विवेचनामाश्रित्य खलु वीक्षणीयं त्वया ।

**कौमुदी**— करुणानिधे क्षम्यतां दासजनस्यायमपराधः । न जाने केन वा कारणेन मे मनस्येतादृशनिर्णयो जातः । विस्मृतं च मया महानयमनयो यद्राज्ञः सन्निधावेवमाचरितम् । तातनिदे-

शाननुरोधेन यन्महदनिष्टं भावि तन्मे निरूपयतु महाराजः ।

**राजा**— अयि भद्रे, दर्शनीयं ते वपुः । अयातयामं वयः । सर्वजनमहनीया जातिः । अभंगुरा तारुण्यधोरणी । तत्सर्वमेकपद एव मा कृथा वृथा । यदि पितरं नानुवर्तसे तदा शरणं भवति मरणमथवा यावज्जीवं परिणयाकरणम् । उक्तञ्च 'नास्ति जीविताद‌भिमततरमिह जगति जन्तूनाम्'। रमणरहितत्वं हि रमणीनां त्वादृशीनां मरणादपि कष्टतरम् । तथात्वे सर्वतोऽपि दुःखम् । न केवलं तवाभिमतवल्लभानवाप्तिशोकः । एतादृशकुलसमयाचारविरुद्धगामिन्या सुखं नाम कथं भवेत् तव पितुर्मातुर्वा । मर्मच्छेदी खल्वेष वृत्तान्तः सर्वबन्धूनाम् । परिहास्योऽयमन्येषाम् । तज्जातमामरणं किल हृदयशल्यं सर्वेषाम् । सैषा ते मतिर्न कल्याणी, न कदाऽपि सुखावहा । तदपरज्य वसन्तान्मकरन्दमेव प्रतिपद्यस्व ।

**कौमुदी**— महाराज, यद्भावि तद्भवतु । वसन्तं विहाय नान्यं पश्येयम् । तदर्थं जीवितमपि त्यजेयम् । यावदायुः परिणयं विनापि वसेयम् । एष एव निश्चयोऽस्या मन्दभागिन्याः ।

**राजा**—

**कालेनालोच्य वक्तव्यं बालेऽस्मिन् विषये त्वया ।**
**दर्शः कृतोऽवधिस्तस्मिन् ब्रूहि मे तव निर्णयम् ॥ १३ ॥**

**मकरन्दः**— (सविषादानुनयं कौमुदीं प्रति)

**सरले प्रसीद मा मां त्वद्रागाविष्टचेतसं मुञ्च ।**

सासूयं वसन्तं प्रति ।)

अन्याय्यस्तव रागस्तातनिदेशो हि बहुमान्यः ॥ १४ ॥

**वसन्तः**— (मकरन्दं प्रति ।) त्वं तावत्प्रियोऽस्याः पितुः । अहन्त्वस्या एव । अपि नामेहसे तस्योपयमम् ।

**इन्दुशर्मा**— (सभ्रूभङ्गम् ।) किमात्थ रे जाल्म वसन्तहतक, सत्यमेव मत्प्रेमाधिक्यं वहति मकरन्दः यद्यन्मदीयं तत्तदस्मै प्रेम्णा दातुं सज्ज एवाहम् । इयं तु मदीयैव नान्या । यत्प्रभुत्वममुष्यां मे वर्तते तत्सर्वमद्य दीयते मकरन्दाय ।

**वसन्तः**— (राजानं प्रति ।)

विशिष्यते न मत्तोऽयं जातिरूपवयोधनैः ।
सौशील्येनापि भो राजन् स्त्रीमनोहरणेन वा ॥ १५ ॥

महीपाल, वरीयानत्रानुराग एव कन्यकायाः । अन्यदप्यत्र द्रष्टव्यम् । सत्यमेव यथेयं कौमुदी मय्यनुरागिणी तथैवास्मिन्नपि प्रणयवती काचिदुत्पलाक्षी वर्तते । सैषा सौदामिनी नाम । तां खल्वेष मकरन्दः प्रथमं प्रणयेन वशीकृत्य साम्प्रतं कौमुदीमपि कामयते । नैषा सज्जनाचरिता सरणिः । किं बहुना ।

एनं विचिन्त्य मदनज्वरतापतप्ता
सौदामिनीह परिखिद्यति निर्दयोऽयम् ।
एनां प्रमोह्य पुनरप्युपयन्तुमन्यां
धूर्तोयमिच्छति वरं न हि तस्य वृत्तम् ॥ १६ ॥

## देशवृत्तान्ताः ॥



उदाराशयः श्रीमान् शङ्करनायकः भारतवर्षभरणाधिकृतस्य चक्रवर्तिप्रतिनिधेः निर्वाहकसमितौ सर्वविद्यासाचिव्यपदे नियुक्त इति महदिदं भागधेयमस्माकम् । राष्ट्रे सर्वेणापि प्रकारेण सौभाग्यवर्धनमेव जन्मनः साफल्यमिति मन्वानोऽयं महाशयः गैर्वाण्याः प्राकृतानां च भाषाणां समुन्नतये यावच्छक्यं प्रयतेत इति दृढं निश्चिनुमः । प्राचीनग्रन्थानाम मुद्रितानां वांम्रभिः प्रायेणाक्रान्तानां शोचनीया दशा सर्वविदितैव । गैर्वाण्यामत्युत्तमं पाण्डित्यं संपादितवतामपि कुटुम्बभरणाशक्तानां विपश्चिद्वराणां यावच्छक्यं राजकीयसाहाय्यं दापयित्वा तन्मुखेन प्राचीनानां कोशानां बहिरवतारणे महानुद्यम आवश्यक इति नेदमविदितं सदसद्विवेचनचणानां विवेकिनाम् ॥

---

# தர்மாகூதம்

இப்பெயர் கொண்டதோர் அபூர்வ கிரந்தம் தஞ்சாவூர் ஸரஸ்வதிமாலிலிருந்து கண்டெடுக்கப்பட்டிருக்கிறது. இது ஸ்ரீமத் வால்மீகிராமாயணத்தின் பேரில் மிகவும் எளிய ஸம்ஸ்கிருத நடையில் ஆறு காண்டங்களுக்கும் ஆறு உபந்யாஸங்களாக இருக்கிறது. இந்த கிரந்தம் எழுதியவர் தஞ்சாவூரில் அரசாண்டு வந்த எக்கோஜி ராஜாவினுடைய மந்திரியாயிருந்த திரியம்பகராய மகி என்பவர். வால்மீகியானவர் ராமாயணத்தை கதைக்காக எழுதவில்லை. ராமாயணம் முழுமையும் தர்மத்தை பிரதிபாதனம் செய்வதற்காகவே ஏற்பட்டது என்பதாக பல உதாரணங்களால் உள்ளங்கை நெல்லிக்கனிபோல் இதில் எடுத்துக்காட்டப்பட்டிருக்கிறது. இப்புத்தகத்தை ஸஞ்சிகை ரூபமாக வெளியாக்க உத்தேசித்திருக்கிறோம். ராயல் 16 பக்கம் அளவுள்ள 200 பக்கங்களடங்கிய ஸஞ்சிகை ஒன்றுக்கு கிரயம் ரூபாய் 1 வீதம் கொடுக்கப்படும். வேண்டியவர்கள் உடனே எழுதி தங்கள் பெயர்களை ரிஜிஸ்தர் செய்துகொள்ளவேணும். கிரந்தத்தின் மாதிரி தெரியவேண்டுமானால் மாதிரி பக்கங்களும் அடியில் கண்ட விலாஸத்துக்கு எழுதினால் கிடைக்கும்.

மானேஜர்,

ஸ்ரீவாணீ விலாஸ் பிரஸ்,

ஸ்ரீரங்கம்.

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,
Vidyanidhi.

VOL. XX. No. 2.



PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM AND PUBLISHED AT MADRAS.

 Registered No. M. 103.

# विषयाः ।





# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).
6. Annual subscription is Rs. 3 only including postage.



तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ] राक्षसवर्ष वैशाखमासः । [ संचि. २.


## सुभाषितानि ।



देवे समर्प्य चिरसंचितकर्मजालं
स्वस्थाः सुखं वसत किं परयाचनाभिः ।
मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य
ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ १ ॥

सिंहो बली गिरिगुहागहनप्रवासी
वासोदरे वसति भूमिभृतां बिडालः ।
नो पौरुषं कुलमपि प्रचुरा न वाणी
दैवं बलीय इति मुञ्च सखे विषादम् ॥ २ ॥

सदसि विदुरभीष्मद्रोणशारद्वतानां
पतिभिरमरकल्पैः पञ्चभिः पालितापि ।
अहह परिभवस्य द्रौपदी पात्रमासीत्
बलवति सति दैवे बन्धुभिः किं विधेयम् ॥ ३ ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

( पूर्वतोऽनुवृत्तम् )

प्रथमं तावदमूल्यानां रत्नानामोषधीनां च निलयोऽयं शैलेन्द्रः प्रशस्यं सौभाग्यमावहतीत्याकलयन्ननुपदमेव प्रलयेष्वदर्शनं गच्छद्भिरनित्यैरन्यतोऽधिगतैः रत्नैरनेन किं नाम लोकोत्तरं सौभाग्यमुपलब्धमित्याशङ्कमान इवायं महाकविः प्रलयादिभिरविकृतां नित्ययौवनां नित्यां चिन्तितफलप्रदां अमेयवैभवां अमरैरप्यनुचिन्त्यमानगुणगणां त्रिलोकसुन्दरीं भवानीं **रमणीरत्नमात्मनः** शरीरादुत्पाद्य लोकानामत्यन्तमुपकृतवतोऽस्य गौरीगुरोः सौभाग्यमियत्तया परिच्छेत्तुं नालमित्याशयेनाह– **'अनन्तरत्नप्रभवेति'** ॥

इह प्रथमेऽर्धे हिमेनास्य सौभाग्यं मात्रयापि न परिलुप्यते इति निर्दिशन्नेष कविः अनुक्षणमेव हिमसन्ततिर्नामेयं अन्येषां सौभाग्यं विलुम्पति गौरीगुरोस्तु न तथा, अपि तु कामप्यपूर्वां शोभामापादयतीति निश्चिन्वानः तमिममाशयं रमणीयेनार्थान्तरन्यासेनानक्षरमावेदयतीव । अत्र 'मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति', 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इत्यस्यैव कविसार्वभौमस्य सूक्तिः प्रमाणीभवति सूक्ष्मदर्शिनाम् ॥

सर्वेणापि प्रकारेण दोषत्वेन वा गुणत्वेन वा परिगणनीयमिह वस्तु नास्त्येव जगति, परमीश्वरेच्छया देशकालद्रव्यानुगुणं एकस्यैव वस्तुनो दोषत्वेन गुणत्वेन वा परिणामस्तदा तदा संपद्यते इत्यात्मनो दृढं विश्वासम् 'विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया' इत्यादिनावबोधयन्नसौ महाकविरत्रापि क्षुद्रेषु पर्वतेषु दोषत्वेन परिणतं हिममेव अत्युच्छ्रितैः शृङ्गैरम्बरतलमाक्रम्य स्थितं महाकृतिनं शैलेन्द्रमिममाश्रित्य भागीरथ्यादिमहानदीनामनन्तानामुत्पत्तिकारणमभूदित्याशयेनैव (दोषः) दोषत्वेन व्यवहृतः (एकः) पदार्थः अभिनन्दनीयानेकगुणसमवाये निपतितः गुणेष्वेव लयमापन्नः स्वयमपि गुणत्वेन परिणमति— इत्युपदिशति लोकस्य ॥

एवं महात्मनो हिमालयस्य हिमसन्ततिः गङ्गादिमहानदीनामुत्पादनशक्तिं जनयन्ती लक्ष्मीमधिकां तनोत्येवेत्यवगमयन 'सौभाग्यविलोपि' इत्यनेन निर्दिष्टं सौभाग्यं कीदृशमिति वर्णयितुमुपक्रमते 'यश्चेत्यादिना' ॥

अनुत्तमलावण्यवतीनाममरवनितानामपि स्पृहणीया प्रसाधनसामग्री गिरिराजस्यास्य शिखरेषूपलभ्यते इतीह व्याहरन्महाकविः सुरसुन्दरीणां प्रसाधनायात्यन्तमावश्यकं निर्मलं दर्पणमपि हिमालये सुप्रतिष्ठितमित्याद्याशयम 'त्रिदशवनितादर्पणस्यातिथिः स्याः' इत्यन्यत्रोपक्षिपन्— नगेन्द्रस्यास्य सानुष्वेवावस्थिता हिमसन्ततयः शिखराण्याक्रमितुं तत्र विलसतः सौभाग्यापादकान् धातून् विलोपयितुं वा न प्रभवन्ति— इति '**शिखरैर्बिभर्ति**' इत्यनेन सुस्पष्टमवबोधयति ॥

पद्यमिदमनुध्यायतामस्माकम्—

स निघृष्याङ्गुलिं रामो धौते मनःशिलोच्चये ।
चकार तिलकं तस्या ललाटे रुचिरं तदा ॥

बालार्कसमवर्णेन तेजसा गिरिधातुना ।
चकासे विनिविष्टेन ससंध्येव सिता निशा ॥

इति कविकोकिलेनोत्प्रेक्षिता सरणिः स्मरणपदवीमास्कन्दति । 'सन्ध्यानुगतपर्यन्तः पयोधर इवाभवत्' इति च सन्ध्यारागशोणितं पयोधरमसकृदभिवीक्ष्य तद्दर्शनजनितमात्मनः प्रमोदमुपमानमुखेन सहृदयेभ्यो निवेदयतः प्राचेतसादधिगतसंस्कारोऽयं कविः, रघुवंशेऽपि 'ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला । बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम्' इति प्रकारान्तरेण आदिकाव्यप्रकाशितां पद्धतिमनेकधा अभिव्यञ्जयति । 'सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः' इति वर्णयन्नादिकविरमुमेव शैलेन्द्रं सुभगानामादर्शत्वेन निर्दिशन् 'धातूनामिव शैलेन्द्रो गुणानामाकरो महान्' इत्यादिना धातुमत्तैव गिरिराजस्य प्रशस्यतमा गुणसंपत्तिरिति च सूचयति किल ॥

हिमसन्ततिसीमामतिक्रान्तानि हिमालयस्य शिखराणीतीह वर्णयन् महाकविः प्रसङ्गतो मेघमण्डलमप्यतिक्रान्तमस्यौन्नत्यमिति निर्देष्टुमारभते— आमेखलमित्यादिना ।

आमेखलं संचरतां घनानां
छायामधः सानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५ ॥

पूर्वं वलाहकच्छेदेषु विभक्तरागामकालसन्ध्यामिवेत्यादि वर्णयन् अनुपदमेवास्मिन्पद्ये तेषां वलाहकानामधच्छायां निषेवमाणाः सिद्धाः भ्रमेण सन्ध्योपासनप्रवृत्ताः वृष्ट्यात्मना परिणतेषु तादृशेषु घनेषु सन्ध्यारागमपश्यन्तः किञ्चिदिवोद्विग्नाः अम्बरमणिरस्तं गतो वा न वेति संदिहानाः शैलेन्द्रस्य शृङ्गाण्याश्रित्यातपं दृष्ट्वा स्वस्था भूत्वा शृङ्गेष्वेवावस्थितिं बहुमन्यन्ते— इत्याशयोऽस्माकं हृदयगह्वरमापूरयति ॥

कार्यसिद्धिमुपलब्धवतां अविज्ञातशीतवातादिखेदानां दरीमुखेषु कृतावासानां सिद्धानां मर्त्यानामिव वृष्टिभिरुद्वेगः आतपसेवनेनामोदः संपद्यते— इत्याशयः नातीव हृदयङ्गम इव प्रतिभाति । अत्र सहृदया एव प्रमाणम् ॥

अज्ञानतिमिरमग्ने अधस्तनेऽस्मिन् लोके अनित्यान् पार्थिवान् भोगान् निषेव्य दुःखसन्ततिभिरुद्वेजिताः विपश्चिद्वराः निगमशिखराण्याश्रित्य ज्ञानालोकमवाप्य सिद्धा भवन्तीति ध्वनिरस्मिन्पद्ये समुपलभ्यते इति भावुका मोदन्ते ।

हिमेन वलाहकेन वागम्याण्यस्य शिखराणि अन्यादृशेन सौभाग्येन विलसन्तीति वर्णयन्महाकविः हिमसन्ततिभिराच्छन्नाः प्रदेशा अपि प्रेक्षकाणामानन्दमुपजनयन्त्येवेति बोधयितुमुपक्रमते —'पदं तुषारेत्यादिना'।

**पदं तुषारस्रुतिधौतरक्तं**
**यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।**
**विदन्ति मार्गं नखरन्ध्रमुक्तै-**
**र्मुक्ताफलैः केसरिणां किराताः ॥ ६ ॥**

कविसमयैकगम्यानि करीन्द्रमस्तकोपलब्धानि केसरिणां नखरन्ध्रेभ्यो निपतितानि मुक्ताफलान्यसंख्येयानि सिह्मानां मार्गमावेदयन्ति किरातेभ्यः इत्यर्थः व्याख्यातृभिरनुवर्ण्यते ।

अत्रेदमवधेयम्—करीन्द्राणां मस्तकेभ्यो मुक्ताफलानि न केनापि साक्षादधिगतान्येतावतापि कालेनेति श्रुणुमः । तादृशानि मुक्ताफलानि असंख्येयानि मार्गे निपतितानीत्याशयः अतिशयोक्तिकोटिमाटीकते ।

वस्तुतस्तु— घनीभूतेषु हिमप्रदेशेषु अत्यन्तं रोषेण पर्यटतां मृगेन्द्राणां नखद्वयान्तरालाद्बहिः संघर्षवशान्निःसृतानि मुक्ताफलाकाराणि हिमशकलान्येवासंख्येयानि मार्गमावेदयन्तीत्याशय एव स्वारसिकः स्वभावोक्तिसरणिमनुसरतीति विमर्शका मन्यन्ते । अत्रापि सहृदयाः विशेषतो हिमप्रदेशसंचरणशीलाः प्रमाणम् ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ अघोरकामिनी ॥

——*——

इदानीं सर्वप्रकारेणोन्नतिमापन्नायां मेदिन्यां नाद्यापि शिक्षणमावश्यकं लभन्ते ललनाः । महदिदं विषादास्पदम् यत्पुराणश्रवणमात्रावगतपुरातनसीमन्तिनीस्वभावा अविदिताक्षरा अद्यतना अबला इति ।

काचिदेव दृश्यन्ते किल प्राचीनललनामणीनां सादृश्यं वहन्त्यः परोपकारपरिघटितपरिकराः सर्वभूतहिते रताः पतिदेवताः पर-

पुरुषसहोदर्यो निजैस्सद्गुणैरपराशिक्षयन्त्यो नार्यः ।

एतास्वेव परिगणनीया धन्यतमा साधुवादार्हा वङ्गदेशसमुद्भवा देवी 'अघोरकामिनी' नाम्नी ।

अस्याः किल महानुभावाया जीवनवृत्तान्तं विलिख्य लेखनीं सिद्धार्थां कर्तुमभिलषामः । विलिखितमेनमवलोक्य वाचकमहाभागा अपि चरितनायिकाधवानुकरणे मनागपि प्रयतेरन्निति नो बलवती प्रत्याशा । देवीयं क्रिस्तीये १८५४ तमे वत्सरे विख्याते 'टाकी' नाम्नि ग्रामे जन्मनाऽऽत्मनो मण्डयाञ्चकार मण्डलं वङ्गभुवः । एनां क्रि. शा– १८६० तमे वर्षे बाल्ये वर्तमानामेवोपयेमे 'बाबू-प्रकाशचन्द्र' इति नाम्ना प्रथितो महोदारः पुरुषधौरेयः । तदा किलाशिक्षितैवासीदियम् ॥

सर्वशिक्षणपारावारपारीणा अपि वङ्गीयाः स्त्रीशिक्षणेऽकृतमतय एव दृश्यन्ते । दृढमूला किलैतेषां शेमुषी— शिक्षणेन समीचीनमपि कुलाचारं परित्यक्ष्यन्ति; स्वीकरिष्यन्ति च वामाचारं वामा इति । बाबूप्रकाशचन्द्रस्तु नैतेषां बहुमेने मनीषां । न शिक्षणमन्तरा सुलभं ज्ञानम्, विना ज्ञानेन नोद्भवति कार्याकार्यविवेकः । कार्याकार्यविवेकवैधुर्ये हि कुतो वा सुखाशा मनुजानाम् । अतस्सुखाभिलाषिणां सर्वेषां ज्ञानमावश्यकं । तदर्थं शिक्षणमपि ॥

कथं च शास्त्रनिषिद्धमित्युद्घोषयन्ति वङ्गीया इमे योषितां शिक्षणम् । न हि पुरुषा एव प्रिया भवन्ति तत्रभवतां शास्त्रकृताम्, येनेदं युक्तं स्याद्वक्तुं । इति विचिंत्य हन्त सर्वथा प्रदेयं स्त्रीभ्यः शिक्षणमिति निश्चित्य च गृहकार्यव्यापृतायाः प्रियाया दिवादर्शनस्यैवाऽसुलभतया भीत्या च गुरुजनानां शिक्षयति स्म निशायां

दयिताम् । अल्पावकाशभावितया शिक्षणस्य, बाल्येन प्रियाया असहायतया च विफलमेवाकरोत्पत्युः प्रयत्नं देवी ॥

एवमेव गतेषु कतिपयदिनेषु अधिगते च स्वातन्त्र्ये नक्तंदिवमात्मनश्शिक्षणे प्रयतमानं पतिं प्रकाशचन्द्रं सफलप्रयत्नं व्यदधादघोरकामिनी ॥

वङ्गदेशे कासांचिद्ग्रामवाटिकावासिनीनां नारीणामयमाचारः, केनचिच्चूर्णेन दन्तानां नीलिमाऽऽपादनरूपः । एतेन प्रियपुरुषप्रेक्षणीयं किमपि सौन्दर्यं परिस्फुरतीति मतिस्तासाम् । नाभवन्मनस्तोषाय प्रकाशचन्द्रस्यायमाचारः । विदित्वैतत्कुशला देवी योषितां वेषस्य प्रियपूरुषपरितोषार्थत्वात्स यदि न मोदते, किं तेन वेषेणेति विचार्य, नैसर्गिकतेजोविघातकं प्रियानपेक्षितं च सर्वं परित्यजन्ती सहमाना तन्निमित्तं बंधुजनैः क्रियमाणं परिहासम्, सर्वथा दयितमतानुवर्तिनी दयितं प्रीणयति स्म ॥

कान्तेन कान्तायै कान्तया कान्ताय वा मिथः पत्रप्रेषणे, परिहासबीजं चिरं विमृशन्तोपि वयं न विन्दामहे । विषीदामश्च मुधा दम्पत्योः परस्परं पत्रव्यवहारे दोषारोपमवलोकयन्तो रमणबान्धवानाम्, न ह्यन्यदस्ति पत्रीप्रेषणात्प्रेमप्रवृद्धिसाधनं विरहक्लेशशामकं च मिथो जायापत्योः । हन्त! तरुण्या रमणाय पत्रप्रेषणं नाम, कृतं महापातकेष्वन्यतममाकलयन्ति कुशला अपि ॥

जातु चित्स्नुषया विदेशं गतवते कान्ताय प्रहितपत्रोदन्तमधिगतवतोः श्वश्रूश्वशुरयोः को वा वर्णयितुं पटुर्गालीदानं तस्यै स्नुषायै परं ॥

( क्रमशः ।)

॥ श्रीः ॥

# ॥ नारदनैपुणी ॥

—*—

## प्रथमो निःश्वासः ॥

पुरा सुधर्मायां सुमेरुशृङ्गाभं सिंहासनमधितिष्ठति महेन्द्रे, उर्वशीप्रभृतयोऽप्सरसः चित्रसेनसनाथा गातुमारभन्त । एकतो नारदादिभिर्महर्षिभिरपरतो जयन्तप्रमुखैर्लेखैश्च सभा पूरितासीत् । गानश्रवणात्सानन्दहृदयो देवेन्द्रस्सभास्तारानित्थमवादीत् ।

"भोः, भोः, सदेवाः तपोधनाः! अन्यादृशमेव पश्यामि सङ्गीतस्य माहात्म्यम् । चतुर्दशस्वपि भुवनेषु वर्तमानानामसंख्यानां चेतनजातानामपरिमितमानन्दं वितरतोऽस्य श्लाघ्यैव सा नैपुणी । मर्त्योऽमर्त्यो वा भवतु, आहोस्वित् त्रिमूर्तयोऽपारे दुःखसागरे निमग्ना अपि सङ्गीतश्रवणादेव हृष्टान्तरङ्गा भवन्ति । किं बहुना? विवेचनाशक्ता हरिणादयोऽपि पानमात्रेण सङ्गीतामृतस्य दूरीकृतव्यापाराः निस्पन्दास्तिष्ठन्ति । महर्षे! गानप्रिय! नारद! कोऽत्र भवतोऽभिप्रायः?"

**नारदः**— सत्यमेवेदं, तन्माहात्म्यविवरणे नालं गुरुशेषावपि । सत्येवं को वासौ मशकप्रायः? यदि साधारणस्य गेयस्यैतावन्माहात्म्यं तदा विडम्बितकलकण्ठस्वनानां रम्भामुखानामप्सरसां शङ्खसमानात्कण्ठाज्जायमानं गानं कः पारयति वर्णयितुं? कदाचिज्जानीरन्ननुभूततत्फला विश्वामित्रादयो मुनिपुङ्गवाः । नास्माभिः पार्यते— महर्षे! विश्वामित्र! मा कुप्यतु

भवान् मेनकायै । आस्तां तत्— चित्रसेन! अपि भवाने: वा विनेता गेय एतासाम् ?

**चित्रसेनः**— आं तपोनिधे! सर्वमपि भवतां प्रसाद एव ।

**इन्द्रः**— चित्रसेन! सम्यक्, सम्यक्, अतीव सम्यक् । सकृद- प्यानन्दय गानेन मनः सभ्यानाम् ।

**नारदः**— मघवन्! एतावताऽप्यासेचनकं विना न भवत्यत्र विरक्तिः ।

**इन्द्रः**— चित्रसेन! सकृदपि गानमेकम् । महर्षे! अस्ति किमत्र श्रमो भवतः ?

**नारदः**— कोऽत्र श्रमोऽस्माकम् । संगीतं नामेदं गायतां शृण्वतां चाऽऽनन्दप्रदं खलु । ओं भवतु । (अप्सरस्सु गेयान्तरं गायन्तीषु सदस्याः श्लाघितुमारभन्ते)

**इन्द्रः**— साधु, साधु, गानमेतत्कर्णानन्दकरमध्यापितवतो भवतः किमस्त्यनुगुणं पारितोषिकम् ? चित्रसेन! पृच्छाऽभीष्टं प्रय- च्छाम्येष सप्रमोदम् । (उर्वशी चित्रसेनस्य श्रोत्रे किमपि ब्रवीति)

**नारदः**— आं मघवन्! रमणीयं गेयं मङ्गलार्थमहितं च । तात्पर्यन्त्वस्याऽष्टमहिषीसनाथासु गोपीषु षष्टिसहस्रासु समा- सन्नास्वपि निश्चलस्वान्तस्य ब्रह्मध्यानपरस्य भगवतो वासु- देवस्य चरणारविन्दमेव शरणमस्माकम्' इति । सम्यक् स- म्यक्, अतिरमणीयोऽभिप्रायः । दोषास्पदेषु योषाजनवचनेषु न खल्वस्मन्मनः प्रवर्तितव्यम् । सत्यं— चित्रसेन! अवधेहि ।

**चित्रसेनः**— सर्वसम्पत्सम्पूर्ण एवाऽस्मि भवत्प्रसादेन । मदभि-

लाषविषयीभूतस्य भवत्कनिष्ठिकामलङ्कुर्वतोऽङ्गुलीयकस्य वितरणेनाऽनुगृह्णातु मां तत्रभवान् ।

**इन्द्रः**— इदं वा ? सम्यक् गृहाण । ( इत्यङ्गुलीयकं ददाति— चित्रसेनोऽपि तत्प्रश्रितः स्वीकरोति ) जयन्त ! रम्भादीनां चतसृणामासामप्सरसां कोषान्नः प्रयच्छाऽभिलषितान्याभरणानि ।

**जय**— यथा निदेशः ।

**इन्द्रः**— इतः परं सभा विचलितव्या । तपोधनाः ! भवतामनुग्रहः ।

**ऋषयः**— जय विजयी भव ! ( सभा विचलति )

**नारदः**— चित्रसेन ! न खलु विस्मर्तव्यं मद्वचनम् ।

[ सर्वे गच्छन्ति ।

इति प्रथमो निःश्वासः ॥

---

## अथ द्वितीयो निःश्वासः ॥

दिननाथो नभस्सञ्चरणश्रमापनोदनार्थमिव निममज्जाऽम्भोनिधौ । सद्यो भर्तृविरहदुःखादिव प्राची दिशा निष्प्रकाशाऽभवत् । विहगाश्च स्वस्वकुलायेषु निश्शब्दा व्यलीयन्त । विकसन्तीनां कुमुदिनीनामतिरमणीयं परिमलं गृह्णन् प्रदोषानिलश्शनैश्शनैरावातुमारेभे । समयेऽस्मिन्नसमया सुधर्मा सन्ध्याबलिर्नाम काचन युवतिस्समागत्य स्वयमित्थं ब्रवीति ।

**सन्ध्या**— हन्त ! सन्ति किमत्र लोके मादृश्यो निर्भाग्याः स्त्रियः ? अथवोत्पत्स्यन्ते ?— विधे ! किमिति मां स्त्रियमः

सृज: ? अपि भवत: कृतं मयाऽमुत्र किमप्यागः ? सर्वासु योषासु साकं स्वरमणेन सानन्दं रममाणासु भर्तृवियोगेनाऽनाथां सदा दूयमानां मां किमिति न पश्यसि ? किं नोदेति मयि करुणावरुणालयस्य तव करुणा ? किं सदृशमिदं समदृष्टेर्भवत: ?— प्राणप्रिय एव चेत्प्राणघातक: किमितीश्वरे दोष आरोप्यते ! हन्त ! नाथ ! यदि मयाऽऽचरितं यत्किञ्चित्त्वदाशयविरुद्धं तदा मम तिरस्कारो युक्त: । तथा किं वा कृतं मया ? अद्यैवाऽऽगच्छेयमित्यभिधाय सुधर्मां गतो भवान् व्यतीतेऽपि मासत्रये किमिति नाऽऽयाति ? एतावता दूयमानाया: धारयाऽश्रूणि विमुञ्चन्त्या: प्राणप्रियायास्त्याग: किं न्याय्य: ? तदारभ्य पञ्चबाणबाणलक्षीकृताऽहं सुमनस इवाऽग्निसम्बन्धात् म्लानाऽनुभवाम्यसह्यं दु:खम् । यदि पश्येद्भवानवस्थामीदृशीं तदैवाऽवगता भवेन्मम त्वन्निष्ठा प्रीति: कियतीति । तवादर्शनादर्धकलाऽप्ययुतयुगायते । हन्त ! नाथ !– तव निन्दयाऽपि न किमपि प्रयोजनम् । यद्येकस्या मम नाथो भवान् तदा इदमवस्थां मां नैवं त्यजेथा: । कतीनां स्त्रीणां प्राणनाथोऽसि वा, को जानाति ?—- सुधर्माया: प्रत्यहमनेन पथा खलु गन्तव्यम् । विचलितायामपि सभायां नैतावताऽपि दृश्यते ? रत्नावल्या दर्शनाय तद्गृहं प्रति गतो भवेत् । अनेन स्वसामर्थ्यं दृष्ट्वा हृष्टान्तरङ्गात्सुत्राम्ण आकाशगामि विमानमेकं लब्धं स्यात् । तच्च स्वेच्छासंचारानुकूलम् !— हा ! रत्नावलि !— रत्नावलि !— अहमपि रत्नावलीवेयं दारा: खलु चित्रसेनस्य ? तया किमर्थमेतच्चिन्त्यते !

यदि न प्राणप्रियस्यापि, एतदुद्दिश्य का चिन्ता तस्याः? तथाऽप्येनं सदा समीप एव स्थातव्यमिति किमहं निरबध्नाम्? द्वयोरपि समदृष्टिर्भवेदित्येव खलु प्रार्थयम् । तद्विस्मृत्य किमिति मयि पराङ्मुखो भवति? किमिदं युक्तम्?— अपरोऽत्र विनोदः! अविदितभर्तृवृत्तान्तया मया को विशेष इति चेत्साऽनुयुज्यते, 'हन्त! सखि! न खलु किमपि जानामि, मद्गृहमागतस्य तस्य कति मासा व्यतीता इति रोदितुमारभते । कोऽत्र विश्वास्यः? को निन्द्यः?— धिग् इदं दुःखास्पदं स्त्रीजन्म" इति । (नारद आगच्छति ।)

**नारदः**— सत्यम् ।

**सन्ध्या**— भगवन्! महर्षे! नारद! नमस्करोमि विधेया ।

**नारदः**— दीर्घसुमङ्गलीभव ! सन्ध्यावलि! किमत्राऽऽगत्य शोचन्ती वर्तसे? को वृत्तान्तः?

**सन्ध्या**— भगवन्! सर्वज्ञस्य भवतः किमस्त्यविदितम्? मया वियुक्तस्य मम पत्युः चित्रसेनस्याऽद्य व्यतीतास्त्रयो मासाः । अन्वहमत्राऽऽगत्य पश्यामि गृहमानेय इति । परन्तु नैव दृष्टिविषयी भवति । कुत्र गच्छतीति नाऽवगम्यते । इदमेव दुःखनिदानं मम । भगवन्! प्रत्यहं देवसभातः कुत्र गच्छति मे नाथः?

**नारदः**— कुत्र गच्छतीति मन्यसे ?

**सन्ध्या**— मन्ये मत्सपत्न्या रत्नावल्या गृहमेवेति । चेत् सा गूढमनुयुज्यते, सखि! नाऽहं किमपि जानामि । अत्राऽऽगतस्याऽतीताष्षण्मासास्तस्येति वदति ।

**नारदः**— तथ्यैव तदुक्तिः । न खलु तव कापट्यम् ।

**सन्ध्या**— तर्हि कुत्र वर्तते ?

**नारदः**— अवगतपूर्वैव खलु त्वया चित्रसेनस्य प्रकृतिः । उर्वश्या गृहमेव तस्य गतिः ।

**सन्ध्या**— हन्त ! अग्निसाक्षिकमेव परिणीतयोस्सत्योरावयोर्दुर्भगां तां रूपाजीवां वा सेवते ?

**नारदः**— सन्ध्यावलि ! पश्य ? स्त्रीबुद्धिं खलु प्रदर्शयसि । नेदं धीमतां लक्षणम् । यदि वृत्तान्तोऽवगतः तदा तदुपरि कर्तव्यं हि चिन्तनीयम् । युक्तं किं परदूषणम् ?

**सन्ध्या**— हन्त ! महर्षे ! किं करोमि ?

**नारदः**— किं ? किं करोमि इति वदसि ? त्वत्प्राणनाथस्त्वयैव स्वायत्तीकर्तव्यः ।

**सन्ध्या**— हन्त ! महर्षे ! किं तत्र मया कर्तव्यम् ?

**नारदः**— वच्मि कमप्युपायम्, शृणु । त्वरितमेव तव नाथमत्राऽऽगमयामि । तमागतं कथमपि वशीकृत्य देवराजेनाऽद्य पारितोषिकतया दत्तं तत्करस्थमङ्गुलीयकमपहर्तव्यम् । यदधीनं भवेत्तदङ्गुलीयकम, तदधीनो भवेत् तत्पतिः । चित्रसेनस्तु तदुर्वश्यै दित्सतीति प्रतीयते । उपायेन तन्निरुद्धय यद्यङ्गुलीयकं स्वायत्तीक्रियते तदा सिद्धप्रायस्ते मनोरथः । भवादृशीनां विदुषीणां मया किमुपदेष्टव्यम ? वर्तते मम कार्यान्तरं, साधयामि तावत् ।

**सन्ध्या**— महर्षे ! यथा निदेशः । (नारदस्त्वरितं गच्छति)

हा! हा! अद्य खल्ववगतो नाथस्य वृत्तान्तः। वृथा खलु दोष आरोपितो रत्नावल्याम्। उर्वश्याः कपटवाग्रूपस्य जालस्याऽधीनोऽभूत्। सर्ववशीकरणप्रवीणायास्तस्याः कश्श्रमोऽस्य वशीकरणे? विशिष्याऽङ्गुलीयकमप्यनुकूलम्। अस्तु पश्यामः। पथाऽनेनखल्वागच्छेत् ।— तत्राऽऽगच्छति ।— कियती त्वरा? उर्वशीगृहगमनवेगः! स किमपराध्यति? अत्राऽऽगत्य किं वा करिष्यतीत्यदृश्या पश्यामि। (अदृश्या भवति)

(चित्रसेनस्त्वरितमागच्छति।)

**चित्रसेनः**— कुतो न दृश्यत उर्वशी? अयं खलु महर्षिणा निर्दिष्टः प्रदेशः, नैव सन्देहः— हा! अद्यैव खल्ववगतं मुनीश्वरोक्त्याऽङ्गुलीयकस्य माहात्म्यम्! निस्सारमिदमङ्गुलीयकमैच्छदुर्वशीति खलु मया चिन्तितम्। अद्यैव ज्ञायते यथार्थः। मद्वशीकरणायैवेदं तया प्रार्थितं भवेत्। अहं द्विभार्य इति तयाऽवगतं स्यात्। कदाचिदयं पुनर्गच्छेदिति सन्दिहानयोपाय एष कृतो भवेत्! विशिष्य देवराजोऽपि प्रतिश्रुतस्याऽन्यथाभावो न खलु युक्त इति चिन्ताक्रान्त एव मह्यं प्रादात्। आं अवगतम्। पूर्वपुण्यवशाद्देवाऽधिगतोऽयं विशिष्टः पदार्थः। कालेनैतावतापरिपूर्णो मनोरथोऽद्यैव फलितप्रायो भविष्यति।— कुतोऽद्याऽप्युर्वशी नागच्छति? किमसत्यं वदेन्नारदः? मामेव प्रतीक्षत इति ह्यभिहितं मुनिना? क इति नोक्तम्। सत्यं!— विनोर्वशीं कोऽत्र मां प्रतीक्षेत? विनोदार्थं कदाचित्प्रच्छन्ना भवेत्, अन्विष्यामः। ज्यौत्स्न्यपि नैरन्तर्याद्वल्लीनां तमिस्रेवाऽन्धकारावृता वर्तते। [गवेषयति।

**सन्ध्या**— (प्रत्यक्षीभूय) नाथ !

**चित्रसेनः**— आ ! उर्वशि !

**सन्ध्या**— उर्वशि !— सदोर्वशीध्यानमेवेति हि प्रतिभाति !

**चित्रसेनः**— रत्नावलि ! किं त्वं ? भ्रमादन्यथाऽभ्यधाम् । अन्धकारान्न किमपि ज्ञायते ।

**सन्ध्या**— सम्यक्, ब्रूह्यन्यासामपि नामान्येकैकशः । प्रथमतः उर्वशी, द्वितीया रत्नावली, ततः का ? अन्ततः सन्ध्यावलिर्वा ? किं न साऽपि ?

**चित्रसेनः**— सन्ध्यावलि ! किमेवं वदसि ? विनोदार्थमभिहितं मया । न किमहं जानामि त्वाम् ? यद्येवमभिधीयते तस्य प्रतिवाक्यतया किं वदसीत्यवगन्तुकाम एवेत्थमवादिषम् ।

**सन्ध्या**— आस्तां तत् ।— किमर्थमत्राऽऽगतो भवान् ?

**चित्रसेनः**— त्वद्दर्शनार्थमेव ।

**सन्ध्या**— वद सत्यं, उर्वश्या दर्शनायेति । किमित्यनृतं ब्रवीषि !

**चित्रसेनः**— न खलु तथा किमपि । पुरतस्तव किमसत्यं वदेयमहं ? माऽस्मै कुप्यतु भवती ।

**सन्ध्या**— किमर्थमहं कुप्यामि ? चेन्न त्वरितं गम्यते, उर्वशी कुप्येत्तुभ्यम् । गच्छ गच्छ ।

**चित्रसेनः**— प्रिये ! न खलु तथा । शृणु मद्वचनम् ।

(उपविशति)

( क्रमशः ।)

॥ श्रीः ॥

# ॥ रघुनाथविलासम् ॥



## प्रथमोऽङ्कः ।

देवीं यो लभते स्म वारिधिभवां दिव्यं च यो वा मणिं
ग्राहं साग्रहमञ्जसा ग्रहकृते भित्वा च सत्वाधिकम् ।
यः सारङ्गमरक्षदक्षतकृपाव्यापारतस्तादृशो
राजत्यम्बुजलोचनो भुवमवत्रङ्गस्थलाभ्यन्तरे ॥ १ ॥

किं च,

तन्यादन्यादृशं ते विभवमभिमुखो नर्मणा वर्मयित्वा
चर्म द्वैपं चरिष्णुः पुररिपुसविधे यः शिशुत्वाविधेयः ।
कुर्वन्दुर्वृत्तदन्तिश्रममवनिभृतो नन्दनान्मन्दसन्धि
प्रापय्यापास्तधैर्यं पितरमतितरामातनिष्ट प्रहृष्टम् ॥२॥

अपि च,

सव्याङ्गं भुजगोपवीतवहनात्साशङ्कमन्याङ्गतः
साकूतस्मितफुल्लगल्लफलकं स्पृष्ट्वा समाश्वासयन् ।
तत्संस्पर्शवशेन जातपुलकं त्वन्मानसे तन्महः
सामानाधिकरण्यधाम जयतु स्त्रैणस्य पौंस्नस्य च ॥

(नान्द्यन्ते)

**सूत्रधारः--** (परिक्रम्यावलोक्य च । सहर्षम् ।)

**कवनरससुधायाः कापि पानीयशाला**
**बुधविविधकलानां बोधिका पूर्वसन्ध्या ।**
**अभिनयविभवानामास्तिकी जीवनाडी**
**जयति परिषदेषा जन्मभूमिर्गुणानाम् ॥ ४ ॥**

(पुनर्निरूप्य) अस्यां किल निखिलशैलूषतपस्याङ्कुरितसान्दिष्टिकबुधसमष्टिसमधिष्ठितायां युधिष्ठिरपुरुपुरुकुत्सनहुषनैषधमरुत्तमरुत्तनयययातिभरतभगीरथपरिक्षित्प्रमुखमहीक्षित्प्रभावपरिभावुकबाहार्गलनिरर्गलनिर्गलत्प्रतापतपनतापितद्वीपान्तरगतविमतभूपान्तःपुरपुरन्ध्रिजननिरन्तरचालितधवलचामरकन्दलितगन्धवहस्तनन्धयशिशिरीकृतसरीसृपपतिशरधृतगरोपचिताभिषङ्गचकितावनीकृतभुजापरिष्वङ्गाद्विरुक्तमरुत्वन्मणिखचितकेयूरमयूखो दैनन्दिनापदानायितमहादानाधिकस्फूर्तिकीर्तिपूरकर्पूरपूरितजगदण्डभाण्डहाटककरण्डसमुद्दण्डपाण्ड्यतुण्डीरमण्डलाखण्डलमदखेलनशौण्डीभवदखण्डशौण्डीर्यमण्डितभुजप्रकाण्डः सङ्गीतसाहित्यभङ्गीसौहित्यनिर्माणकर्मान्तिकप्रबन्धशतनिबन्धनामन्दधौरन्धर्यधिषणासनाथो रघुनाथजनाधिनाथो मणिधोरणीरचितद्युमणिघृणिगर्वमुद्रासनमधिवसति भद्रासनम् । इतोऽपि किमपरमभिलषणीयं परिषदः ? यदिदानीम्—

**सौन्दर्यप्रसवास्त्रविस्मयकरं शौण्डिर्यमम्भोनिधि-**
**द्वीपाभ्यन्तरवासदृप्तहृदयान्द्वेष्यानलं शिक्षितुम् ।**

पाण्डित्यं च बृहस्पतिस्मयहरं पारे गिरां प्राभवं
यस्यासौ रघुनाथभूमिपरिणीरस्या वयस्यायते ॥

अस्य प्रत्यभिषेणनं क्षितिपतेः प्रत्यर्थिनः पार्थिवान्
शस्त्राशस्त्रिकदर्थितान्गणयितुं नास्ति प्रगल्भो जनः ।
यद्यस्ति प्रभुरेव संप्रति मुहुस्तैर्भिद्यमानं रवे-
र्मध्यं तत्परिहृत्य पार्श्वकुहरे शश्वत्कुहापि स्थितः ॥६॥

किं च,

कटकपतककर्णिकाङ्गदाद्ये
विविधमहार्घविभूषणे समेऽपि ।
विबुधपरिषदो विविच्यतेऽसौ
प्रभुरिह हन्त निजप्रभाविशेषैः ॥ ७ ॥

अपि च,

यल्लावण्यलवावकर्णनवशादिणीदृशा स्वीयया
भर्तेति प्रसवायुधो न गणितो भार्येति सा तेन च ।
स्त्रीत्वं भावयतात्मना तदधुना श्रोतुं जयन्तादिभिः
तस्य श्रीरघुनाथभूवलरिपोः साम्यं न शक्नोम्यहम् ॥

(नेपथ्ये)

प्राप्तोऽहं नटकेसरी परिजनैरन्यैः शठैः किंनरैः
किंव दृप्पलवेण धुत्तणडणे दंसेहिसन्ति तुमम् ।
शक्तिं मे नटने स एव लटहः सन्ध्यानटः प्रेक्षितुं
सोणट्टा अरिपीययं खु भुवणे संज्ञाणडाणं सढम् ॥

**सूत्रधारः**— (श्रुत्वा सासूयम् ।) अयमविनयमभिनयकलासु कला-

वत्या मम सुदत्या विवदमानो न किमहङ्कारी स नटकेसरी। भवतु, सिद्धमद्य नः समीहितम्। यदिह सममावयोर्विवदमानयोः सदसि रघुनाथमहीक्षिता सरसकलासु शिक्षिताः परीक्षितारो विबुधाः।

( ततः प्रविश्य उद्धतवेषो नटकेसरी ।)

( राजानमवलोकयन् भयमभिनयन् किञ्चिदिवापसृत्य )

सौम्या गुणाः परिचिता इव संनिधौ मा-
माकारयन्ति पुनरस्य महोविशेषाः ।
रुन्धन्ति हन्त रुचिता इव तन्न किंचि-
दत्रोपसर्तुमपसर्तुमपि क्षमोऽहम् ॥ १० ॥

( पुनर्निरूप्य सविस्मयम् । )

नटति मयि सभाया नायका ये महीपा
दिशि दिशि दुरवापं द्वीपमध्यासिताश्च ।
सदसि पुनरमुष्मिन् सांप्रतं ते भजन्ते
धरणितलवलारेर्दासतां पार्श्वभाजः ॥ ११ ॥

( प्रणम्य सविनयम् । )

जलनिधिगर्भवासदशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधनर्तकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथजनाधिपते ॥ १२ ॥

( उभौ परिक्रम्याभिमुखौ भवतः । )

**नटः**— (सावज्ञम् ।)

सति मयि सकलनटानां करिणामिह निग्रहाय केसरिणि ।
नाट्याचार्याभिख्यां नट एष प्राकृतः कथं वहति ॥ १३ ॥

**नाट्याचार्यः**— (सस्मितं)

वादिनोर्निजकलासु वैदुषी-
मावयोरयमवेक्ष्य भूपतिः ।
नन्दने वहतु निन्दनेऽथवा
कर्तृतां तदिह रे विकत्थसे ॥ १४ ॥

( उभावन्तरा प्रविश्य )

**पारिपार्श्वकः**— (करद्वयेन तौ निवार्य) सखे नटकेसरिन्निति मन्मुखेन भवन्तमाज्ञापयति स राज्ञामग्रणीः । नाट्यादिषु मया स नाट्याचार्यः सुशिक्षितः । तत्साम्यमिच्छता भवता नाटकेषु नाट्यं नृत्यं वा प्रयोज्यमिति कथ्यताम् ।

**नटः**— ( साञ्जलिबन्धम् । )

आहार्याङ्गिकसात्विकवाचिकभेदाच्चतुर्विधाभिनयैः ।
वाक्यपदार्थव्यञ्जकमिह नाट्यं नायकीयमनुकरणम् ॥
आहार्यव्यतिरिक्तैरपराभिनयैः पदार्थमात्रस्य ।
व्यञ्जकमभिमतभूपाद्यनुकरणं नाटिकासु नृत्यं तु ॥ १६ ॥

**नाट्याचार्यः**— ( साभ्युपगमम् । तथेति शिरसोपश्लाघ्य । ) रघुनाथभूपतिनिर्मितानां रघुनाथविलासमदनबलदूत्यादीनां नाट्यनृत्ययोः कुत्र वाऽन्तर्भावः ?

**नटः**— ( विहस्य ) नोभयत्राप्यन्तर्भावस्तेषाम् । परं तु नृत्त एव ।

तथाहि—

आहार्यसात्त्विकपराभिनयाप्तमङ्ग-
विक्षेपणेन च युतं विबुधा यदाहुः ।
तन्नृत्तमेतदपि तां धवलास्यभेदात्
द्वेधात्र लास्यनटने खलु ते प्रयोज्याः ॥ १७ ॥

(पारिपार्श्विकं प्रति) सखे कौषीतक विदुषीतरा यवनिकान्तरिता प्रियदर्शिका नाम मत्प्रियतमा नानाविधरघुनाथविलासादिलास्यप्रयोगेषु प्रशस्तेयमास्ते । अस्य रघुनाथजनाधिपतेः परिसरवर्तिनस्ते जानन्ति तामन्तरीपाधिपाः भूपाः ॥

**नाट्याचार्यः**— (राजानमुपसृत्य) देव भवता बाल इत्येव नोपेक्षणीयोऽयमरिणनटनरीतिषु नटकेसरी । (प्रविश्य राजपुरुषः) महाराजेन वितीर्णानीति ताभ्यां पतककर्णिकादीनि भूषणानि प्रदाय निदेशपत्रिकां च ददाति ।

(तदादाय इति तौ वाचयतः)

सख्यं युवां नटवरौ समवाप्य ताव-
दव्याहतप्रणयमस्मृतपूर्ववैरम् ।
तत्प्रस्तुतं सदसि मे तरसा रसाना-
मस्मन्मुदेऽभिनयतं पदमद्भुतानाम् ॥ १८ ॥

(उभौ साञ्जलिबन्धं राजाभिमुखौ भूत्वा) देव ! तदेवमभिहितमतिहितमित्यवहितम् ।

**नाट्याचार्यः**-- सखे ! नटकेसरिन् ! इतः परमावां परस्परं सौभ्रात्रमेव भजावः ।

**नटः**-- नाट्याचार्य ! नाट्यादिष्वाचार्य इव मे बहुमाननीयोऽसि ।

(उभौ परस्परमाश्लिष्यतः)

**नटः**— आर्य नाट्याचार्य! तत्रभवता रघुनाथभूभृता तदिति सामान्यतो निर्दिष्टम् । किमिष्टं रूपकमिति न निरूपयामि । अथवा-- कृतं सन्देहेन । नाटकेषु नाट्यं नृत्तं वा प्रयोज्यमिति परीक्षितवतो महीक्षितस्तस्याभिमतं नाटकमेवेत्यवधारयामि ।

**नाट्याचार्यः**— सखे नटकेसरिन् ! राजाभिमतं सम्यगूहितं भवता । तच्च रघुनाथविलासं नाम नवनवरसोद्घाटकं नाटकम् । आर्यनाट्याचार्यनाम्नैव तस्य नायकः सकलकलाकलापकुशलो रघुनाथनरपालोऽयमित्यूह्यते । तस्य तादृशः को वा कवयिता ।

**नाट्याचार्यः**— (अङ्गुल्या निर्दिश्य)

अस्य श्रीरघुनाथभूवलरिपोरध्यासितार्धासनः
प्रज्ञावैभवखण्डितप्रतिवदत्पाषण्डषण्डस्मयः ।
कुर्वन्व्याक्रिययातिविश्रुततरं कौमारिलं दर्शनं
गोप्ता नित्यगवीरसौ विजयते गोविन्दयज्वाग्रणीः ॥

किं च,

षड्दर्शनाभिनवदुग्धसरित्पतिर्ण्यो
निर्मथ्य यत्नरहितं निजया धियैव ।
विश्राणयन्ननुदितं विबुधावलीना-
मेतद्रसं मुररिपुं भुवि योऽतिशेते ॥ २० ॥

अपि च,

चत्वारः कृतसर्वतोमुखमहासत्रेण गाढं शिला-
यूपा येन निखानिताः प्रतिदिशं युक्तं चिरावस्थितेः ।
सौराज्यं रघुनाथभूमिपतिना संप्रापिते क्ष्मातले
पादेसह्यसुतं वृषेण वसता पादा इव स्थापिताः ॥२१॥

रथ्यावास्तिकधेनुकाश्वगजतामुख्याजहद्दक्षिणं
वर्षादाप्तपदोत्तरं क्रतुवरं तं वाजपेयाभिधम् ।
येनाहार्यकिमप्यहार्यविभवं साम्राज्यलक्ष्मीपदं
संप्राप्तो रघुनाथभूशतमखो जेजीयते सांप्रतम् ॥२२॥

**नटः**— समश्रौषि च पुरा त्रैस्रोतसप्रवाहपवित्रितायां तस्यां वाराणस्यां वसतामेव सतां प्रत्याह— तत्कृतहिरण्यगर्भतुलापुरुषादिमहादानप्रतिग्रहनिरर्गलविभवानामनुदिवसप्रशंसनादाप्तवाजपेयनाम्नि सप्ततन्तुवरे निरन्तरे क्षणकुतूहलिना रघुनाथभूतलवलद्विषाहस्तेष्टकचितश्येनचयनस्य प्रतीष्टकमध्वर्यवे सकलाध्वरक्रमविधे विध्युक्ता दक्षिणा दापितेति ।

**नाट्याचार्यः**— स एवाध्वर्युरध्वरभोजनजनविविधहव्यपरिवेषको नव्यशब्दप्रपञ्चनिर्माणकर्माभिनवपितामहः । पुनरस्यापि तावन्नाटकस्य कवयिता ।

**नटः**— तस्य कथं सर्वत्रापि तत्तादृशमखण्डितं पाण्डित्यम् ।

**नाट्याचार्यः**—

शास्त्रे नैकविधे विधेयमतयः सामर्थ्यमव्याहत-
व्याहारेष्वपि ते समं विदधते वासिष्ठवंशोद्भवाः

**राजा**—

श्रुतपूर्वं मयाप्येतत्कर्णाकर्णिकया भृशम् ।
मकरन्दमिहादेष्टुं सदयोऽहं व्यचिन्तयम् ॥ १७ ॥

(नेपथ्ये मृदङ्गध्वनिः ।)

**कनकलेखा**— कथमस्मदागमनं प्रतीक्षन्ते बहवः सङ्गीतशालाभ्यन्तरे ।

**राजा**— परं कार्यपरतया विस्मृतमेतत्सर्वमपि । तत्त्वरितं गम्यते । इन्दुशर्मन्, मामनुयाहि मकरन्देन । युवाभ्यां किञ्चिद्गूढं वक्तुकामोऽस्मि । अयि बाले कौमुदि, सम्यगालोच्य तातमेवानुसर नोचेद्व्रज मरणमुत त्यज परिणयमेषाऽस्मद्दण्डनीतिरित्यवधार्यताम् । प्रिये कनकलेखे, सम्प्रति साधयामः । (मकरेन्दुन्दुशर्माणौ दृष्ट्वा) अग्रतो गम्यताम् ।

**इन्दुशर्मा**— यथाऽऽज्ञापयति देवः ।

(इति कौमुदीवसन्तवर्जमन्ये निष्क्रान्ताः ।)

**वसन्तः**— (कौमुदीचिबुकमुन्नमय्य ।)

सखि प्राणाधिकस्नेहे, कथं ते गण्डपाण्डिमा ।
म्लानतां किं प्रयातीदं सुन्दरि, त्वन्मुखाम्बुजम् ॥

**कौमुदी**—

वर्षाभावादिदं नाथ, कुसुमं तव ताम्यति ।
अभिषिञ्चामि तत्कान्त, पुष्कलेनाश्रुवारिणा ॥ १९ ॥

**वसन्तः**—

श्रेयांसि बहुनिघ्नानि किं भद्रे न श्रुतं त्वया ।
तस्मादत्र प्रलापेन न किंचित्कार्यमस्ति नः ॥ २० ॥

अयि प्रिये, न किं ते कर्णपथमागतं यज्जनकेन सञ्जयाय दत्तमात्मानमनुरागसाक्षिकमुदयनाय प्रयच्छन्त्या वासवदत्तयाऽनवभाविमहान्क्लेश इति । तथैव सर्वत्राप्यनुरागानुगुणं वल्लभमक्लेशेनैवाप्नुवत्यो नार्यः प्रायो विरला एव । इह खलु दाम्पत्यं नाम क्वचिज्जात्या भिद्यते—

**कौमुदी**— हन्त ! उत्तमनीचयोः परिणयो नामायं महानभाग्यपरिणामः ।

**वसन्तः**— उत क्वचिद्वयसा विसंवदति—

**कौमुदी**— तरुण्या जरठभर्तृलाभ इति विधिविहितो महानयं दण्डपातः ।

**वसन्तः**— आहोस्विन्मित्रवर्गविनिर्दिष्टं भवति ।

**कौमुदी**— यदन्यदीयचक्षुषा वरणं वल्लभस्येति नातःपरं कष्टतरमस्ति युवतीनाम् ।

**वसन्तः**— यदि कदाचित्सर्वथाऽनवद्यं दाम्पत्यं तत्तु आयोधनेन निधनेन व्याधिना वा विहन्यमानं शब्दवत्क्षणभंगुरं प्रतिबिम्बवदनियतं स्वप्नवदनायातं कृष्णनिशानिशीथनिरूढान्धतमसपरिस्फुरच्चञ्चलाचञ्चलतरञ्च भवति । सुखं हि नाम क्षणभंगुरम् । कष्टा खलु लोकयात्रा ।

**कौमुदी**— सर्वत्रानुरागः क्लेशपुरस्सर इति चेत् सहिष्णुभ्यामेवाभ्यां प्रतीक्षणीयः कश्चित्कालः ।

विधिरेव विशेषगर्हणीयो
यदि रागः सफलो न चास्ति लोके ।

अनुरागवशंवदा हि नालं
तरुणी प्रेमवशीकृतं विहातुम् ॥ २१ ॥

यथैव सन्ततचिन्तास्वप्ननिश्वासप्रत्याशाश्रूणि प्रणयाभिभूतमनस्कायाः सहजानि तथैव तीव्रवेदना च ! किं करोमि मन्दभागधेया । ( इत्यश्रूणि मुञ्चति ।)

**वसन्तः**-- समाश्वसिहि भद्रे, समाश्वसिहि । शृणु मे वचनम् । एषैवात्र प्रतिपत्तिः । काचिन्मे पितृष्वसा मृतभर्तृका वर्तते । तस्या द्रविणमस्ति भूरि । अनपत्या च सा । अवन्त्याः क्रोशद्वयमात्रमेव तस्याः सदनम् । पुत्रमिवाभिमन्यते मामेषा । तत्र भवत्वावयोः परिणयो गान्धर्वेण विधिना । नास्त्ययं कठोरः समयाचारस्तत्र । यदि ते सत्यमेव मय्यनुरागस्तर्हि श्वो रात्रौ वञ्चितस्वजना पितृगृहाद्गूढं निर्गत्य नगरस्य नातिदूरे बाह्योद्याने यत्र कदाचिदद्राक्षम् त्वां सौदामिन्या सह तत्र वकुलवीथ्यां त्वदागमनदत्तचक्षुषा मया संगच्छस्व ।

**कौमुदी**-- (हर्षमभिनीय ।)

सम्यग्विचिन्त्य मदनानलदाहशान्ति-
सञ्जीवनौषधमिव प्रियवल्लभेन ।
मत्स्नेहपूर्णमनसा सदयेन मह्यं
दत्तं वचोऽमृतमिदं शिरसा धृतं मे ॥ २२ ॥

प्राणेश, शपे मदनस्य दृढतमेन धनुषा, सुवर्णभासिनाऽसदृशेन सायकेन, अजातशात्रवभावैः कोकिलैः, युवजनानुरागसंवर्धिन्याऽप्रतिहतया शक्त्या, विरहिजनदाहकेन कामानलेन च ।

सत्यमेव भवता तस्यामेव वकुलवाटिकायां संगच्छेय ।

**वसन्तः**— प्रिये, प्रतिश्रुतमप्रमत्तैव निर्वहस्व । सम्प्रति पश्य सौदामिनीमितएवागच्छन्तीम् ।

(ततः प्रविशति सौदामिनी ।)

**कौमुदी**-- जयजय चिरमत्र रमणीये सौदामिनी, कुत्र गम्यते भवत्या ।

**सौदामिनी**— अयि परिहासशीले, किं मामुपहससि लावण्यवार्तया यदितेऽस्ति त्रैलोक्यसम्मोहनं सौन्दर्यं येनासौ मकरन्दो लोहधातुरिवायस्कान्तेनाकृष्टस्सन्ततं त्वामेव निद्ध्यायति । अहो हृद्या हि ते लावण्यमञ्जरी । त्वदपाङ्गभुजङ्गदष्टश्शश्वन्मुह्यति महाभागो मकरन्दः । त्वद्वचनामृतास्वादनेन वीणावेणुनिनादमपि नाद्रियते। वसन्तोदयवासरेषु पाककपिशकलममञ्जरीरमणीयनवनवमालिकाकुसुमसुरभिदाक्षिणानिलवीज्यमानगृहारामरसालकिसलयरसास्वादमत्तकलकोकिलमनोहररुतमपि न शृणोति। रन्ध्रान्वेषी कुसुमधन्वाप्यमुमेव समयमधिकृत्याधिकं दुनोति महानुभावम् । यदि त्वदुक्तं किञ्चिद्रामणीयकं मयि वर्तते तत्प्रतियच्छेयं तावकाय । मदलकस्ते चूर्णकुन्तलशोभामिच्छति । त्वदीक्षणप्रभां लिप्सेते मे लोचने । त्वद्वाणीविलासञ्जिघृक्षति मे रसना । किं बहुना प्रलपितेन । यदि भवामीश्वरी सर्वलोकानां मकरन्दवर्जं तत्सर्वमपि त्वद्रामणीयकविलासविभ्रमेभ्यः प्रतियच्छेयम् । यदि सकरुणा त्वं प्रियसखीविषये तर्हि शिक्षय मां कथं त्वमीक्षसे । केनवोपायेन महानुभावमकरन्दमनोऽप्यावर्जितवती येनायमद्य शून्यवत् भ्राम्यति ।

**कौमुदी**— अहो कोपविवर्तमानविषण्णवदनामपि मां कामयतेऽयं वराकः ।

**सौदामिनी**— सखि, तव क्रोधवैवर्ण्यरामणीयकं धारयतु मे स्मितम् ।

**कौमुदी**— हन्त ! शपथशतेन निवारयन्तीमपि मां मानमुत्सृज्यानुसरत्ययं मकरन्दहतकः ।

**सौदामिनी**— आयि ते शपथशोभां भजतु मेऽनुरागनुतिसहस्रम् ।

**कौमुदी**— यावदहं कुप्यामि तावदयं स्निह्यति ।

**सौदामिनी**— यावदहं स्निह्यामि तावदयं कुप्यति ।

**कौमुदी**— सौदामिनि, तदबोधो न मेऽपराधः ।

**सौदामिनी**— न तेऽयमपराधः, अपि तु ते लावण्यस्य । तादृशमपराधं लिप्सतेऽस्या मनो मन्दभागिन्याः ।

**कौमुदी**— समाश्वसिहि प्रियसखि, नेतः परं द्रक्ष्यति मन्मुखं ते मकरन्दः । जिहासामि नगरमेनं प्रियवसन्तेन । यावदयं वसन्तो नावातरन्मे लोचनपथं तावदेव मामवर्तत रम्येयमवन्ती स्वर्ग इव । अहो ! गरीयाननुरागः यदुपघातात् त्रिदिवोऽपि निरयायते ।

**वसन्तः**— (सकरुणम्)

**अयि सौदामिनि प्रेमबाहुल्यादनुतप्यसे ।**
**नेतः परं भवेद्दुःखं स्थास्यत्यत्र न कौमुदी ॥ २३ ॥**

सखि, नास्ति किञ्चिदपि गोप्यं तव । श्वो निशीथिन्यां नगरीमिमां त्यक्त्वा गमिष्यामि यत्र कुत्र वा कौमुद्या सह । शशाङ्कोदय एव कौमुदीनिर्गमः ।

**कौमुदी**-- प्रियसखि, रजन्यामागामिन्यामेतस्य नगरस्य बाह्योद्याने असत्केलिगृहायमाणवकुलवीथ्यां मदागमनदत्तचक्षुषा वल्लभवसन्तेनार्धरात्रे सङ्गम्य अवन्तीं हित्वान्यदेशं गमिष्यामि। कथं त्वां पांसुक्रीडनात् प्रभृति प्रणयवतीं मुक्त्वापसृता भवेयम्। तथापि कार्यवशेनैतत्करणीयं भवति त्वां पुनरपि कालेन प्रेक्षिष्ये यदि दैवमनुकूलम्। मकरन्दमुपयम्य सुखमत्रैव वस। न भूयात्ते प्रत्यूहो मङ्गलपरंपरायाः। सखि विस्रब्धं परिष्वजस्व मां त्वद्वियोगदुःखदुःखिताम्। (इति परिष्वज्य) नाथ वसन्त, अप्रमादेनाचर स्वप्रतिश्रुतम्। कथं वा त्वद्वियोगं सहिष्ये तावन्तं कालम्।

**वसन्तः**— अयि महिले, न मया' कदाचिदप्यसत्यमाचरितम्।

(निष्क्रान्ता कौमुदी)

सौदामिनि, अनुरागाभिनिविष्टां त्वामेवोपयम्य कुशलीभवतु मकरन्दः। साधयामि। (इति निष्क्रान्तः।)

**सौदामिनी**-- अहो! केचन सुखिनः, केचन दुःखभागिनश्च भवन्ति नियत्या! कौमुदीवाहमपि युवतिललामभूतैवास्मिन्नगरे। किमनया चिन्तया। मकरन्दस्तथा न मन्यते। यत्सर्वेपि मां शंसन्तीति न किञ्चिदेतत् प्रियमकरन्दस्य। यथैवायमद्य कौमुदीमेव कामयते तथैवाहमपि तम्। नीचमपि वस्त्वनुरागरञ्जितञ्चेद्भवति रमणीयम्। मनोरथ एव कारणमनुरागस्य न चक्षुषी।

उक्तञ्च।

"व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः" ॥ २४ ॥

मन्मथोऽपि मनसिज एव न चाक्षुषः । विवेचनाराहित्याद्‌र्भक इवानुरागो मुहुर्मुहुरभीष्टवरणे वञ्चितो भवति । विहारासक्तचेतसः परस्परजयाकाङ्क्षिणो बालकानिव जनानसत्यवादिनः करोति । तत्क्षणभंगुरोऽयं प्रणयः । यतोऽसौ मकरन्दः कौमुदीदर्शनात्पूर्वं मय्यवर्तत प्रेमपरवशः । शश्वन्मद्रामणीयकमेवास्तावीत् । मदुक्तम ' मन्त्रमिव जजाप, बहुमङ्गलमिव मेने, आगममिव सस्मार, दिष्टवृद्धिमिव शुश्राव, उपदेशमिव जग्राह" प्रतिशुश्राव च मय्येवानुरागम् । तावदेव तस्यानङ्गमङ्गलगृहायितं मे वदनेन । परं कौमुदीदर्शनात् प्रभृति तेन विस्मृतमेतत्सर्वमप्येकपद एव । संप्रति हालाहलायते मे वचनम् । द्वेष्टयसौ मद्दर्शनम् । नाद्रियते तद्विरहानलतापतप्तामेनां सौदामिनीम् । विवृत्तवदनो भवति सन्मुखागतायां मयि । किं बहुना । शपथशतेन निवारयति तमेवानुसरन्तीं माम् । किं करोमि, कुत्र वा गमिष्यामि, कं वा शरणं भजामि । केन वोपायेन प्रीणयामि प्रियमकरन्दम् । किं वा कौमुदी गमिष्यति श्वो नगरादस्मादिति निवेदयामि मकरन्दम् । तथा चेत्सोऽपि तामेवानुगमिष्यति । यदि मकरन्दः प्रीतो भवति मयि प्रियनिवेदनेन तदेव मन्ये महाभाग्यम् । यद्भावि तद्भवतु । सर्वथाद्य तस्मै कौमुदीवसन्तपलायनं निवेद्य कदाचित्तदनुग्रहपात्रीभवेयम् ।

( इति निष्क्रान्ता । )

इति वासन्तिकस्वप्ने प्रथमोऽङ्कः ॥

# द्वितीयोऽङ्कः ॥

—*—

(ततः प्रविशति धान्यकः, अधरकः, धनकः, वसुपालितः, राजसः, साधकश्च ।)

**धान्यकः**— हीमाणहे ! किणो एत्थ आशण्णा शव्वे वि अम्हव-ग्गिआ ।

आः ? किमत्रासन्नाः सर्वेऽप्यस्मद्वर्ग्याः ।

**अधरकः**— अळे ळे ! धण्णआ, क्कमेण एक्केक्कशो ताण णामाइ आहवूण पलिक्खा वेअ जुत्ता ।

अरे रे धान्यक, क्रमेण एकैकशस्तन्नामान्याहूय परीक्षैव युक्ता ।

**धान्यकः**—वट्टइ इध पट्टिआ, जाए क्कमेण ळिहिदाइ णामहे-आइ ताणं । जे जे अम्हशामिणाह शण्णिहिम्मि पळिणअमहू-शवदिवहम्मि केण वि अपुळिवेण पअळणेण उच्छवशमाअं विणोएदुं अळिहा त्ति णिण्णीदा ।

वर्तत इह पट्टिका, यस्यां क्रमेण लिखितानि नामधेयानि तेषाम् । येऽस्मत्स्वामिनोःसन्निधौ परिणयमहोत्सवदिवसे केनाप्यपूर्वेण प्रकरणेन उत्सवसमाजं विनोदयितुं अर्हा इति निर्णीताः ।

**अधरकः**— अळे घण्णआ, क्हेहि पुढमं के उण कहाशन्दब्भे शे णाडआह । ता पढिज्जन्दु णामाइ णढाणं ।

## देशवृत्तान्ताः ॥



आयुर्वेदनिष्णाताः केचन देशान्तरीयभैषज्यनिपुणैः अशक्यप्रतीकारत्वेन निश्चितानामपि रोगाणां औषधैः शान्तिमुपजनयन्तः प्राचीनार्यवैद्यशास्त्रस्य प्रभावं प्रत्यक्षेण प्रमाणेन निःसंशयमवगमयन्तोऽपि देशान्तरीयभिषग्वरैः नाभिनंद्यन्त इतीदमतिशोचनीयतरम् । 'शरीरगतानामवयवानां अस्थिसंचयानां नाडीनां च यथावस्थितज्ञानं विना कथमिव रोगस्य स्वरूपमवगन्तुं शक्येत? अविज्ञाते रोगस्वरूपे कथमौषधनिर्णयः?' इति वदन्तः पाश्चात्यभिषग्वराः अस्मदीयप्राचीनौषधेषु नातीवादरमाविष्कुर्वन्ति । विषयेऽस्मिन् तत्वमवगन्तुं राष्ट्रभरणाधिकृतैः निरभिनिवेशं श्रद्धातव्यमिति देशाभिमानिनो मन्वते ।

श्रीरङ्गनगरे काचन महती वेदशास्त्रपाठशाला कोलकुटि शिङ्गमय्यङ्गार् इत्यनेन महाशयेन लक्षपरिमितेन नीवीधनेन शाश्वतिकतया प्रतिष्ठितेति श्रुत्वा वयं संतुष्यामः ॥

---

# தர்மாகூதம்

இப்பெயர் கொண்டதோர் அபூர்வ கிரந்தம் தஞ்சாவூர் ஸரஸ்வதிமாலிலிருந்து கண்டெடுக்கப்பட்டிருக்கிறது. இது ஸ்ரீமத் வால்மீகிராமாயணத்தின் பேரில் மிகவும் எளிய ஸம்ஸ்கிருத நடையில் ஆறு காண்டங்களுக்கும் ஆறு உபந்யாஸங்களாக இருக்கிறது. இந்த கிரந்தம் எழுதியவர் தஞ்சாவூரில் அரசாண்டு வந்த எக்கோஜி ராஜாவினுடைய மந்திரியாயிருந்த திரியம்பகராயமகி என்பவர். வால்மீகியானவர் ராமாயணத்தை கதைக்காக எழுதவில்லை. ராமாயணம் முழுமையும் தர்மத்தை பிரதிபாதனம் செய்வதற்காகவே ஏற்பட்டது என்பதாக பல உதாரணங்களால் உள்ளங்கை நெல்லிக்கனிபோல் இதில் எடுத்துக்காட்டப்பட்டிருக்கிறது. இப்புத்தகத்தை ஸஞ்சிகை ரூபமாக வெளியாக்க உத்தேசித்திருக்கிறோம். ராயல் 16 பக்கம் அளவுள்ள 200 பக்கங்களடங்கிய ஸஞ்சிகை ஒன்றுக்கு கிரயம் ரூபாய் 1 வீதம் கொடுக்கப்படும். வேண்டியவர்கள் உடனே எழுதி தங்கள் பெயர்களை ரிஜிஸ்தர் செய்துகொள்ளவேணும். கிரந்தத்தின் மாதிரி தெரியவேண்டுமானால் மாதிரி பக்கங்களும் அடியில் கண்ட விலாஸத்துக்கு எழுதினால் கிடைக்கும்.

மானேஜர்,

ஸ்ரீவாணீ விலாஸ் பிரஸ்,

ஸ்ரீரங்கம்.

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

**R. Krishnamachariar, M.A., Vidyanidhi.**

**VOL. XX.** **No. 3.**



PRINTED AT THE SRI VANI VILAS PRESS, SRIRANGAM AND PUBLISHED AT MADRAS.

 **Registered No. M. 103.**

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).
6. Annual subscription is Rs. 3 only, including postage.



**बाल:**— जृम्भस्व, जृम्भस्व । दन्तास्ते गणयिष्यामि ।

**प्रथमा**— अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त ! वर्धते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

**द्वितीया**— सर्वदमन, एषा केसरिणी त्वां लङ्घयति, यद्यस्याः पुत्रकं न मुञ्चसि ।

**—शाकुन्तलम्**

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८.] राक्षसवर्ष ज्येष्ठमासः । [संचि. ३.

## सुभाषितानि ।

वदनं प्रसादसदनं
सदयं हृदयं सुधामुचो वाचः ।
करणं परोपकरणं
येषां केषां न ते वन्द्याः ॥ १ ॥

अनवरतपरोपकरण-
व्यग्रीभवदमलचेतसां महताम् ।
आपातकाटवानि
स्फुरन्ति वचनानि भेषजानीव ॥ २ ॥

न भवति भवति च न चिरं
भवति चिरं चेत्फले विसंवादी ।
कोपः सत्पुरुषाणां
तुल्यः स्नेहेन नीचानाम् ॥ ३ ॥

॥ श्रीः ॥

# ॥ अमरवाणी ॥

(पूर्वतोऽनुवृत्तम्)

---

**लक्ष्मण**-- पाश्चात्यास्तु आत्मीयमेव कान्तं पश्यन्ति ।

**राम**-- निरूपणशीला हीमे सदसद्विवेचनचतुराः कथमेवमात्म-दोषान्न पश्यन्ति ।

**लक्ष्मण**-- ईश्वरमायैवात्र निदानम् ।

**राम**-- हेतुनानेन न संतुष्यामि । समीचीनं कारणमन्वेषणीयम् ।

**लक्ष्मण**-- (किञ्चिद्विचिन्त्य) आत्मदोषावगमः सत्वगुणसंपन्नानामेव संभवति । आहारशुद्धौ सत्वशुद्धिः । मधुमांसप्रायमाहारमनुसेवतामेतेषां कथं सत्वोद्रेकस्यावसरः । राजसा हीमे पार्थिवभोगानुसेवनमेव जीवितफलं मन्वाना आत्मानुशासनप्रकारं नैव जानन्ति । देहात्मवादिनो बहवः एतेषूपलभ्यन्ते ।

**राम**— देववाण्यामतिमहान्तमादरमाविष्कुर्वन्तीमे-- इति किल मया श्रुतम् । अतः शास्त्रपरिशीलनेन तैरात्मगुणसंपत्तिरधिगन्तुं शक्यते खलु ।

**लक्ष्मण**-- उक्तः किल मया तेषां गैर्वाणीपठनसंप्रदायः ।

**राम**-- कोऽयम् ?

**लक्ष्मण**-- वेदगतानि पदानि परिशील्य भाषाणामपि षट् भावविकाराः सन्तीति निश्चित्य भाषाशास्त्रमेकं रचयित्वा

स्वकपोलकल्पितान् सिद्धान्ताभासान् सर्वत उद्घोषयन्ति ।

**राम—** प्राचीनैवेयं सरणिः श्रीमद्भिर्यास्कप्रमुखैर्नैरुक्तैरुपदिष्टैवेति श्रूयते । पाश्चात्यानां भाषास्वरूपमधिकृत्य आशयविशेषाः निरुक्तपठनादेव समुत्पन्ना इति किल कथयन्ति ।

**लक्ष्मण—** 'पुरा सर्वेप्यस्मत्पूर्वपुरुषाः कुत्रचिद्गिरिप्रान्तदेशे अवसन् । ततो जनबाहुल्यात् तेषु केचित्प्रतीचीं दिशं गत्वा ईरोप् देशे कृतनिलया बभूवुः । केचन दक्षिणाभिमुखं प्रस्थिताः भारतवर्षमिममाजग्मुः । अतः आङ्गला वयं च आर्याः विप्रकृष्टा बान्धवाः' इत्यादयः सिद्धान्ताभासाः यास्कादिभिः स्वप्नेप्यविदिताः पाश्चात्यैरुद्घुष्यन्ते ।

**राम—** तावता किं नः च्छिन्नम् ?

**लक्ष्मण—** पञ्चमाः ब्राह्मणाश्च एकजातीया इति सिद्धान्तः कथमभिजनैर्नाभ्युपगम्यते ?

**राम—** पञ्चमाः आर्याणामागमनात्पूर्वमेवेमं देशमधिवसन्तः द्रामिडा इति व्यवह्रियन्ते ।

**लक्ष्मण—** वयमपि द्रमिडभाषां व्याहरन्तः द्रामिडा एव ।

**राम—** अस्मदीया प्राचीनभाषा गैर्वाण्येव । चिरं द्रमिडेषु निवसन्तः द्रमिडभाषामभ्यस्य व्यवहारे तामेव भाषां प्रयुञ्ज्महि । तावता वयं द्रमिडा न भवेम ।

**लक्ष्मण—** द्रमिडभाषाया अपि गैर्वाण्येव मातृभूता ।

**राम—** न हि न हि । द्रमिडभाषासु गैर्वाणीमयानि कानिचन पदानि प्रवेशमलभन्त । तथैव बह्वीषु भाषासु भाषान्तरग-

तानां पदानां स्वीकारस्तदा तदा संभवत्येव ।

**लक्ष्मण**— गैर्वाण्यभावे द्रमिडभाषाया असंभव एव ।

**राम**-- द्रमिडभाषा व्यवहारेषु सर्वदोपयुक्ता जीवति । गैर्वाणी तु न तथा ।

**लक्ष्मण**-- द्रमिडभाषायाः भाषात्वमेव न मया अभ्युपगम्यते ।

**राम**-- भवता नाभ्युपगम्यते चेदपि अन्यैरभ्युपगम्यते ।

**लक्ष्मण**-- द्रमिडभाषायां संपूर्णा वर्णावलिर्नास्ति । क, ख, ग, घ इति चतुर्णामपि स्थाने 'क' इत्येक एव वर्णः द्राविड्याम् ।

**राम**-- आङ्गलवाण्यां 'F' 'Z' 'W' इति वर्णानि सन्ति । तानि गैर्वाण्यां नोपलभ्यन्ते इति हेतोः गैर्वाण्याः भाषात्वमपवदितुं को वा शक्नुयात् ।

**लक्ष्मण**-- भवता निर्दिष्टानि वर्णानि अर्धाक्षराणि । तेषामभाव एव गैर्वाण्या उत्कर्षाधायकः इति पण्डिता मन्यन्ते ।

**राम**-- अनुस्वारविसर्गादयोऽपि अर्धाक्षरत्वेन परिगण्यन्ते शाब्दिकैः ।

**लक्ष्मण**-- तादृशानां वर्णानामभावे कथयिव भाषा प्रयोगोपयोगिनी भवेत् ।

**राम**— तत्तद्वर्णास्तत्तद्भाषाणां प्रयोगे अत्यन्तमावश्यका एव ।

**लक्ष्मण**-- आङ्गलभाषा हि नाम वया बहुवारं श्रुता । पक्षिणां वाशितमिवात्यन्तमव्यक्तमुच्चार्यते किलेयम् ।

**राम**-- तद्भाषाभिज्ञानां सा व्यक्तैवेत्यनुश्रूयते ।

**लक्ष्मण**-- गैर्वाण्यां श्रुतायां यावच्छ्रवणसुखमनुभूयते तावन्नास्ति आङ्गलवाण्यामिति भाषाद्वयवेदिनो मन्यन्ते ।

**राम**-- किंदेशीयास्ते?

**लक्ष्मण**— अस्मद्देशीया एव ।

**राम**— भाषाद्वयवेदिनामाङ्गलानामस्मिन्विषये कीदृशोऽभिप्राय इति अपि नाम जानीषे ?

**लक्ष्मण**— तादृशा: पाश्चात्येषु न सन्ति ।

**राम**— मोक्षमूलभट्टादयो बहव: गैर्वाण्यां विचक्षणा इति जना: कथयन्ति ।

**लक्ष्मण**— सत्यम् । परं हीमे गैर्वाणीं सुस्वरमुच्चारयितुं न प्रभवन्ति ।

**राम**— न कोऽपि हिन्दुदेशीय: आङ्गलवाणीसमुच्चारणे ऐरोपीयमनुकर्तुं शक्नोतीति ते विश्वसन्ति ।

**लक्ष्मण**— भो: शास्त्रिवर्य, शापितोऽसि ब्राह्मणकाम्यया । तथ्यं वक्तव्यम् । यथा अस्मदीया आङ्गलवाण्यां प्रावीण्यमधिगच्छन्ति, तथा आङ्गला गैर्वाण्यां नैपुण्यमावहन्ति— इति सशपथमुच्यताम् । अस्मदीया: केचन आङ्गलवाण्युच्चारणे आङ्गलानप्यधरीकुर्वन्ति इति मया सशपथं वक्तुं शक्यते एव ।

(क्रमश: ।)

॥ श्रीः ॥

# ॥ श्रीसुरभारतीसंदेशः ॥

रमणीयतमो हेमन्तसमयः । विकस्वरसरोरुहमालिका मंदेतरमकरंदतुंदिलेन मंथरवेगेन गंधवहेन प्रणुन्ना, जलतरंगांगणे कलहंसानुकारिनृत्तनैपुण्येन प्रीणयति स्म पुण्यैकभाजनप्रणयिजनमानसानि । भगवतो भासांनिधेः शुभागमनेनारक्तायां पूर्वदिशि, क्रमेण नातिचिरादेव तेनैव विकर्तनेन निजोष्णकरप्रहारजर्जरीकृतेऽपि संपूर्णक्षोणीतले, नाद्यापि प्रशममुपजगाम प्राभातिकशीतशीतपवनसंसर्गजनितवेपथुभरविशेषसमुदंचितरोमांचसंचयाभिरामकांचनलतोपमेयशरीरयष्टेरभिनवतरुणीजनस्य वारंवारमुपश्रूयमाणः कर्णाह्लादनचणो मधुरः शीत्कारस्वरः । दयितजनेषु प्रणयरोषकलुषा कलहांतरिताऽपि सीमंतिनी, इंत हेमंतवातानुषंगेण महांतमप्यपहाय मानं शीतत्राणनिपुणं प्राणेश्वरकण्ठं भुजरूपिणा कंठाभरणेन वलयितमातेने ।

शरदंते हेमंतोदये च, चिरादभिलषितं चंडकरेण मार्तंडवीरप्रकांडेन समं तुमुलं संग्राममारचय्य, पराजित्य च तमात्मबलेन, महदभिमानोद्धतो व्यराजत विजयश्रिया नितांतं, हेमंतसमयसमीरः शूराग्रेसरः । रजनीविरामसूचकेन कर्णकठोरेण कुक्कुटरवेण, प्रियजनकंठाश्लेषसुखविघातिनं निद्राभंगमयासीद्रतिविलासरभसोद्विग्ना विलासिनी । प्रभातमंगलतूर्यस्वनेन प्रसन्नमुखी बभूव प्राचीवधूः । बंदिमागधजनगीयमानस्तवः समतोषयद्राजपुरुषान् । मादृशां क्षुद्रकवीनां च कल्पनातरंगः पद्यरचनायां

प्रास्फुरद्बुद्धिप्रसादानुरूपः । वीणावेणुकलरवमिश्रितं भिक्षुजनगानं समाह्लादयत्सहृदयहृदयानि ।

प्रणयानुरक्ता प्राक्सुंदरी, पश्चिमांबुधौ निपततं धूसरितशरीरं गलितवर्चसं चंद्रमसमवलोक्य सावज्ञं सिस्मिये । निजदयितस्य दिनपतेरुदयं निर्वर्ण्य विकसिताऽऽसीत्कमलिनी । तथा स्वीयाप्रियशशिदुर्दशानिरीक्षणोदितविषादात्समकुचत्सती कुमुदिनी । भगवतः प्रभाकरस्य प्रभावेण विगतप्रभः समं विभावरीभामिन्या, निलिल्ये कचनास्ताचलकुहरे हिमरश्मिः । युवयुवतीजनसरसचारुविलासविलोकनरक्ता प्रत्यूषे स्नेहविनाकृता तत्क्षणमेव प्रशशाम दीपकलिका । मदनमदोल्लासिनी प्रमोदभरनिर्भरा प्रमदा, रमणरमणीयचिरविहारपरिश्रांता विकचकमलपरिमलवाहिना मंदानिलेनोद्बुध्यमाना द्रुतं तत्याज निद्रातंद्राम् ।

तदेतस्मिन्निसर्गमनोहरे हेमंतप्रभातानेहसि, विमलधवलशिलातले प्रसुप्तस्य मे श्रुतिविवरमाविवेश श्रीशारदादेव्या रणत्कंकणरवः । ततः ससंभ्रमं किंचिदिवोन्मील्य लोचनयुगलम्, 'मातः भद्रे' इति वदत्येव मयि,

"रात्रिर्गता मतिमतां वर मुंच शय्यां,, इति कविकुलगुरोर्मृदुमधुरभारती प्रविश्य कृतार्थीचकार श्रवणयुगलं मे ।

तदनु रसिकरंजनकारिणी मनोहारिणी भगवती सरस्वती व्याजहार मामेवम् ।

"वत्स प्राप्तोऽयं निशावसानकालः । शिथिलिते नवयुवतीसमाश्लेषे, दूरीकृतकमलकोशेन भ्रमरावलिना सह, विश्वविश्वगोऽनुरागो दिगंतमगाहत । रतिरसप्रहृष्टमानसाया, नभोनेपथ्यपटे स्वीयानुरागलीलाचरितं लिखन्त्याः, विष्वक्प्रससार पूर्वा-

शालनायाः कोमलकरकमलभूषणमणिगणखचितकंकणचारुरुचिनिचयः । झर्झरीझणत्कारेण साकं स्निग्धगंभीरमृदंगघोषो व्याप सर्वतो देवतायतनानि । प्रमदोपवने च समुदचलन्वचांसि स्मेरमुखीनां परस्परं पूर्वतननिशीथिन्यामनुभूतसुरतलीलानुबंधीनि। मंथनक्रियाघूत्कारेण, रमणीमणीनां क्वणत्कंकणरणत्कारेण, कांचनकांचीकिंकिणीगणझणत्कारेण च, मुखरितमभूदन्तर्गृहम् ।

अमुष्मिन्नंग, ईदृशमंगलप्रसंगे कुंभकर्णप्रणयिनी (निद्रा)-वशगमात्मानं न मोचयसि । किं तन्मोहलहरीजालेन बद्धोऽसि किं वा कविकुलतिलकस्य काव्यरसवारुणीपानमदेनाघूर्णितोऽसि । अहो कियांस्ते प्रमादः । कियती वा तवानात्मज्ञता । कियांश्च मातृभाषायामनादरः । मदीयनवीनसेवामहोत्सवं कर्तुं कुतो नोत्साहयसि रसिकशिरोमणीन् । अनल्पकल्पनातरंगसारानिमग्नः किं मां व्यस्मरो मातरं सर्वगिराम् । धिक् धिक् त्वामीदृशमलसप्रकृतिम् । अधुनापि समुत्तिष्ठ । जागृहि सत्वरं । विस्फार्य नयने समीक्षस्व समंततः । समन्नतिमापन्नासु मत्तो न्यूनतमासु भाषासु, मदीयामवनतिदशां निशाम्य न त्रपसे । न विदीर्यते किं ते हृदयम् । अथवा कठिनशिलातलविनिर्मितं स्यात्तव हृदयमदयम् । आयुष्मन्नायं समुचितः समयो मदुदासभावस्य । तत्त्वरस्व मत्परिचर्यासमाचरणे रसिकलोकानिति ।

ततोऽतर्हितायां तन्मूर्तौ निवृत्ते च स्वापे तदुदितयैवानुपूर्व्या घटितं तन्निदेशं वाचकान्रसिकाग्रणीन्श्रावयितुं 'को वा पटुरस्मिन्कर्मणि' इति विचारयत एव मे पुरतः सुवर्णशलाकातुल्यां लेखनीसखीमालंब्य चेतोहरा सुवर्णमाला (पत्रिका) कुशलदूतीयं 'श्रीसहृदयाद्वारा प्रियरसिकलोकसकाशं प्रयातुमुद्यता,' निकृत्य चिंतासंतानं मे । इतः परं रसिकाः प्रमाणमिति शुभम् ।

**लेखकः रामाचार्य गलगली ।**

॥ श्रीः ॥

# नारदनैपुणी ॥

(पूर्वतोऽनुवृत्तम्)

---

**सन्ध्या**— अलमलम् । त्रीन् मासान् उर्वश्येव खलु शरणमासीत् तव? वृथा खलु दोष आरोपितो निरपराधायां रत्नावल्याम् । अद्य ह्यवगतो यथार्थः ।

**चित्रसेनः**— सन्ध्यावलि! त्वमन्यथा मन्यसे । एतावता निरन्तरोऽभूत् व्यवसायःसुधर्मायाम् । किञ्चिदपि नाऽऽसीत् विश्रमायाऽवकाशः ।—

**सन्ध्या**— उर्वश्याः प्रासादगमनाय तु!— नाथ! इत्थमपि किमु चलेद्भवन्मनः? अग्निसाक्षिकमेव परिणीतयोस्सत्योरावयोः किं तामल्पां रूपाजीवां मनसाऽपि चिन्तयेः? एतेषु त्रिषु मासेषु यदा कदापि मम स्मृतिरभूत्किं भवतः? पाणिगृहीतीत्यस्याऽपि हि व्यस्मरः!

**चित्रसेनः**— सन्ध्यावलि! किमित्थं भाषते भवती? प्रत्यहमुर्वश्यै नाट्यमध्यापयेति देवराजस्य निदेशः । तदर्थमेवाऽन्वहं तद्गृहं गन्तव्यमभूत् ।

**सन्ध्या**— सम्यक्! तस्या भरतशास्त्राध्यापनायाऽगमः । तया किं नु तावदध्यापितं शास्त्रं भवते?

**चित्रसेनः**— धिक्! धिक्! न हि तथा । सन्ध्यावलि! किं शिथिलयेयमहं त्वन्निष्ठां प्रीतिं? कन्यादशायामेव पाणि-

गृहीतीं, मत्प्राणनाथेत्येतदपि किं विस्मरेयम् ?

**सन्ध्या**-- आम् , सह कन्यादशया कुत्राऽपि गतास्ताः प्रीतयः। किमवगच्छेयमहं तव वृत्तान्तम् ?

**चित्रसेनः**-- प्रिये ! न खलु तथा। सा तादृशमल्पं मां मन्यथाः। पाणिगृहीतीं विहाय त्वां किं तामल्पां चक्षुषाऽपि पश्येयं ?

**सन्ध्या**-- चेदिदं तथ्यं सह मयाऽऽगच्छ। गच्छावो गृहम्।

**चित्रसेनः**-- कः प्रत्यवायस्तत्र ? सत्वरमेवाऽऽगच्छामि। ह्यः किलाऽऽज्ञप्तोऽस्मि नारदमुनिना "चित्रसेन! वक्तव्यमस्ति किञ्चित् द्रष्टव्योऽहमतस्त्वया" इति। किं तदिति विज्ञायाऽर्धकलाभ्यन्तर एवाऽऽगच्छामि।

**सन्ध्या**— नाथ! किमिदं युक्तम् ? त्रीन् मासान् चक्षुषाऽपि मामपश्यन् भाग्यवशादिदानीं लब्धे भवद्दर्शने किमित्येकाकिनीं मामत्र विहाय गच्छसि ? किं सदृशमिदं भवतः ? तथाऽपि मुनिवचनस्य विप्रलापो न युक्तः। गच्छतु भवानद्य। न विलम्बितव्यम्। झटित्येवाऽऽगन्तव्यम्।— तथाऽपि नाथ! प्रत्यागमनपर्यन्तं भवत्कनिष्ठिकामलङ्कुर्वतोऽङ्गुलीयकस्य वितरणेनाऽनुगृहाण माम्। तद्दृष्ट्वाऽपि वा यापयामि कालम्।

**चित्रसेनः**--- को विरोधः? गृहाणेदम्।

(अङ्गुल्यन्तरस्थमङ्गुलीयकं वितरति)

**सन्ध्या**— विरुद्धच, नेदमावश्यकं मम। देहि कनिष्ठिकास्थम् तदेव रमणीयं वर्तते।

**चित्रसेनः**— तद्धि देवेन्द्रेण मह्यं पारितोषिकतया दत्तम् । न तन्मया दातव्यम् । ततोऽन्यत् पृच्छ ।

**सन्ध्या**— मह्यं न दातव्यम् ! परमुर्वश्यै दातुं शक्यते वा ? नाथ ? सर्वोऽपि मयाऽवगतो वृत्तान्तः । तदेवाऽङ्गुलीयकमावश्यकं मम ।

**चित्रसेनः**— सन्ध्यावलि ! नेदं शक्यते वियोजयितुम् । भवत्वनन्तरं— पश्य तत्र— मुनिपुङ्गवो मां प्रतीक्षत इति प्रतिभाति । चेन्न मया सद्यो गम्यते क्रुद्धस्स शपेन्माम् । गच्छामि ।

**सन्ध्या**— नथा ! देहि प्रथमतोऽङ्गुलीयकम् । याह्यनन्तरम् ।

**चित्रसेनः**— नाऽयं समयः, नाऽयं समयः, भवत्वनन्तरम् ।

(त्वरितं गच्छति)

**सन्ध्या**— नाथ ! नाथ ! (अनुगच्छति)

(अन्यतः रत्नावल्यागच्छति)

**रत्ना**— कुतो न दृश्यते प्राणनाथः ? अत्रैव वर्तत– इति खल्वभिहितं मुनीश्वरेण । अत्रैव श्रुतः कोऽपि शब्दः । उर्वश्या सह किमालपन्नासीत् ? मदागमनं दृष्ट्वा किमगच्छताम् ?— हन्त ! यदि तदङ्गुलीयकं भवेदुर्वश्या अधीनं ततो मम गतिः कीदृशी स्यात् ? हन्त ! किमिदानीं क्रियते !

(पुनश्च नारद आगच्छति)

**नारदः**— इतः परं वाऽवहितया भाव्यम् !

**रत्ना**— भगवन् ! भवदुक्तिमनुसृत्याऽत्राऽऽगत्याऽपश्यम्, नैव दृश्यते नाथः !

**नारदः**— नैव मदुक्तिमनुसृत्याऽत्रागता । चेत्तथाऽवश्यं दृष्टो भवेत्त्वया त्वन्नाथः । सद्य एव याहीति खल्वभिहितं मया । त्वं तु आत्मानमलङ्कुर्वत्यतीव व्यलम्बथाः । कस्याऽपराधोऽयम् ?

**रत्ना**— मुनिपुङ्गव ! गतं गच्छतु । कोऽर्थोऽतीतकार्यानुशयेन ? किमितःपरं क्रियते ? भगवन् ! विधेयया कृतोऽपराधः क्षन्तव्यः । अवगमयितव्यश्च दयया कुत्र वर्तते नाथ इति । अङ्गुलीयकलाभोपायं प्रदर्श्य कथमप्यनुगृहीतव्योऽयं जनः ।

**नारदः**— न तन्मया शक्यते । त्वन्नैपुण्येनैव साध्यम् । नैतावताऽप्यधिगतं तदुर्वश्या । तस्यै दातुमेव यमुनातटं गतवान् त्वन्नाथः । त्वरितमेव तत्र गच्छ । आगच्छाम्यहमपि ।

**रत्ना**— भगवन् ! यथानिदेशः । (नारदो गच्छति) मयोर्वशीवेषधारिण्या गन्तव्यम् । समीचीनोऽयमुपायः । पुनश्च न कार्यो विलम्बः । (गच्छति ।)

इति द्वितीयो निःश्वासः ॥

## अथ तृतीयो निःश्वासः ॥

कोकनदकान्तिर्भगवान् प्रभाकरोऽस्ति न वेत्याकुलं रथाङ्गविहङ्गैरवेक्ष्यमाणो मन्दम्मन्दमदृश्यतामवाप । वारुण्यपि दिशा रागिणमपि विहाय रमणं खमणिं तमश्चयमवलम्बमाना प्राचीकटदविश्वास्यतामबलानाम् । सर्वजनलोचनानां वैयर्थ्यमापादयन्तोऽच्छभल्लकुलकश्मला अन्धकारा अहनि स्वरक्षकान् क्ष्माभृत एवाऽवस्कन्द्य कृतघ्नकृत्यं प्राकाशयन् । क्रमेण

चाऽखिलोऽपि लोकोऽञ्जनसच्छायैर्मांसादानां क्षपाटानामानन्दप्रदैस्सर्वतेजोभिभाविभिस्तमस्संघातैराक्रान्तो बभूव। समयेऽस्मिन् चित्रसेनस्समया यमुनातटमागत्य स्वयमित्थं ब्रवीति ।

**चित्रसेनः**— किमर्थमुर्वशीवचनादभिहितोऽस्मि दूतेन, चित्रसेन! त्वयाऽहमत्राऽऽगत्य द्रष्टव्येति । विहाय नाकलोकं स्वयं भुवमागता मामपि किमर्थमाह्वयति? वर्ततेऽत्र किमपि रहस्यम्!—— कुत्रोर्वशी, न दृश्यते?—— हहह! कथङ्कारं रमणीयो वर्ततेऽयं प्रदेशः? अद्यैव ज्ञायत आशय उर्वश्याः । अतिशेतेऽमरलोकमपीदं यमुनातीरम् । रमणीयाभिस्तरङ्गमालाभिस्सनाथाऽतिजवात्प्रवहन्तीयं कस्य वा नाऽपहरेद्धृदयम् । अभितस्तटं निरन्तरसञ्जातैरभ्रङ्कषैः पादपैः दिवाऽपि स्वैरसल्लापानुकूलोऽयं प्रदेश इति मत्वैव सा नूनं मामत्राऽऽह्वयत् । न खलु प्रदेशोऽयं निवासार्होऽस्या यमुनायाः । अर्हेयमवश्यमस्मदावासभूतस्य पुरन्दरपुरस्यैव । नैतदाश्चर्यम्, यदाचकांक्षोर्वशी प्रदेशममुम्।—— कुतो नायाति कालेनेयताऽपि? कदाचित् पूर्वमेवाऽऽगता मदागमनमदृष्ट्वा मह्यं क्रुद्ध्यन्ती गूढमत्रैव कुत्राऽपि तिष्ठेदिति मन्ये ।

(उपविशति, श्रुत्वा पादविन्यासशब्दम्)

तत्र खलु श्रूयते पादविन्यसनशब्दः । तत्रैव गत्वा पश्यामि ।

(गच्छति)

(अपरत उर्वशीवेषधारिणी सन्ध्यावल्यागच्छति)

**सन्ध्या**— हा! नैतावताऽपि गवेषयन्ती विलोकयामि नाथम् । शक्यते पदमपि चलितुमद्य मया । नैव दृश्यते कुत्राऽपि ।

कदाचित् किं पारे तिष्ठेद्यमुनायाः? चेत् तत्र स्यात् किं पारयामि जवेन प्रवहन्तीमेनां तरितुम्? मन्ये नभोमार्गेण तरणं सुसाधमिति। चेत्तथा यायां प्रकटीभवेदयं प्रच्छन्नो वेषः नाथोऽपि मम संशयीत। किमत्र क्रियते?– अङ्गुलीयकस्वायत्तीकरणानन्तरमवगतायामपि मयि न कश्चित्प्रत्यूहः। यदि ततः पूर्वमेवाऽवगता भवेयं तदा दुस्साध एव मम मनोरथः। धर्मसङ्कटेऽस्मिन् किं क्रियते?— कस्सः?— हन्त! समागतैव दुर्भगा सोर्वशी! साऽपि गवेषयति प्राणनाथमिति प्रतिभाति। यदि प्रथमत एव मया दृष्टो भवेन्नाथः तदा सिद्धप्राय एव मम मनोरथः। तदागमनात्पूर्वमेव गत्वा गवेषयामि।

(सत्वरं गच्छति।)

(अपरत उर्वशीवेषधारिणी रत्नावल्यागच्छति।)

**रत्ना**— क मे प्राणनाथः! सत्यमेव नारदवचनम्। परन्तु मया नाऽनुसृतम्। प्रयाणकाल एव शकुनस्य वैपरीत्यात्कृतेऽल्पे विलम्बे निष्फलमभूत्सकलं कृत्यम्। उर्वशी तु प्रथमत एवागत्य गवेषयति नाथम्। यदि ततः पूर्वमेव पश्येऽयं कथमपि तदङ्गुलीयकं स्वायत्तीकृत्य दुर्भगाया अस्या उत्सेकं विनाशयेयम्। विना कालविलम्बं त्वरितमेव गवेषयामि।

(गच्छति।)

(सन्ध्यावलीचित्रसेनौ मिथःसन्दधाते।)

**चित्रसेनः**— हन्त! प्रिये! उर्वशि! त्वां गवेषयन्परितः प्रदेशममुं कियन्तं कालं भ्रमामि। अद्य वा भवत्या दर्शनमभूदिति महान् मम प्रमोदः। प्रिये! त्वदुक्तिमनुसृत्याऽङ्गुलीयकसना-

थ एवाऽत्राऽऽगतोऽस्मि । तथाऽपि वर्तते वक्तव्यं किंचित् । किमिति मां संशेते भवती! भवद्दर्शनानन्तरं दुर्भगे रत्नावली-सन्ध्यावल्यौ किं पश्येयं चक्षुषापि? अङ्गीकुरुष्वाऽङ्गुलीयकमिदम्— धिक्! धिक्! किमिदं कष्टम्?

(अपरतः रत्नावल्यागच्छति ।)

कः सः?— उर्वशि! किम्, स्वप्नो नु? उत मतिभ्रमः?

**सन्ध्या**— नाथ! प्रयच्छ प्रथमतोऽङ्गुलीयकम् । ततो गच्छ ।

(आकर्षति ।)

**चित्रसेनः**— [अवधूय] विसृज करम्— किमिदमाचरितं मया! (रत्नावल्याः समीपं गत्वा) प्रिये! उर्वशि! मया कृतोऽयमपराधो मर्षणीयो भवत्या । भवतीमन्विष्याऽत्रं भ्रमति मयि दुर्भगेयं रत्नावली त्वद्वेषं स्वीकृत्य—

**रत्नावली**— नाथ! किमहं दुर्भगा रत्नावली!

(उर्वशीवेषं त्यजति ।)

**चित्रसेनः**— किमिदं कष्टम! रत्नावलि! मा कुप्यतु मह्यं भवती । अहम्—

**रत्नावली**— किमर्थं मां भाषसे! दुर्भगा रत्नावली खल्वहम्!

**चित्रसेनः**— प्रिये! मा रोदितु भवती । शृणु मदुक्ति, दुर्भगा सन्ध्यावलीति वक्तुमारभमाणोऽहं भ्रमादन्यथाऽभ्यधाम् ।

**सन्ध्या**— सम्यक्! सम्यक्! (सन्निकृष्टा भूत्वा) किमहं दुर्भगा सन्ध्यावली? (वेषं त्यजति)

**चित्रसेनः**— किमिदं कष्टम! सन्ध्यावलि!

**सन्ध्या—** दुर्भगा सन्ध्यावली ! मां—

**चित्रसेनः—** हन्त ! किमिदं कष्टम् !— उभयतस्पाशा रज्जुः किल संवृत्ता । रत्नावलि !

**रत्नावली—** आह्वय दुर्भगा रत्नावलीति । मामपि— (उर्वशी च तिरोभूय सर्वमप्यमुं सल्लापं शृण्वन्ती वर्तते)

**चित्रसेनः—** हन्त ! न खलु युवां मह्यमेवं कुप्यतम् । किमिदं युक्तम् ? सर्वस्याऽप्यस्य दुर्भगा सोर्वश्येव निदानम् । किमर्थं युवां उर्वशीवेषधारिण्यावत्राऽऽगमताम् ?

**उर्वशी—** (प्रत्यक्षीभूय) चित्रसेन ! किं ब्रवीति भवान् ? अवधेहि ! किमहं दुर्भगोर्वशी ?

(वियतोड्डीय गच्छति ।)

**चित्रसेनः—** हन्त ! उर्वशि ! उर्वशि ! (उर्वशीमनुसरति ।)

**सन्ध्या—**
**रत्ना—** } हन्त ! प्राणनाथ ! प्राणनाथ !

**सन्ध्या—** हहह ! गच्छत्ययं विमानमारुह्य नभोमार्गेण । सर्वमपीदं त्वयैव कृतम् । उर्वशीवेषधारिण्यत्राऽऽगत्य सर्वमपि नाशितवत्यसि ।

**रत्नावली—** त्वं किमर्थमत्राऽऽगता ? मदागमनात्पूर्वमेवागतयाऽपि त्वया किमत्र कार्यं साधितम् ? अङ्गुलीयकं वा किमग्रहीः ?

(क्रमशः ।)

ख्यातस्तेषु स एव किञ्च कवितारीतौ दृढं शिक्षितः
प्रौढश्रीरघुनाथभूमिपतिना प्राज्ञावतंसेन यत् ॥ २३ ॥

**नटः**— तत्रभवता रघुनाथभूभृता शिक्षित इत्यनेनैव तावदस्यापि कवयिता यज्ञनारायणयायजूक इति जानामि— यो वा रघुनाथभूपविजयसाहित्यरत्नाकरयोः काव्ययोः कर्ता । स एव खलु साहित्यरत्नाकरनाम्नि काव्ये तत्कृतां शिक्षां विशेषेण मतिं चैवमुपश्लोकितवान् ।

काव्यालंकृतिनाटकादिकलनापाण्डित्यमत्यद्भुतं
सर्वज्ञो रघुनाथभूशतमखो यस्योपदिश्य स्वयम् ।
आदातुं गुरुदक्षिणामभिमतामर्हो्ऽप्यहो दत्तवान्
कर्णालङ्करणं निजं च पतकं पादाङ्गदं कंकणम् ॥२७॥

तस्मादस्माभिरस्य कवेरतिवेलरसरमणीया वर्णनीया वाणी ।

**नाट्याचार्यः**— प्रागेव वर्णिता सावकद्वदविद्वदवतंसायितवचसा विधुतालङ्कारिकविबुधाहङ्कारेण कृष्णयज्वना । तथाहि—

द्राक्षामद्राक्षमिक्षुद्रवमपिबमपां क्षौद्रमक्षुद्रमादं
मोचामाचाममुच्चैः क्वथितमथ पयः शर्करामप्यचर्वम् ।
तानि श्रीयज्ञनारायणमखिवरवाङ्मौखरीवैखरीभिः
स्तायन्ते यातयामान्यमृतमविषयो नन्दितुं निन्दितुं वा ॥

किं च,

डिण्डिमकुलमण्डनेन पण्डितशिखामणिना सोमनाथेन । तथाहि—

अमृतमृगमदादीनाद्रियन्तां वराकाः
कतिचन करणानां शर्म निर्मातुकामाः ।

R. 2

अपि तु वयमपारां यज्ञनारायणोक्त्या
निखिलकरणनाडीनिर्वृतिं कल्पयामः ॥ २९ ॥

**नटः**— अस्ति श्रूयते ॥

**नाट्याचार्यः**— सखे नटकेसरिन्! अत्याश्चर्यकरी खलु बुद्धिमत्ता भवतः। यदहं वासिष्ठकुलसौष्ठवकृते कृतावतारं गोविन्दमखीन्द्रं निर्दिश्य तस्य तनुजोऽयमिति पार्श्ववर्तिनमेनं कवीन्द्रं यावन्न निर्दिशामि, ततः प्रागेव देशान्तरेषु तत्प्रसिद्धिमाकर्णितवता भवता प्रकृते विविक्तमनुक्त एवायं यज्ञनारायणयायजूको द्विजकुलशेखरः पादाङ्गदादिनृपासाधारणभूषणविभूषितः सदसि स एवायमिति प्रत्यभिज्ञातः कवयिता।

**नटः**— आर्य नाट्याचार्य! मादृशानां बुद्धिमत्ता नाम भवादृशमहानुभावानुग्रहायत्ता।

**नाट्याचार्यः**— अलमलमियत्या प्रसक्तानुप्रसक्त्या। प्रस्तुतं वस्तु तावदावामवतारयितुं सशिष्याविह यतिष्यावहे।

**नटः**— आर्य नाट्याचार्य! विचार्य सम्यगनुबोधितं भवता।

**कृती बालः सोऽयं निरवधिकृपालोकनकन-**
**त्सुधावीचीनीचीकरणचणसूक्त्या दिशि दिशि।**
**अमुष्य प्रख्यातो वसति रघुनाथावनिपतेः**
**सभायामेतस्यां ध्रुव इव समीपे मधुरिपोः ॥ ३० ॥**

कुत्रापि नाटकस्य कर्ता नायकोऽप्युभावेकसभावस्थितौ मयेत्थमभिनयसमये न दृष्टचराविति विस्मयातिशयेन विस्मृतवानस्मि। तत्प्रतिपात्रमाधीयतां यत्नः यथाधिकारं वर्णिकापरिग्र-

हणक्रियासु गायनाश्च किं रसायनानि तत्तद्वर्णिकोचितानि गीतानि परिचिन्वन्तु पाणविकवैणिकवैणविकमौरजिकप्रमुखाश्च यथायोग्यमेतानि पणवाद्यानि वाद्यानि वादयन्तु । पुनरपरेऽपि नेपथ्यान्तरे तत्तद्वेषधारणानुरूपप्रतिशीर्षकवर्णचूर्णनविविधपटकल्पनप्रभृतीनि सज्जयन्तु ।

(प्रविश्य प्रियदर्शिका)

**प्रियदर्शिका—** अज्ज सव्वं सज्जम् । णाडयणाययस्सरहूणाह भुविहुणो भूमियं सारङ्गणामहेयस्स विऊसयस्सवियहि । वियकला अउलाभवंताणं माउला वहन्ति । देवीए अचन्दकलाए कलावदीवहदीयं अहं उण्णाद अणाय आणं एवाणं संघडणपासवं भअंतिएवहेमिजोइणीए पडिहावदीए । विरखंभजोग्गणार आपव्वदभूमि आणितक्कमं विदन्दं भवन्दं णअरियं विणीयो जयन्ति भरअउत्ता ।

**नटः—** आर्ये अद्य प्रस्तुतं शरत्समयं सकलराजकविजययात्रामौहूर्तिकमधिकृत्य गीयतां तावत् ।

**प्रियदर्शिका—** तह ( इति गायति । )

**परिइदपव्वदणारअणिग्गमणेन्तअणुराअहंसोअम् ।**
**विविहसुतिण्डविहारी पमदं विअ पदुमिणिं अणुसरेइ ॥**

**नटः—** आर्ये ! इतः परमप्यनन्तरकरणीयं संविधेहि ।

**प्रियदर्शिका—** जं अज्जो आणवेदि । (इति निष्क्रान्ता ।)

**नाट्याचार्यः—** एषोऽस्मि नारदः संवृत्तः ।

**नटः**— अहमपि पर्वतः । ( इत्युभावपि नेपथ्यान्तरं प्रविशतः । )

॥ **प्रस्तावना** ॥

( ततः प्रविशति विष्टरोपविष्टो नारदः । )

**नारदः**— (विषादं विस्मयमप्यभिनयन् अन्यत्रासक्तचित्त इव तूष्णीं तिष्ठति) (प्रविश्य पर्वतः)

**पर्वतः**— (सोद्वेगम्) अहो दुःसहो मे सुहृद्वियोगः । यदयं समाधिपरवशहृदयं विहाय मामप्यसहाय एव दक्षिणसमुद्राभ्यर्णचरं लोपामुद्रासहचरं मुनिवरमालोकितुं भूलोकं चिरादुपगतो न पुनरायातः कलहानन्दी कर्मन्दी । (विमृश्य)

**मध्येपथं किमथवा महिपालकाना-**
**मालोकयन् भुवि समीकमसावगस्त्यम् ।**
**विस्मृत्य मामपि च विस्मितचित्तवृत्ति-**
**रास्ते कुहापि रणपारणपारिकांक्षी ॥ ३२ ॥**

तावदेनमन्विष्यामि (इति नाट्येन परिक्रामन् पुरस्तादवलोक्य) कथमत्रैव मम बालमित्रं बृसीमध्यासीनो वल्लकीमौनिमल्लः । उपसृत्य तावदेनमभिवादयामि । ( इत्यभिवादयति । )

**नारदः**— (अजानन्निव तूष्णीं तिष्ठति)

**पर्वतः**— किमयं सहायतया न सहाया इति विचारयन्मां न संमानयति । ( विचिन्त्य ) अयं प्राणादपि मानसीये मयि वीणामौनी न कदापि तदाविचारयिता । किमुत अनेन ब्रह्मध्यानपरेण चिरमध्यास्यते । ( विमृश्य ) कथं पुनर्ब्रह्मसमाधिरहितोऽयमध्येति मध्येपदम् । अस्य हि—

उल्लिखति किमपि मानस-
मुल्लसितविषादविस्मयस्तिमितम् ।
नासाग्रे नयनयुगं
न निहितमास्ये च न प्रसादलवः ॥ ३३ ॥

**नारदः—** ( श्रुतिमभिनीय चिरेण पश्यति । )

**पर्वतः—** ( पुनरभिवादयति । )

**नारदः—** ( मस्तके हस्तं निधाय ) ब्रह्मध्यानपरायणो भव ।

**पर्वतः—** ( साञ्जलिबन्धम् । ) अत्रभवतः प्रतिगृहीतमाशीर्वचनम् ।

**नारदः—** ( विष्टरार्धं उपवेशयन् सानन्दबाष्पगद्गदम् । )

सुहृदं परमं हित्वा सुचिरं हित्वा समानसुखदुःखम् ।
समयमियन्तं समचरमेकाकी येन निष्ठुरोऽस्मि ततः ॥

**पर्वतः—**

सख्यं भवादृशजने सकृदप्यवाप्त-
मस्मद्विधान्न तु कृतार्थयितुं समर्थम् ।
अव्याहतं यदि तदेतदसन्निधाने-
ऽप्येवं भवेत्परमितोऽपि किमर्थनीयम् ॥ ३५ ॥

**नारदः—** पर्वत ! किमुपचारवचनोपन्यासेन —

सर्वत्राव्याजसौहार्द्रदृष्टान्तत्वेन दिक्षु यौ ।
ख्यातौ तावेव खल्वावां सखे नारदपर्वतौ ॥ ३६ ॥

**पर्वतः—** सखे नारद, सखेद इव किं दृश्यसे ; विस्मेर इव च ।

**नारदः—** पर्वत ! सर्वमेतं मे वृत्तान्तमभिदधामि । सावधानमवधारय ।

**पर्वतः—** (अवहितश्रुतिमभिनीय तिष्ठति)

**नारदः—** पुरा खलु मया पुराभियातिचरणपरिचरणमहिमातिशयसमासादितक्षमानम्रंकरणचरित्राभिनन्द्यं मैत्रावरुणिं मुनिलोकतिलकमालोकितुं भूमण्डलमाहिण्डमानेन प्राभातिकपवमानेरितक्रमुकपालीमहलीपरिमललहरीदूरीकृताध्वपरिश्रमेण विविधाध्वरसमाहूतपुरुहूतप्रमुखसकलबर्हिर्मुखसन्ततकृतसान्निध्यो विद्योतमाननिखिलविद्योपदेशविजितसुरदेशिकभूदेवसमाजधन्यतमः समतन्यत, नयनविषयश्च विषयः ।

सदा यस्मिन्निन्द्रे वसति सति हव्यैकरसिके
न गृह्णीते कोऽपि प्रसवकलिकं नन्दनवनम् ।
अथो गृह्णीते चेत्प्रसवधनुरेको दलयितुं
शरौघैरिन्द्राणीं सहचरवियोगव्यसनिनीम् ॥३७॥

किं च,

प्रयोगे यागानां परिचयविधौ यज्वबटुकैः
समन्तात्संभूताः सरभसमुपेताः क्रतुभुजः ।
अथालोक्यामीषामहुतहविषां शुष्कयजनं
हसन्तो यत्रान्यं मखविधिमयन्ते प्रमुदिताः ॥३८॥

अपि च,

प्रत्यग्रैः कदलीफलैः परिणतिप्रभ्रंशिभिः सन्ततं
माकन्दप्रसवासवैश्च मिलितैर्मार्गोऽखिलः पङ्किलः ।
पार्श्वद्वन्द्वतरुप्रसूनपि पतद्धूलीभरैर्मेदुरो
यस्मिन्लाङ्गलिभिर्विपाकगलितैरेवाधिकं घट्यते ॥३९॥

तत्र किल विलसति मिखिलमहाबलनृपकुलविजयमहास्तिकहास्तिकप्रशस्तिमतिगभस्तिमदितनिशान्तशिखरभृशान्तरितदिशान्तरानिरन्तरायतन्तन्यमाननिरन्तरायतकल्याणवाद्यमानपणवाद्यमानवाद्यकन्दलितध्वनिदलितगिरिकन्दरा दिगन्तरागतसकलसामन्तराजकोपनीयमानतपनीयरुचिपुंजापिञ्जरितधरणितलमीनकेतनमणिनिकेतनचत्वरा रिपुजित्वरालघुसत्वराजितरणोद्भटहट्टद्भटसङ्घसङ्कटतरविशंकटविविधहाटकशृङ्गाटकप्रदेशा विदेशागतसमुन्नतमुखलीनखलीनखचिततत्ताद्दृशमुक्तामणिविसरदुद्दामदामगरिमपरिहसितहरिहयपुरहयरयवियदङ्कणविलंघनचतुरगतितुरगचटुलखरतरखुरपुटकुद्दालनिर्दारितबाह्यालिभूपरिसरा, सौधोपरिसरागमणिसरापाकाहितवनपरिपाकाहितविशरणवशरभसपतितबीजपूरफलबीजसन्दोहसन्देहसन्धानगन्धर्वकरसमिन्धानकेलीशुकनिकरसन्दितसन्ततसान्निध्या रसान्निध्यानपरमानसपरमानन्दनिष्यन्दनिर्माणकर्मान्तिकहर्म्यान्तिकचरलीलाकलापिकलापभरकलादेशिककैशिकरजनीकरजनितकदनानुबन्धवदनारविन्दपाठीनपाटवविनयननयननिन्दितदन्तिवरकुंभकुचकुंभनिजसेवनकरपद्मकरयुग्मदुष्करतरपुष्करकलहलग्नवलग्नकृतपल्लवतल्लजकृपणतोपादनपादनलिनवारकंजाननावारशिञ्जानमणिमञ्जीरसंजीवितपञ्चाशुगा, प्रपञ्चागीतमहिमनृपतिपञ्चाननसञ्चारदरी तञ्जानगरी ॥

तामावसन्पुरमिवाधिसमानधामा
कामातिशायिसुषुमागरिमातिधीमान् ।
धत्ते भुजेन धरणीवलयं वलारि-
रत्नाङ्गदेन सदृशं रघुनाथभूपः ॥ ४० ॥

**पर्वतः**— अस्ति श्रूयते । ततस्ततः ।

**नारदः**—

नानाद्वीपजनाधिपैरनुसृतो नम्रैः प्रकीर्णद्वयी-
वीटीपेटकहेमवेत्रलतिकाभृत्यास्वभृत्यायितैः ।
प्राज्यं राज्यमयं स्वमन्त्रितिलकं प्रापय्य संप्रास्थित
प्रौढश्रीरघुनाथपार्थिवमणिस्तीर्थानि संसेवितुम् ॥४१॥

**पर्वतः**—

येषां योषाः सरसहृदया यौवनं भोगहेतुः
सौधाः सौधाकरमणिमयाः सौख्यदं चाधिपत्यम् ।
तादृक्षाणां सकलधरणीमण्डलाखण्डलानां
तत्वामोहं कथमिव भवेत्तीर्थयात्राभिलाषः ॥ ४२ ॥

**नारदः**— इतरेषामेव भूतलवलद्विषामेष स्वभावः । किं तु न तावदसौ तथाविधः ।

वोढापि भूमीवलयं यतोऽखिलं
चतुःसमुद्रीलहरीविमुद्रितम् ।
धर्मानुरोधेन धरावलाहितो
बिभर्ति नित्यं विषयाभिलाषिताम् ॥ ४३ ॥

**पर्वतः**— भवतु । तथाप्यवितथावाप्तसर्वाकारसंपदस्तस्य सांप्रतं किं प्रार्थनीयमनेन तीर्थयात्रायासेन ।

**नारदः**— युक्तमुक्तं भवता । तथापि—

दीर्घत्तीरानिवातदन्दुरमहीतीर्थं च शीर्णोपल-
त्रुट्यद्गोपुरदुष्प्रवेशविपुलद्वारं च देवालयम् ।

अरे धान्यक, कथय प्रथमं कः पुनः कथासंदर्भोऽस्य नाटकस्य । ततः पठ्यन्तां नामानि नटानाम् ।

**धान्यकः**— शू अदिकलुणे एशे पअळणे । शामिणीए भाणुमईए शामिणाह अम्हइदाह अ तुमुळे पाणविओए वेअ वत्थु शे णाडआह ।

हा ! अतिकरुणमेतत्प्रकरणम् । स्वामिन्या भानुमत्याः स्वामिनोऽश्मकेन्द्रस्य च तुमुलः प्राणवियोग एव वस्त्वस्य नाटकस्य ।

**अधरकः**— शाहु ळे धण्णआ शाहु, पढ पढ शंव्वदं ताणं अहिहाणाइ णडाणम् । वळे णाडआ, ण एअत्थ संउलीहोध ।

साधु रे धान्यक साधु ! पठ पठ सांप्रतं तेषामभिधानानि नटानाम् । भो नटाः, नैकत्र संकुलीभवत ।

**धान्यकः**— अज्ज णाडआ शुणाध । (इति दलं विदलय्य वाचयति ।) पुढमे दाव तन्तुवाए अहळए ।

भो नटाश्शृणुत । प्रथमं तावत्तन्तुवायोऽधरकः ।

**अधरकः**— हके, हगे, अहए शज्जे । कहेहि का मह भूमिआ ।

अहमहमत्र सज्जः । कथय का मे भूमिका ।

**धान्यकः**— अम्हइन्दे होहि ।

अश्मकेन्द्रो भव ।

**अधरकः**— के एशे अम्हइन्दे कूळे आदु अणुळाइणे ।

क एषोऽश्मकेन्द्रः । क्रूरो वानुरागी ?

**धान्यकः**— एशे शे अणुलाएण पणएण अ अप्णो पाणा ओ-वच्चिदवन्ते ।

अयमनुरागेण प्रणयेन चात्मनः प्राणानपवर्जितवान् ।

**अधरकः**— अले ले धण्णआ, मए अणुलाआदु शाहु कलुणे अहिणीदे अहिअदलं अश्शु मोइश्शन्दि शव्वे वि शामाइआ । जइ चउले हके ता अक्खिलक्खणे होन्तु शावहाणा चक्खु-क्कलआ । तइ प्पअंव्वणं पि प्पअंव्वइश्शं । भीमं पि भाअइश्शं! शव्वंपि शिढिळीकलिश्शं । लोद्दतलं केळिश्शं । चालआ वि भेइ-श्शं त्ति उच्चवआइ मह विजंफिदाइ । होदु जहशत्ति कलुणं पि अहिणइश्शं । के के इअले णडा । कहेहि ।

अरे रे धान्यक, मया अनुरागात्साधु करुणेऽभिनीते, अधिकतरं अश्रु मोचयिष्यन्ति सर्वेपि सामाजिकाः । यदि चतुरोहं तदक्षिरक्षणे भवन्तु सावधानाश्चक्षुष्मन्तः। तदा प्रकम्पनमपि प्रकंपयिष्यामि । भीममपि भापयि-ष्यामि । सर्वमपि शिथिलीकरिष्यामि । रौद्रतरं क्रीडि-ष्यामि । चारकानपि भेत्स्यामि । इत्युच्चावचानि मे विजृंभितानि । भवतु यथाशक्ति करुणमप्यभिनेष्यामि । क इतरे नटाः । कथय ।

**धान्यकः**— दुदीए दाव वशुपाळिदए ।

द्वितीयस्तावद्वसुपालितः ।

**अधरकः**— धण्णआ, अअं म्हि ।

धान्यक, अयमस्मि ।

**धान्यकः**— वशुपाळिदा, भाणुमई होहि ।

वसुपालित, भानुमती भवेः ।

**वसुपालितः**— किणु शे भाणुमई त्ति । के वि जत्तिए वीळे वा ।

किं तद्भानुमतीति । कश्चिद्यात्रिको वीरो वा ।

**धान्यकः**— शा का वि तळुणी जं अम्हइन्दे कामेज्ज ।

सा कापि तरुणी यां अश्मकेन्द्रः कामयेत ।

**वसुपालितः**— कइ वि हके अवळा ण होज्ज । किं णो अहए उम्भिज्जमाणम्हशुळिए ।

कदाप्यहमबला न भवेयम् । किं नाहमुद्भिद्यमानश्मश्रुकः ।

**धान्यकः**— इशि मुहं अच्छादिअ वेअ णडिश्शशि । मिउभाशी अ होहि ।

ईषन्मुखमाच्छाद्यैव नटिष्यसि । मृदुभाषी च भव ।

**अधरकः**— अळे ळे धण्णआ, हगे अ मुहं अच्छादिअ भाणुवळ्ळहा, माणअ मईए वेशं गण्हिश्शं ! अहिणइश्शं । आळविश्शं अ मंजु । अम्हइंद, पिआ तुह म्हि भाणू, भाणुर्मा, भाणुमी, भाणुमई त्ति अ शळशदळं अहिव्वाहळिश्शं ।

अरे रे धान्यक, अहमपि मुखमाच्छाद्य भानुमत्या वेषं ग्रहीष्यामि । अभिनेष्यामि । आलपिष्यामि च मंजु । 'वल्लभ' मानद, अश्मकेन्द्र, प्रिया तवास्मि भानूः, भानुनी, भानुमती, इति च सरसतरमभिव्याहरेयम् ।

**धान्यकः**— णो णो तुमं शि अम्हइंदे । वशुपाळिद, तुं भाणुमई शि ।

नो! नो! त्वमस्यश्मकेन्द्रः। वसुपालित, त्वमेव भानुमत्यसि।

**अधरकः**-- अहइं, तदो तदो।

अथ किं ततस्ततः।

**धान्यकः**-- तदो एत्थ ळिहिदे शाहए।

ततोत्र लिखितःसाधकः।

**साधकः**-- एशे म्हि शाहए।

एषोस्मि साधकः।

**धान्यकः**— अळे शाहआ भाणुमईए माढुभूमिअं गण्ह। तदोअ ळाअशे।

अरे साधक, भानुमत्यामातृभूमिकां गृहाण। ततश्च राजसः।

**राजसः**-- के मे वेशे।

को मे वेषः।

**धान्यकः**— अळे ळाअश, तुमं अम्हइन्दाह आवुए होहि। हके भाणुमईए आवुए। चळमे दाव धणए। अळे ळे धणआ, केशरिणेवच्छं गण्ह। तह जइ ओशिदे णाडए।

अरे राजस, त्वमश्मकेन्द्रस्य जनको भव! अहं भानुमत्या जनकः। चरमस्तावद्धनकः। अरे रे धनक, केसरिनैपथ्यं गृहाण। तथा चेत् अवसितं भवति नाटकम्।

**धनकः**— किण्णु मए शिंगरूविणा ववहाळिदव्वं ळंगभूमिमि,

तं ळिहिदं अत्थि जइ अज्ज वेअ दिज्जउ । जं एशे मान्दे पढणकम्माणि ।

किं मया सिंहरूपिणा व्यवहर्तव्यं रङ्गभूमौ । तल्लिखितमस्ति चेदद्यैव दीयताम् । यतोहं मंदः पठनकर्मणि ।

**धान्यकः**— ण किं पि तुह अत्थि पढणिज्जम् । केशळिणो ववहाळे उ अशीहिदेण वि शुअळे । जदो अट्टहाशे वेअ शे वाहाळे ।

न किमप्यस्ति ते पठनीयम् । केसरिणो व्यवहारस्त्वशिक्षितेनापि सुकरः । यतोऽट्टहास एव तव्द्यवहारः ।

**अधरकः**— अट्टहाशे जइ हगे वि केशळी होम्मि । गहिळं लुविमि । गच्चंमि जीमूदे विअ । तह मुहळीकरीळंश दह वि दिशाओ मह गच्चणेण । जह अम्हाणं अवणिवे उण वि गच्च त्ति वइश्शइ ।

अट्टहासश्चेदहमपि केसरी भवामि । गभीरं रौमि । गर्जामि जीमूतइव । तथा मुखरीकरिष्यामि दशापि दिशो मद्गर्जनेन यथाऽस्माकमवनिपः पुनरपि गर्जेति वदिष्यति ।

**धान्यकः**— जइ अहिअं गच्चशि तइ अवळाओ शव्वाओ वि भएण लुदन्तीओ ओशळेज्ज । तइ अम्हाणं चित्तवधं काळइश्शइ ळाआ ।

यद्यधिकं गर्जसि तदा अबलाः सर्वा अपि भयेन रुदत्योऽपसरेयुः । तदाऽस्माकं चित्रवधं कारयिष्यति राजा ।

**सर्वे**— (सभयम् ।) अविघ प्पमाए । सच्चं जेव्व अम्हे चित्तवधं अणुहुविश्शम्ह ।

अहो प्रमादः । सत्यमेव वयं चित्रवधमनुभविष्यामः ।

**अधरकः—** चित्तवधभीई जइ मिउ मिउ गज्जम्हि । कोइळो व्व ळुवीमि ।

चित्रवधभीतिर्यदि मृदु मृदु गर्जामि । कोकिळ इव रौमि ।

**धान्यकः—** अम्हइन्दादु उदे ण अण्णा भूमिआ तुह जुज्जइ । जदो शे अम्हइन्दे ळमणिज्जवअणे ळुव्वजोव्वणसंवण्णे विळाशी अ । अदो तुमं अम्हइन्दणेप्पच्छं वेअ धाळइश्शशि ।

अश्मकेंद्रादृते नान्या भूमिका तव युज्यते । यतः सोऽश्मकेंद्रो रमणीयवदनो रूपयौवनसंपन्नो विलासी च । अतस्त्वमश्मकेंद्रनैपथ्यमेव धारयिष्यसि ।

**अधरकः—** तह अथ्थु ।

तथाऽस्तु ।

**धान्यकः—** वळे नडा, शव्वे वि तुम्भे णअळादु बहीं आआमिणीए जोण्हाधवळिदं अळण्णाणिं अवणिवाह प्पविट्ठेण मए शंगच्छध । तत्थ णिश्शंबाहवेळाए विअळिदविघ्घशंका शंम णडित्तूण पओअणिउणा हुविश्शम्ह ।

भो नटाः, सर्वेपि यूयं नगराद्बहिरागामिन्यां शर्वर्यां ज्योत्स्नाधवलितामरण्यानीमवनिपस्य प्रविष्टेन मया संगच्छध्वम् । तत्र निःसबाधवेलायां विगलितविघ्नशङ्काः सम्यङ्नटित्वा प्रयोगनिपुणा भवेम ।

**सर्वे—** तह ।

तथा ।

(इति निष्क्रान्ताः ।)

**इति प्रवेशकः ।**

---

(ततः प्रविशतो नेपथ्योभयपार्श्वाभ्यां प्रमोहः किन्नरी च ।)

**प्रमोहः**— भद्रमुखि, कुत्र गम्यते ?

**किन्नरी**— साम्प्रतमहम्—

क्वचिच्छैलाग्रेषु क्वचिदपि च नीरन्ध्रतमसि
क्वचिद्रम्यारण्ये दवदहनदग्धेषु तरुषु ।
क्वचिच्छैलद्रोण्यां बहुपुलिनहृद्ये च सरसि
ह्यतिक्रान्ता वेगाच्छशिनमपि सर्वत्र गमने ॥ १ ॥

विद्याधरवरमहिषीसेवानिरताऽहमार्य मन्तव्या ।
तत्परितोषायाशु प्रजवं गच्छामि तत्पार्श्वम् ॥ २ ॥

रे रे किन्नर, कुशलमस्तु ते । सम्प्रत्यागमिष्यत्यचिरेणैवास्मत्स्वामिन्यत्र सह परिवारेण ।

**प्रमोहः**— अयि, किञ्चिच्छृणुष्व मे वचनम् । निर्णीतवानस्मद्राजा प्रदोषोऽत्रैवास्यामेव रजन्यामागत्य परिवारेण नर्तितव्यमिति । तत्कुरुष्व यथाऽस्मदवनिपस्य दृष्टिपथं नावतरेत् स्वामिनी । यतस्तस्यामतीव बद्धवैरो देवः । सा त्वेष्वेव दिवसेषु कञ्चित्सुन्दरं राजकुमारमानीय वर्धयति । तं खल्ववनिपः स्वसेनापतिं चिकीर्षति । देवी तु न कदापि बालकं दास्यामीति साभिनिवेशं भणति । ततः प्रभृति कोपाविष्टस्तस्यां राजा । तं तु राजकिशोरकमतिवादरेण पोषयति देवी । जातीचम्पककुसुमैरलङ्करोति शश्वत् । स एवास्या हर्षभूमिः । तस्मादद्य

वने वा शैले वा तरुगहनकुञ्जेषु पुलिने
गृहारामे रम्ये नभसि विपुले वा सरसि वा ।

दिने वा शर्वर्यामविकलशरच्चन्द्रमसि वा
मिथो देवो देवी विकलमनसौ वीक्षितुमपि ॥ ३ ॥

**किन्नरी**—(प्रमोहं सम्यङ्निर्वर्ण्य ।) यद्यविस्मरणशीलाहं जानामि त्वां तमेव तीक्ष्णमतिं दुष्टप्रमोहम् । यस्त्वमायासयिता सर्वप्राणिनाम् । तथाहि । भाययसि कदाचित् मुग्धाः ग्रामवनिताः । क्षारयसि क्षीरं दोहकाले, भ्रामयसि यन्त्राणि, पातयसि तोरणानि, क्षालयसि महार्हाणि वस्त्राणि, भुक्त्वा नवनीतं मन्थयसि दधि वृथा, कृत्वा बृंहितं व्यामोहयसि गजान् । छित्वा बन्धनं विद्रावयसि वाजिनः । चोरयित्वोष्णीषाण्याक्रन्दयसि राजसेवकान् । कृत्वा स्तनितमुत्साहयसि शिखिनः । मोहयित्वा पान्थानन्यत्र गमयसि, तानपहससि च । ये त्वां 'मनोहर, दयालो, प्रमोह, प्रभो, इत्याह्वयन्ति तेषां साधयसि कार्याणि लीलया । सम्पादयसि च तत्समीहितम् । भाग्यवन्तः खलु ते ये त्वामाराधयन्ति । एवं किल नीयते कालः त्वया । न किं त्वमेतादृशः ।

**प्रमोहः**—(सहर्षम् ।) साधु साधु, अहमेव तादृशः परिहासलीलारुचिर्निशाभ्रमणकौतुकी ।

तैस्तैर्नर्मवचोभिरद्य कुतुकं राज्ञःसमुत्पादयन्
भ्रान्त्वा रम्यमहावनेषु सततं हास्येषु कालं नयन् ।
विज्ञानाम्बुधिमज्जनेन विबुधंमन्यैरपि श्लाघितः
सोऽहं सेन्द्रमरुद्गणानपि महामायावशान् कारये ॥ ४ ॥

(पार्श्वतोऽवलोक्य ।) अपसरापसर । इत एवागच्छति राजा प्रदोषः सपरिवारः ।

श्रीमान् कविकुलशिखामणिः लक्ष्मीसरस्वत्योरेकाश्रयः (सामूतिरिः) एट्टन्राजः प्राप्य पुरुषायुषं पुनरपुण्येनानुजीविनां कविलोकस्य चागण्यतामरोष्वितीयं वार्ता तद्गुणगणवशीकृतान् सर्वानपि दुःखसागरे निमज्जयति । महात्मासौ पाञ्चभौतिकेन शरीरेण वियुक्तोऽपि सरसैर्गद्यपद्यमयैरात्मना विरचितैर्ग्रन्थैः शाश्वतं यशःकायमासाद्य आचन्द्रतारमस्मिन् लोके निवसेदित्यत्र न कापि विप्रतिपत्तिरास्तिकानाम् ॥

श्रीमान् राजगोपालाचार्यः (Educational Secretary) पट्टाम्पिनगरे विराजमानां महापाठशालामवलोक्य गैर्वाण्यां विद्यार्थिभिः प्रदर्शितं पाण्डित्यमभिनन्द्य पाठशालायाः नीवीधनकृते द्विशतंरूपिकाः दत्वा विद्याशालाप्रवर्तकानां पुन्नश्शेरिनम्पि नीलकण्ठशर्मणामुद्यमं प्रशशंस ॥

---

# Dharmakutam.

THIS is a rare work hitherto unpublished. The author is one Tryambakaraya Makhi a minister at the Court of King Ekkoji of Tanjore. The manuscript of the book was found only in the Tanjore Palace Library. The work consists of six dissertations in Sanskrit on the six kandas of Sri Valmiki Ramayana. The object of these lectures is to convince the public that the Ramayana is not a mere chronicle of the life of Sri Rama but that it is chiefly intended to inculcate a right conception of one's Dharma. Each incident therein depicted, each portrayal of character is chiefly intended to expound some one or other of the several aspects of Dharma. The lectures are all in very simple flowing style easily understandable by all, full of excerpts from the Dharma sastras in justification of the intrepretations given of the Ramayana. The sample pages would give a clear idea that this kind of intrepreting the Ramayana, not as a mere epic detailing the story of Rama but as an allegory teaching morals and duty, was a desideratum up to now. The author who seems to have lived in the seventeenth century has performed his task in such a marvellously lucid manner that when we read the manuscript we became very eager to print and publish it at once. Since we found the lectures worth earnest study we resolved to print them in a most handy form and to publish them in parts so that the public may not have to wait till they are completely printed. The size of the book is Royal 16mo. Each part consists of two hundred pages and is priced at **Re. 1.** only. The book is being rapidly printed and the 1st part would be ready very soon. Intending purchasers are requested to apply at an early date to

THE MANAGER,
Bookselling Department,
SRI VANI VILAS PRESS,
*SRIRANGAM.*

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL. XX. No. 4.




PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM AND PUBLISHED AT MADRAS.



**Registered No. M. 103.**

# विषयाः ।





# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).
6. Annual subscription is Rs. 3 only, including postage.



पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥

कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥

**—रघुवंशः**

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८.] राक्षसवर्ष आषाढमासः । [संचि. ४.

## सुभाषितानि ।

क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्
पर्जन्यश्चपलाश्रयोऽभ्रपटलादृश्यः सुवर्णाचलः ।
शून्यं व्योम रसा द्विजिह्वविधृता स्वर्धामधेनुः पशुः
काष्ठं कल्पतरुर्दृषत्सुरमणिस्तत्केन साम्यं सताम् ॥१॥

गेहं दुर्गतबन्धुभिः गुरुगृहं छात्रैरहंकारिभिः
हट्टं पत्तनवञ्चकैर्मुनिजनैः शापोन्मुखैराश्रमान् ।
सिंह्याद्यैश्च वनं खलैर्नृपसभां चौरैर्दिगन्तानपि
संकीर्णानवलोक्य सत्यसरलः साधुः क्व विश्राम्यति ॥

कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः
कस्माद्वा जलधारयैव धरणिं धाराधरः सिञ्चति ।
भ्रामं भ्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ ३ ॥

॥ श्रीः ॥

# ॥ अमरवाणी ॥

(पूर्वतोऽनुवृत्तम्)

---

**राम**— आङ्गलवाण्यां तादृशं प्रवेशमधिगतवन्तः अस्मदीयाः गैर्वाणीं विद्विषन्ति ।

**लक्ष्मण**— अत्र नैते तपस्विनः अपराध्यन्ति । परं पाश्चात्य-विद्याभ्यासेन यद्यदैहिकसुखस्यानुपयुक्तं तत्सर्वं परिवर्जनीय-मिति दृढः संस्कारः संभवत्येतेषाम् ।

**राम**— गैर्वाणीश्रवणेन श्रुतिसुखं भवति किल ।

**लक्ष्मण**— न किञ्चिदेतत् ।

**राम**— तर्हि संगीतश्रवणमपि तादृशमेव ।

**लक्ष्मण**— सत्यम्— 'संगीतमपि साहित्यं सरस्वत्याः स्तनद्व-यम्' इत्यभियुक्ता वदन्ति । अथापि देववाण्यामादरो न भवति पापात्मनाम् ।

**राम**— ये हि नाम गैर्वाणीमाद्रियन्ते त एव पुण्यजन्मान इति हि भवान्मन्यते ।

**लक्ष्मण**— अथ किम् ।

**राम**— भो मर्षय । गैर्वाण्यां निष्णाताः पण्डिताः प्रायेण असू-यालवः अन्योदयासहिष्णवः दुरभिमानिनः परस्परं कलहाय-मानाः पुण्यजनानतिशेरते । अतस्तादृशविद्याभ्यासेन न काप्या-

त्मगुणसंपत्तिराधिगम्यत इति तस्यामादराभाव आधुनिकाना-मिति तर्कयामि।

**लक्ष्मण--** उत्तानहृदया: पण्डिता: असूयां क्रोधं चान्तर्निगूहितुं न शक्नुवन्ति। आङ्गलवाण्यभिज्ञास्तु--

'बहि:सर्वाकारप्रगुणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि लघुतराणि स्थगयति।
जनं विद्वानेक: सकलमभिसंधाय कपटै:
तटस्थ: स्वानर्थान्घटयति च मौनं च भजते ॥—'

इत्युक्तरीत्या आकारगोपनं कुर्वन्तोऽप्यन्त:पदुप्रसरामसूयां निरोद्धुमशक्नुवन्त: गूढमन्येषां विप्रियमाचरन्ति।

**राम—** उत्तानहृदय: क्षोभेन हृद्गतमखिलं बहिर्वमन् यथाजातेषु परिगण्यते।

**लक्ष्मण**— कापट्यादपि ऋजुतैव स्पृहणीया।

**राम--** क्रोधेन सदसि वाक्पारुष्येणात्मनो मनोविकाराविष्पकरणमेव ऋजुता चेन्नमस्तादृशेभ्य: ऋजुकेभ्यो विद्वद्भ्य:।

**लक्ष्मण--** केचन स्वभावेनैव क्रोधना: तदा तदा बुद्धिविक्षेपेण यत्किमप्याचरन्ति। तादृशा: सर्वत्रोपलभ्यन्ते। अत्र गैर्वाणी नापराध्यति। उक्तं चाभियुक्तै:-- 'य: स्वभावो हि यस्या-स्ते स नित्यं दुरतिक्रम:। श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम्' इति। मया हि नाम 'सर्वसमैवेयमसूया, पण्डितास्तां निष्फलं बहि: प्रकाशयन्ति; आङ्गलास्तु न तथा' इत्यभिप्राय: सूचित:।

**राम—** तर्हि जनानां गैर्वाण्यामनादरस्य किं कारणम् ?

**लक्ष्मण—** वित्तेषणैव ।

**राम—** वित्तेषणेयं भगवती सर्वानप्याकुलयति ।

**लक्ष्मण—** गैर्वाणीपठनेन प्रभूतं द्रविणमार्जयितुं न शक्यते । 'भाषेयं मृता, तदभिज्ञाश्च मृतप्रायाः' इति प्रायो राजभाषावेदिनो मन्यन्ते ।

**राम—** 'भाषायां पाण्डित्यसंपादनं केवलमात्मसंस्काराय न तु द्रविणार्जनाय' इति विश्वसन्ति देशान्तरीयाः ।

**लक्ष्मण—** पुरा अस्मद्देशेऽप्येवमेवासीत् । अध्यापनं नाम विप्राणां स्वीया वृत्तिः । प्रतिफलमनपेक्ष्यैव वेदाः शास्त्राणि चाध्यापनीयानि । यो हि विद्वानात्मना पठितस्य शास्त्रस्य प्रवचनं विनैव देहयात्रां करोति स ह्यन्यस्मिन् जन्मनि ब्रह्मराक्षसो भवति । अद्य तु सर्वस्यापि प्राचीनधर्मस्योत्सर्गः क्वचित्क्वचिद्विपरीताचरणमपि विपश्चिद्भिर्निश्शङ्कमनुष्ठीयते ।

(क्रमशः ।)

॥ श्रीः ॥

# ॥ अघोरकामिनी ॥

( पूर्वतोऽनुवृत्तम् )

आसीदघोरकामिन्या अपीदृशी दशा । प्राणेश्वराय आत्मवृत्तान्तावेदनं नाम न बलवद्दुरितसाधनम्, प्रत्युत प्रेमपरिपोषहेत्विति स्वयं जानानाप्यप्रभवन्ती तपस्विनी देवी 'विना कारणकलापं

कथं विलिखामीति दिवानिशं चिन्तयन्ती, दूनहृदया समयं यापयति स्म । लिखितमवलोक्यतेऽस्मिन्विषये बाबूप्रकाशचन्द्रेण -- 'मत्प्रियायाः पत्रीलेखनव्यापारे शीतकिरणः प्रदीपतां वनं भवनतां शिलातलमासनतां किसलयः पत्रतां कनिष्ठांगुलिर्लेखनीपदमापेदे' इति ॥

वाचकवरेण्याः, देव्याः खल्वस्या लेखनव्यवसायमवगत्य कस्य वा सचेतसश्चेतो न क्षणं विस्मयते ॥

तरुणिमनि नारीणां गरीयानाभरणाभिलाषः । तत्राप्यशिक्षिता अलंकारायत्तं सौन्दर्यं योषितामिति संभावयन्ति कामिन्यः । यासामङ्गेषु बहुमूल्यान्याभरणाणि दुकूलानि च प्रकाशन्ते ता एव धन्या इति धिषणा वधूटीनाम् । अत एव श्रूयन्ते किल सततं समाजे सीमन्तिनीनाम् 'कियन्ति रमणबान्धवैः प्रदत्तान्याभरणानि कियन्मूल्यं नासामौक्तिकं, कियत्पला तुला, किं कर्बुरविकारा का-ञ्चीत्यादीनि भाषितानि ॥

कदाचिद्देवीयं अल्पमूल्यं वसनं वसाना, मंगलसूत्रमात्रालंकारा, नैसर्गिककायकांतिकमनीया, कुतोऽपि मिलितानां कामिनीनां समितिं विशंती, कयापि नाकारिता नाभिभाषितापि, तूष्णीं "मानार्हा का" इति तत्रैव स्थित्वा चिरमवलोकयति स्म ताः । तत्र कार्तस्वरपरिष्कृतसर्वावयवानामेव प्रमदानां संमानमवलोक्य न प्रवेशार्हा समितिरियं न परोपकाराय न धर्मोन्नतये वृथा सल्लापायैव विहितेति निर्जगाम स्वभवनं । तदेव कदापि न धारयाम्याभरणानि सुवासांसि चेति शपथमकार्षीत् । यथाशपथमवर्ततामरणं देवी अघोरकामिनी ।

यथा वयसा तथा यशसापि दिने दिने वर्धमाना सर्वदोदि-

तसद्विचारा, धवानुमत्या ब्राह्मधर्मदीक्षां दधती, "परोपकारः पुण्याय पापाय परपीडनं" इति पद्यं मूलमंत्रमिव मन्यमाना, धर्मप्रसारणपरा व्ययीचकार बहुलं धनमघोरकामिनी ।

काश्चिदंगना अशरणास्सदनमानीय तथा पोषयति स्म, यथा ह्यासां स्वस्मिन्नोत्पद्यतेऽन्यदीयताबुद्धिः ।

कुत्रचिद्दरिद्रदुर्लभस्याभ्यव्यवहारार्हस्य वस्तुनो सति दर्शने तत्समादाय पाकं कारयित्वा, सर्वान्विद्याभिलाषिण आहूय, यथाभिलाषं स्वयमेव परिवेषयंती नंदयति स्म सर्वाः प्रजा देवी ।

परोपकाराय मनसा वपुषा धनेन चाहर्निशं प्रयतमानामेनां "देवी अघोरकामिनी" इति सानन्दं व्यवजह्रुस्सर्वाः प्रजाः ।

जातु चित्समीपवर्तिनि ग्रामे कश्चित् ज्वरग्रस्त इति चेद्वार्ता श्रुतिपथमवतीर्णा, झटिति निर्गत्य तत्र गत्वा सहोदरनिर्विशेषं तं मन्यमाना, दरिद्रश्चेन्निजेनैव धनेनौषधमाहृत्य दत्त्वा, तस्य परिचर्यायां काश्चिन्निक्षिप्य च ललनाः, शुश्रूषयति स्म देवी । एकदा देवी स्वभवनगता पुस्तकं किमप्यवलोकयन्ती शुश्राव दयनीयं शब्दम् । श्रुत्वा च ससंभ्रममुत्थाय किं किमिति वदंती बहिर्द्वारमागत्य पप्रच्छ मिलितान् जनान् । 'देवि किं कर्तव्यं हलधरनाम्नो नाविकस्य पत्नी, ज्वरातिशयपीडिता नवप्रसूतिस्स्वयं खिद्यमाना क्लेशयति जनानवलोकयत इति तैरुच्चरितमाकर्ण्य सत्वरं कर्णधारसदनमाससाद । आसाद्य च कस्मिंश्चन कोणे तमसि धूलिधूसरिते प्रदेशे मलिनशयने शयानां, दीनां दूनां कर्णधाररमणीमद्राक्षीद्देवी । प्राहिणोच्च प्रथमं भिषक्प्रवरानयनाय कमपि । ततो मालिन्यमपि रोग-

निदानं भवतीति तत्रैव पतितां गृहमार्जनीं गृहीत्वा, निवारितापि नाविकेन गेहं मार्जयन्ती, "किं तेन पाणिना येन परोपकृतिर्न घटत इति भाषमाणा" यावन्नागमिष्यति भिषग्वरस्तावदेव निर्मलीचकार सर्वं सदनम् । ततस्तां ज्वरार्तामाश्वास्य शुश्रूषणाय तस्याः स्वीया दासीरादिश्य, निजवसतिमाययौ । देवी स्वीकृते 'बांकीपुरं' इत्यभिधायां पुर्यां महतीं शालां बबंध । तदुन्नतये कृतनिश्चया स्वगेहगाः पंचविंशतिसंख्याका नारीः प्रतिदिनं शालां प्रहिण्वती, लोकानामप्यात्मनीनदुहितृप्रेषणाय निर्बंधमातनोत् । एतमाग्रहं वीक्ष्य संगिरंते स्म लोकाः 'देवि किमनेनाग्रहेण श्रीमत्या भवत्या नासीरिशक्षणोपयोगिशिक्षणं, तत्कथं शिक्षयस्यन्येषां कुमारीरिति । तदुक्तं सत्यमित्याकलय्य चिंतयांचकार देवी ।

न मेऽभूदंजसा शिक्षणं परोपकृतिनिरताया निजसदनवासिनीनामशरणानामबलानां पोषणे दिनान्यतिवाहयंत्या इति ।

ततस्स्वयमेव— किमनया चिंतया, विदेशे कस्यामपि पाठशालायां काश्चित्समा उषित्वा, प्रचुरमर्जयित्वा ज्ञानम्, शिक्षयामि ललनाः— इति निश्चिनुते स्म । न चिरादेव यथानिश्चयं देशांतरं गत्वा विपुलां संपाद्य धियम्, स्वदेशमलंकृत्य बांकीपुर्यां स्वीयपाठशालाध्यापकतां स्वीकृत्य चाध्यापयति स्म योषितो देवीति निवेदयंतो वयं तस्यै वितीर्णान्बहूनपि साधुवादान्देव्या अघोरकामिन्या न साहसानुगुणान्मन्यामहे ।

ज्यायान्किलास्याः स्वजाताबभिमानः । अत एव योषितामुन्नतये नक्तंदिनमात्मानं क्लेशयति स्म । जातु बांकीपुर्यां धूमयानविरामागारे (स्टेषन्) नारीणां पृथक् वासकक्ष्यं 'वेंयूटिंग्रूम्' नाभूत् ।

तेन केन चिद्राजपुरुषेण कामपरवशेन परिक्लेशितां कामपि कामिनी मवलोक्य दूयमानहृदया देवी, झटिति तत्शासनाय विलिख्य पत्री साक्षिभूतानां शताधिकानां प्रमदानां पुरुषाणां च नामभिरलंकृत्य च प्रेषयामास 'लेडी ईलिअट्' नाम्न्याः सविधम् । न चिराय यथान्यायमासीद्दंडस्तस्य स्त्रीद्रुहः । ततो बाष्परथविश्रामगृहे स्त्रीकृते 'वेंटिंगरूम्' पृथक् निरमायि राजपुरुषधौरेयैः ।

महात्मना प्रकाशचंद्रेण प्रतिमासं निजहस्ते दीयमानमात्मनो वेतनं त्रिधा विभज्य भागद्वयं धर्माय निक्षिप्य भागमेकमात्मकृते निवेशयति स्म ।

एकदा सिंधुदेशीयः कश्चनाष्टादशवर्षदेशीयो विद्याभिलाषी हिरानंदनामा बांकीपुर्यां प्रतिवसति स्म । स च व्यतीतेषु कतिपयदिनेषु दैवदुर्विलसितेन व्याधिग्रस्तकलेवरः समभूत् । दूरीकृतबंधुवर्गमशरणं दयनीयां दशामापन्नं तं गृहमानीय धवानुमत्या तदनामयाय महांतं यत्नमकरोद्देवी । तथापि दुर्निवारतया भवितव्यतायाः, पुत्रसुखाऽभाजनतया च तन्मातृहृदयस्य तथाविधसमज्ञाऽपात्रतया च देव्या, द्राक्कवलीचकार हिरानंदं निर्दयः करालः कालः । सुतनिर्विशेषं रक्षितं तं बहु विलप्य सशोका देवी कारयामास हुताशनविधिं प्रेतस्य तज्जातीयैः । निवेदयामास च तंत्रीद्वारा वृत्तांतमेनं तद्बंधुवर्गस्य । विदितवृत्तांताः शोकविह्वला अपि तद्बांधवाः समुचिते समये देव्या कृतमुपकारं प्रशशंसुः ।

(क्रमशः ।)

॥ श्रीः ॥

# ॥ नारदनैपुणी ॥

(पूर्वतोऽनुवृत्तम्)

---

**सन्ध्या**— त्वामुर्वशीति विचार्य तुभ्यं दातुकाम एव खल्वागतः। सद्य एव किमिति न गृहीतं त्वया? क्रुद्ध्यन्ती तस्मै महत्कार्यं व्यनाशयः।

**रत्नावली**— सखि! किमतीतकार्यानुशयेन? किमतः परं क्रियते? मा खलु मह्यं कुप्यः। आवां प्रतार्य दुर्भगा सा वेश्या वाऽपहरिष्यति तदङ्गुलीयकम्?

**सन्ध्या**— न चेदेकाकिनी त्वमेव तदभिलषसि?

**रत्नावली**— न खलु, द्वे अप्यावां मासपर्यायेणाऽनुभवावः।

**सन्ध्या**— निपुणा त्वम्। आगच्छ, विमानं तु नाथस्य बहुदूरमगात्। नेतः परमनुसरणेन किमपि प्रयोजनम्। गच्छावो गृहम्। उपरिकर्तव्यं चिन्तयावः। कः शक्नोति दैवमन्यथयितुम्?

(गच्छतः)

(गालवः तच्छिष्यौ चागच्छन्ति।)

**सुशीलः**— गुरो! अयं घट्टः— (वेदनामभिनयन्) आः! भवज्जपानुष्ठानस्य— आः! न समीचीनः... आः!

**सुमुखः**— अरे! किन्तत्? तदुक्त्यन्तर एव— आः! अरे! मामपि दशति— आः!

**सुशील:**— तदर्थमेवाऽभिहितं मया— आ: !-- गुरो ! मशकबाधा, आ: ! अत्राऽतीव बहुला— आ: !-- तत्र स घट्ट: अतिरमणीयो वर्तते । तत्र— आ:-- गच्छाम:-- आगच्छतु भवान् ।

**गाल**— क्रीडत: किं युवाम् ?— आ: ! मशको दशति । इतो झटित्येव गच्छतम् ।

(त्रयोऽपि नदीमन्तरा गच्छन्ति)

**सुमु**— गुरो ! अयं घट्ट: समीचीन: । विशिष्य रमणीयश्च वर्तते । अत्राऽवतीर्य प्रात: करणीयं कुर्म: । सुप्रसन्नमिदं पाथ: । प्रदेशोऽपि वालुकामय उन्नत: कमनीयश्च वर्तते ।

**सुशी**— मशकाश्च न सन्ति ।

**गाल**— शिष्य ! तर्हि प्रदेशममुं परिशोध्य सज्जीकुरुष्व दर्भासनम् ।

(तस्मिन् तथा कृतवति गालव: तदधिष्ठायाऽऽचमनादीनि करोति)

**सुशी**— अरे ! अरे ! अत्र पादं दशन्ति पिपीलिका: ।

**सुमु**— अरे ! मा खलु शब्दायस्व । भज मूकिमानम् । किं न जानासि गुरुर्ध्यानतत्पर इति ?-- आ: ! अरे ! दशति मम पादावपि ।

**गाल**— शिष्य ! सुमुख ! अर्घ्यार्थमुदकं हस्ततले विसृज ।

**सुमु**-- गुरो ! इदमर्घ्यम् ।

(तस्मिन् तथा कुर्वाणे नभोमार्गेण गच्छता चित्रसेनेन निष्ठ्यूतो वीटीरस: गालवस्य करपुटे पतति)

**गाल**-- शिष्यौ ! अर्घ्ये मदीये किमप्यपतत् । किमिति न

ज्ञायते । सम्यगालोक्य वदतम् ।

सुमु— (उपरि पश्यन्तं सुशीलं दृष्ट्वा) अरे किमुपरि पश्यसि ?

सुशी— मशक पिपीलिकाप्रायः खलु प्रदेशोऽयम् । ये केचिदण्डजा नभोमार्गेणोड्डीय किमगच्छन् इत्यपश्यम् ।

सुमु-- गुरो ! करस्थमुदकं लोहितं दृश्यते ।

सुशी-- (आघ्राय) अरे ! किं न ज्ञायते ? घुमुघुमायमानः कोऽयं परिमलः । सम्यक् !—

सुमु— हहह ! गुरो ! केनाऽपि पापेन निष्ठ्यूतो भवदर्घ्ये हन्त ! हन्त ! वीटीरसः ।

गाल-- हा ! किं तथा ?

सुशी-- आं ! गुरो ! नैव सन्देहः । अत्र च प्रसरति रमणीयः परिमल एलालवङ्गानाम् ।

गाल-- कष्टं ! कष्टं ! कः स चण्डालः, येनेत्थं दूषितं ममेदमर्घ्यम् ।

सुमु— गुरो ! नाऽत्र कोऽपि दृश्यते ।

गाल— क्षमस्व किञ्चित्कालं, केनेदं कृतमिति विज्ञाय ब्रवीमि । (विलोक्य प्रतीच्या दृष्ट्या) स एव पापः चित्रसेनाख्यो गन्धर्वः, मत्प्रातःकृत्यस्य प्रत्यूहकारी, योऽध्यापयति नाट्यं स्ववेश्यानाम् । सोऽद्य विमानमारुह्याऽऽकाशमार्गेण उर्वशीगृहं गच्छन् वर्तते । दुर्भगस्याऽस्य करणीयमनुगुणं प्रायश्चित्तम् ।

सुशी-- गुरो ! प्रथमतः करणीयं खलु भवता—

गाल— आं ! आं ! सद्य एव त्वमाश्रमं प्राप्याऽऽनय प्रायश्चित्तार्हान् पदार्थान् ।

सुशी— यथा निदेशः:—— आः!—— अधिकाऽत्र पिपीलिकाबाधा।
(गच्छति)

गाल— हन्त! दुर्भगोऽयं चण्डालः कीदृश्या दण्डनाया अर्हः? यद्यमुमद्यैव शपेय तदा निष्फलं भवेदेतावता सञ्चितं तपः। किमत्र क्रियते?

सुमु— गुरो! इत आगच्छति।

गाल—— कः?

(नारद आगच्छति)

नार—— विधेयो नारदः, नमस्करोमि।

गाल— महर्षे! नारद! नमोनमः, आगच्छतु भवान्।

नार— महर्षे! गालव! किमवसितमनुष्ठानम्?—— किमिति भवन्मुखं विडम्बयति विधुन्तुदग्रस्तं विधुम्?

गाल— नाऽद्याऽप्यवसितमनुष्ठानम्। अन्तरैवाऽशुद्धिरभूत्।

नार—— किं? किं? कीदृशी साऽशुद्धिः?

गाल—— हन्त! तद्विचारोऽपि ममाऽरुन्तुदो वर्तते।

नार— न खलु दूयतां भवान्। अभिधेहि, किं तत्तादृशं रहस्यम्, यन्नारदोऽपि नाऽर्हति श्रोतुम्।

गाल—— प्रातरनुष्ठानं कुर्वता मयाऽर्घ्यार्थमम्भासि करपुटाभ्यां धृते सुधर्मायां देवदासीनां नाट्यविनेता चित्रसेनाख्यो गन्धर्वः, नभोमार्गेण गच्छन् उर्वश्या वसतिं, स्वमुखधृतं वीटीरसं मत्करपुटयोर्निरष्ठीवत्।

नार—— धिक्! धिक्! चण्डालम्! ब्राह्मणद्रोढा स तथा वाऽक-

रोत्? व्यर्थं खल्वभूत्तपःफलमद्य भवतः! कुतो न भस्मीकृतो भवता तत्क्षण एव स मूढः?

गाल— महर्षे! नारद किं गालवस्याऽपि वर्तते दुस्साधम्?

नार— किमिदमाश्चर्यम्! भवतोऽपि दुस्साधं कृत्यमस्ति किं लोके? तथापि किं तावत् कृतं भवता?

गाल— तदेव चिन्तयामि। चेत्तं पापं शपेय निष्फलं भवेत्तपो मदीयम्।

नार— आं! तदपि तथ्यमेव। कोऽपि प्रतिभात्युपायः। मा खलु भवान् प्रत्यक्षतश्शपताम्। एतद्देशाधिपतिं कृष्णपरमात्मानं प्राप्य विज्ञापय वृत्तान्तम्। स एव कुर्यात्पापस्याऽस्याऽनुरूपां दण्डनाम्। दुष्टनिग्रहपूर्वकशिष्टानुग्रहः खलु राजधर्मः?

गाल— युक्तमेवैतत्। गच्छावः, किमनुयाति मां भवान्?

नार— को विरोधः? किमावश्यकं मदागमनम्?

गाल— आं! ज्ञायत एव खल्वस्माभिः कृष्णस्य प्रकृतिः। अत एवोच्यते भवता सह मद्गमनं कार्यसाधकमिति।

नार— तथैव, आगच्छाम्यहमपि— गच्छावः, आयातु भवान्।

गाल— अमुमाश्रमं प्राप्य विहितप्रायश्चित्तस्त्वरितमागच्छामि।

नार— वदामि कमप्युपायम्। कार्यान्तरव्यापृतोऽहम्। अतस्समापितदैनन्दिनकृत्यो भवान् द्वारकां प्राप्य कृष्णपरमात्मानं पश्यतु। अनुपदमागत एवाऽहम्।

(गच्छतः)

इति तृतीयो निःश्वासः ॥

## अथ तुरीयो निःश्वासः ॥

अम्भोरुहाणां गन्धसम्बन्धादतिबन्धुरः प्राभातिको गन्धवह आवातुमारेभे । क्रमेण स्वान्तमिव सज्जनानामतिप्रसन्नमभूदन्तरिक्षम् । कुन्दकुसुमाश्च राजमानिता विद्वांस इव विराजिरे तमाम् । सौरभ्यनाशाद्विरहाच्चाऽऽश्रितानां मधुलिहां म्लाना कुमुद्वती मूर्च्छां परां प्रत्यपद्यत । नलिनी च प्रोद्यतो भास्वतः किरणसहस्रमपि संख्यातुकामेव क्रमेण नवदलानि सहस्रपत्राणां प्रासारयत् । निशारूपायाः पिशाचिकायाः प्रोच्चाटने मान्त्रिकायमाणाः अशीतभानोः किरणाः रथाङ्गविहङ्गानुद्ग्रीवयन्तश्चकाशिरेतमाम् । समयेऽस्मिन् द्वारकायां प्रासादे भगवान् कृष्णः सिंहासनमधिष्ठाय गानं सानन्दं शृण्वन् वर्तते । तदा दूतः कश्चिदागत्य विज्ञापयति ।

**दूतः**— महर्षिर्गालव आयाति ।

**कृष्णः**-- तर्हि सप्रश्रयं सत्वरमेव प्रत्युद्गम्य प्रवेशय ।।

(सेवको गच्छति कृष्ण उत्तिष्ठति)

(अथ गालवेन तच्छिष्येण च सनाथो दूत आगच्छति)

महर्षे ! धन्योऽस्मि, नितरां परिश्रान्तो भवान् मदर्थम् । मर्षणीयोऽयमपराधः । अलंक्रियतामासनमिदम ।

**गाल**— भव दीर्घायुष्मान् । (आसनमधितिष्ठति)

**कृष्णः**--- भगवन् ! इयद्दूरमागमनं किं हेतुकम् ? को विशेषः ? दया कर्तव्या ।

गाल— पुरुषोत्तम! मदागमनेन विघ्नितोभूत् भवत्सङ्गीतसुखानुभव इति प्रतिभाति ।

कृष्णः— न खलु तथा भगवन्! मामन्विष्येयद्दूरमागतवतो भगवतः कुशलप्रश्नादिकमकृत्वा स्वसुखतत्परता किं युक्ता? 'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः'? दययाऽभिधीयतां को विशेष इति ।

गाल— भगवन्! अनादिनिधन! अखिलजगन्निवास! आपद्बान्धव! भवतोऽप्यविदितं किमस्ति त्रैलोक्ये? हे गोवर्धनोद्धारक! गोकुलपालक! कथमहं वदेयमतर्कितोपनतामवमतिम्? हहह! तद्विचारोऽपि भवति ममाऽरुन्तुदः ।

कृष्णः— भगवन्! कः स पापः? यस्तादृशमपराधं कृतवान्। त्वरितमभिधीयताम् ।

गाल— भगवन्! साधूनां परित्राणाय दुष्कृतां विनाशाय धर्मसंस्थापनाय च विहाय क्षीरनिधिमत्र कृष्णरूपेणाऽवतीर्य परिपालयति भवति वसुधां साधोर्मम तपसो भङ्ग इत्येतत्किं युक्तम्?

कृष्णः— महर्षे! गालव! भवत्तपोविघातकः पापः किमद्याऽपि सप्राणः? क इत्यभिधीयताम्? न चिरात् स भविष्यति।

गाल— हे अच्युत! सुधर्मायां स्वर्वेश्यानां नाट्यविनेता चित्रसेनाख्यो गन्धर्वो नभोमार्गेणोर्वशीगृहं गच्छन् दिनकराय प्रातरर्घ्यं दातुकामेन मया करपुटाभ्यां धृत उदके निरष्ठीवत् वीटीरसम् । हन्त! परमचण्डालो ब्राह्मणद्रोढा । हे आपद्बा-

न्धव! जनार्दन! भवच्छासनविषयीभूतेऽत्र प्रदेशे ममेदृशः परिभवो वा? महदिदं कष्टम्।

कृष्ण-- किं स दुष्टो बुद्धिपूर्वकमेव कृतवान्?

(नारद आगच्छति)

गाल-- एष नारदोऽपि जानाति वृत्तान्तममुम्।

कृष्णः— महर्षे! नारद, कृतार्थोऽस्मि। एकदैव तपस्विनोर्भवतो-र्दर्शनमभूदिति महान् मम प्रमोदः। अलंक्रियतामिदमासनम्।

(नारद आसनमधितिष्ठति)

गानप्रिय! अपि श्रुतो भवता गालवस्याऽतर्कितोपनतस्तपो-भङ्गः? किमत्र क्रियते?

नार— आं, सम्यक् चिन्तनीयमिदम्।

गाल— हे करुणावरुणालय! दुष्टनिग्रहाय चेदवतारो भवतः, तदाऽद्यैव हन्तव्यः स पापः। चण्डालस्य तस्य विना हननं न कदाचिदपि तुष्येन्मम मनः।

नार-- सत्यमिदं, आवश्यकं च। तथाऽपि मम कोऽपि सन्देहः। अयमपराधश्चित्रसेनेन बुद्धिपूर्वं कृतः आहोस्विदन्यथा?

गाल— किं न विदितं भवेत्परमचण्डालस्य?

(क्रमशः।)

सर्वत्रापि महीतले कलयितुं सद्यः समग्रं नवं
क्षीरेणाखिलतीर्थसेवनवशात्तेनाधुना प्रस्थितम् ॥४४॥

तदाप्रभृत्यहमपि तदालोकनकुतूहलेन विहाय प्रस्तुतमपि कार्यं विहायःपदेन सञ्चरमाणो विविधसेनानिवहसेव्यमानेन क्षमातलबलविमाथिनानेन सकलदेशगततीर्थयात्रारसिकेन कुत्रापि सांपरायः परराजकस्य संभवेदित्यारभ्य सह्यजाप्रभवं भूभृतं सममेव छायारण्यपर्यन्तं पुण्यस्थलं सपरितोषमशेषमपि समयासिषम् । तत्र च—

केचित्सन्त्यज्य राज्यं घनवनकुहरे क्वाप्यलीयन्त भीत्या
मुक्त्वा शौण्डिर्यमन्ये किल जलधिजवाद्वीपमापुर्दुरापम् ।
पृथ्वीपालाः परेऽपि व्यदधत विनताः प्रीतिमेतस्य राज्ञ-
स्तस्मादस्माकमासीत्समरविरहतो हन्त चिन्ता दुरन्ता ॥

तदा खलु मया निखिलनिम्नगानिषेवणजनिताभ्युदयः स्वच्छहृदयः स्नानेच्छया लवणापगापरिवृढमवगाहमानः सबहुमानमुपहारितचिरत्नरत्नराशिरालोक्यत भूलोकनाथः ।

सक्रोधं झटिति वहन् स मण्डलाग्रं
निष्कोशं द्विषदसुजाललेलिहानम् ।
अम्भोधिस्थितमखिलं कुलं धराणां
दंभोलिं दधदिव जंभभिन्निहन्तुम् ॥ ४६ ॥

तदा मरुत्तरलतरङ्गसङ्कुल-
स्तरङ्गिणीपतिरखिलैरदृश्यत ।

निवारयन्निव तरवारिवल्लरी-
निपातमुच्चलितकरोच्चयो भिया ॥ ४७ ॥

तदनु तस्य संरम्भमवलोकयन् विश्वंभरावलयजंभभेदिनो महान् केनापि सांपरायः संभविष्यतीति ब्रह्मानन्दमिव कमपि महान्तमानन्दमनुभवन्नेव स्तिमित इव क्षणमात्रमवस्थितोऽस्मि ।

**पर्वतः**— (स्वगतम्) वयस्यायं दुःस्वभावः । यदमुष्य ब्रह्मानन्दादपि विशिष्य सांपरायसन्दर्शनानन्दः संततं बहुमन्तव्यः । (प्रकाशम्) प्रतापसमप्रतापः खलु रघुनाथभूपः । ततस्ततः ।

**नारदः**—

अपश्यमग्रतो राज्ञस्ततः कमपि दारितम् ।
ब्राह्मणग्रहणव्यग्रं नक्रं कर्कशविग्रहम् ॥ ४८ ॥

**पर्वतः**— ब्राह्मणसंरक्षणमेव कुलधर्मस्तेषां चेव्वनृपतिसन्ततिजनुषां सर्वेषामपि सर्वसहातुरासाहाम् ।

भर्तुस्तस्य धरित्र्या भक्त्यासक्तस्य तीर्थयात्रायाम् ।
भवतात्किमपि श्रेयो भव्यं नव्यं महत्तरं झटिति ॥ ४९ ॥

**नारदः**— तथैव तस्य महानुभावस्यातार्कितं महत्तरं श्रेयः तत्रैव तीर्थे समुपस्थितम् । तेनैवाधिकं विस्मितोऽस्मि । तदिदं भवदाशीर्वचसा शीघ्रमेव फलतु ।

**पर्वतः**— कीदृशं तत् ।

**नारदः**— अस्ति सिंहलद्वीपजुषो धरणीतलवलद्विषो विजयकेतुनाम्नः साकारेव कामकला चन्द्रकलानाम दुहिता । द्वीपे च तस्मिन् द्वीपवत्यामैरावत्यां प्रत्यहमाप्लुत्य तया सुचिरमुपास्यमानः

स भगवान् प्रसीदन् रमाविलासी तस्यै घनमौक्तिकनासाभरण-गर्भितं रत्नसमुद्गकं प्रयच्छन्नेवमभिहितवान् ।

'धीरोदात्तो नरपतिवरो दीप्रबाहुप्रतापो
जंबूद्वीपे वसति खलु यो जंभभेत्तैव भोगे ।
तत्तादृक्षं प्रसभममुना तेऽत्र नीतं समक्षं
मन्यस्वेमं स्मरमिव परं मामकीनावतारम् ॥' इति ।

अहं तावदेनं वृत्तान्तं भगवत्समीपगत एव जानामि । अद्य पुन-स्तमेव मण्डलाग्रखण्डितनक्रपिचण्डनिर्गलितं रत्नसमुद्गकमादाय प्रमोदाधिको जयति रघुनाथजनाधिनाथः । (इति निष्क्रान्तौ ।)

इति शुद्धविष्कम्भकः ॥

—*—

(ततः प्रविशति रत्नसमुद्गकहस्तो राजा विदूषकश्च ।)

**राजा**— अहो! निजमहोभिरतिपृथुलजंबीरफलपरिमाणं चिरत्नमिदं रत्नं निस्तुलं कौस्तुभमप्यतिशेते । (विचिन्त्य)

मन्थानशैलमथितादुदधेरुदीतौ
चन्द्रादिवस्तुनिकरैः सह कौस्तुभौ द्वौ ।
एकस्तयोर्विजयते हृदि कैटभारे-
रन्यः करे मम विभात्यधुनेति जाने ॥ ५१ ॥

(तं रत्नसमुद्गकं हृदि निवेश्य) अयं मणिरसहाय एव पतक-तया मम वक्षःस्थले स्थातुमर्हति ।

**विदूषकः**— लखणाए मंएव्व लक्खिकदुअकिं अदिमेत्तं दूसेसि ण दाव मे रसनादुम्मंसभेथो । किन्तु जंरअणंति मंतेसि । तं एव्व साधगमण्डलंगखुडियदुट्ठग्गाहदुंमं संभेदो । अहं जणणीए

गम्भादोपुणोत्ति एव्व जादोम्हि । जं अधिक दुट्ठणं स्थकव अणदादाजाणि अगादापांहदिए विवआए तुह मण्डलुग्गेण णिक्कोसेण साणुक्कोसेण णिम्मुक्को । एहिं खु समुद्द सुद्धदोसि । पुणोवि सिचिरं पच्चागमिअसिंहासणमज्झं अम्मूसि ओदुवारे वीणाणादे सणरावो सराचिट्ठन्ति । ता अयं णसमयो मुद्दग्गाहंसपिण्डदंसणेण मं विहीसइदुम् । पुडमं एव्व संभत्तोम्हि ।

**राजा—** ( विहस्य ) प्रायेण हरिणा इव प्रकृतिभीरवो ब्राह्मणाः । मा भजस्व वयस्य ! सारङ्गभयतरङ्गितमन्तरङ्गम् । नायं मांसपिण्डः । किन्तु मणिरेव । [ इति तदङ्के स्थापयति ।

**विदूषकः—** परिदोविवणसमाउलंकररुहं मूसलपादं समासादिदम् । अव्वह्मण्णं अव्वह्मण्णम् । अहिजादजंमणो खु एसो बम्मणो सोऽहं इमिणा उव्विपइणा एव्वं उव्वेसिदोह्मि ।

[ इति सोद्वेगं भूमौ पतति ।

**राजा—** ( तदङ्गपरिकंपपतनविघटितपुरे रत्नसंपुटे घनमौक्तिकं दृष्ट्वा । सविस्मयम् । )

**कान्त्या रत्नसमुद्गको विजयते कंसद्विषा यत्नतो**
**लब्धं कौस्तुभमप्यहो तदुदरे गोपायितुं मौक्तिकम् ।**
**धर्तुं नाधिकरोति सोऽपि भगवान् तस्मादिहास्मादृशां**
**धर्तुं संप्रति का कथा कथय भोः कस्यार्हमेतत्सखे ॥**

**विदूषकः—** ( धैर्यमवलंबमानः कथंचिदुत्थाय ) ( स्वगतम् ) अह्मो वयस्सस्स वीरत्तरंगणायेन भमंसो वरिम्भमो संवुत्तो । तहहि पुढमं मंसपिण्डे रअणब्भमो जादो । तदो तदन्तव्वट्ठिणि अट्ठिणि-

म्मुत्ताहलब्भमो । प्रजुत्तं एव्व उत्तं महाराएण ! भयवन्तस्स मुरारिणो भवारिसाणं वितत्तारिसंमुत्ताहलत्थत्तुणाहिकारो । किं तु सिंटिमालहारिणो महेसरस्स एव्व ।

**राजा**— मूढकथाप्येवमवस्थितं किमस्थि दृष्टं भवता ।

**विदूषकः**— एह्निं एव्व दिसइ एव्व चदाखिणो भवं एव्व सक्खिणो ।

**राजा**— प्रलपत्वयं भयपरतन्त्रः । तावदेतदवलोकयामि ।

(इति मुक्ताफलमादाय)

**आस्वाद्याधिकशोधितामृतरसानम्भोधराः शारदाः**
**शुक्तौ चेन्नखनिस्तुषीकृतसुधारोचिःकलानिर्मितौ ।**
**वर्षेणाधिपयःपयोधिमिलितस्वातीदिनामौक्तिकं**
**यत्किञ्चिज्जनयन्ति तस्य कथमप्येतेन साम्यं वदेत् ॥**

आकुञ्चितकाञ्चनशलाकिकाञ्चितमिदं मुक्ताफलं नासाभरण मित्यवधारयामि । (विचिन्त्य)

**नासामौक्तिकमापदाप्रणयिना नव्यं स्वकन्यामणे-**
**रेतद्दत्तमपत्यवत्सलतया यत्नेन संपादितम् ।**
**तस्याः प्राणसखेन किं भगवता तस्योचितः संपुटो**
**व्यातेने निजभूषणेन मणिनेत्यूहोऽयमुन्मीलति ॥**

(सविमर्शम्) अलमन्यथा संभाव्य— प्रायेण कस्याप्यन्त-रीपान्तरजुषो भूपावतंसस्य कन्यामणेरन्यादृशेन तावदनेन नासा-भरणेन भवितव्यम् । यतः—

सञ्चारिता नयनयोः श्रवसोश्च मार्गं
भूमौ कदापि विधिना न पुराधुना तु ।
नासामणिं धृतवती तमिमं नताङ्गी
सा कापि मे परिचितेव तनोति रागम् ॥ ५५ ॥

(पुनर्विचिन्त्य) अत एव हेतोरद्याप्यनिर्वर्तितविवाहमहोत्सवा सा भवेत् । भवतु । कथं वा नासाभरणगर्भितं रत्नसमुद्गकमिमं जग्राह स ग्राहः । (सविमर्शम्)

आनीतमेनमवनीपरिणीकुमारी
कूलं विभूषणकुलेन मणीसमुद्गम् ।
विस्मृत्य वारिनिधिवारिविहारहर्षा-
त्सेयं युता परिजनेन चिरायति स्म ॥ ५६ ॥

पुनरंभोनिधानादुज्जृंभमाणो महानवहारोऽयमामिषखण्डधिषणया सपरितोषमह्नाय तमिमं गृह्णाति । (आघ्राणं स्पर्शं चाभिनीय) नूनमनेन रत्नसमुद्गकेन महावहारकुक्षिकुहरे न चिरेणावस्थितम् । यतः—

मेदोमिश्रैरसभिरुदरे मेदुरो विप्रविष्टो
ज्वालाज्वालैरपि विस्मरे जाठराग्नौ तदीये ।
नासाभूषामणिरयमहो न त्यजत्यैव तस्याः
श्वासामोदं रुचिरमधुना स्वस्य नित्यं च शैत्यम् ॥

**विदूषकः**— (सौरभाघ्राणमभिनीय) ही ही ? अणवहिणो अदिट्ठपुव्वो कोवि दिव्वो सौरहविसेसो । एसो वि जिंभइ । ताणाअं अट्ठि । किन्तु मुत्तामणि एव्व ।

**राजा**— (सोपहासम् ।) अहो ! वयस्यस्येदमपूर्वमनुमानकौशलम् यदयमव्याप्येनाप्येतेन सौभरविशेषेण अव्यापकमपि मुक्तामणित्वमनुमिमीते ।

**विदूषकः**— तह ओइ अवहाणे विसमाणं अणवहाणत्तम् । जं पुटमं एत्थ तुए अणुमाणदाए उवण्णत्तं एव्व मए वि एव्वं पडिवादिदम् ।

**राजा**-- मूढ ! मुक्तामणित्वे मया नेदमनुमानमभिहितम् । किन्तु महावहारकुक्षिकुहराचिरावस्थाने ।

**विदूषकः**— जहतहवा होदु होदु । सझम्मिखुण वझत्तणम् ।

**राजा**— सारङ्गसखे ! सङ्गतवचनोपन्यासेन कथमधुना मनागिह सुमनायसे ।

**विदूषकः**— असङ्गदवयणेविसङ्गदवअणेत्ति । किं परिहससि । ता तुह्णिक्कोम्हि । (इति तूष्णीं तिष्ठति ।)

**राजा**— इदमेव खलु मे पुनरिदानीमभ्यर्थनीयम् (स्वगतम्)

**तस्या भाषणमीक्षणं च सुलभं तन्वीत तन्वीमणे-**
**र्धाता चेत्तव तावतैव भविता चेतः परा निर्वृतिः ।**

(सविमर्श ।) सर्वथा दुर्लभमेतत् ।

**द्वीपे कापि पयोधिना परिवृते दीव्यत्यहो सा यतः**

(धैर्यमवलंबमानः पुनर्विचिन्त्य)

**नासारत्नमिहैव तत्परिसरे नाकर्षयेत्किं नु माम् ॥**

(भूयोऽपि विचार्य) किमनेन केवलमनोरथविनोदनेन ।

कर्मानुभवं विधिना कंचित्त्रुटितं निदर्शयन्नर्थम् ।
अपरमितोऽप्यतिदुर्लभमुत्कण्ठे हा भ्रमोदयः कोऽयम् ॥

तथापि विधिमेव तावदेतावदभ्यर्थये ।

भाग्यं हन्त पचेलिमं मम न चेत्कान्तामणेरीक्षणे
स्वप्ने वाथ विधे विधेहि तदिदं सोऽहं कृती तावता ।
कर्ता त्वं खलु याच्यसे त्रिजगतां कर्तव्यमीषत्करं
याच्नेदं प्रथमा ममाप्यगणनादेनां वृथा मा कृथाः ॥

**विदूषकः** — (स्वगतम्) हद्धि हद्धि । दुव्वासचिन्ताभरणिव्वावि- असे तदसेवाहेवायमाणसपरिअणवीणग्गाणुहवस्सएह्मि इमं समा- सक्करं वअस्सत्तणस्सिामिणपरवसजणचरणप्पणामसरणिं अणुसरइ अज्ज मए इदो किं करणिज्जम् ।

**राजा**— (श्रुतिमभिनीय साश्चर्यानन्दम्) कापि पुनरियमकाण्डे क- थमवतरति श्रवणसरणिमशरीरिणी वाणी

ऐरावत्यां नद्यां प्रवहन्त्यां सिह्मलद्वीपे ।
स्नात्वा चिन्तितमन्तः सत्वरमेतल्लभस्वेति ॥ ६१ ॥

**विदूषकः**— एमअमेवि सवणसरणिं अवतरइ । (स्वगतम्) अणवरदसअलभूवलअगदरिन्दसेवणपरायणस्स रण्णो इमंस्सवयं स्सहावेण हापरिस्सन्तोह्मि । (प्रकाशम्) तहहि पुढमं मरुद्दहाए पहवत्थलादो सज्झसेलादो आरहियपुरिमलोणाव आरमणावहिय- एवएदइदं पुण्णच्छेत्तं एदं वि पुण्णच्छेत्तान्ति अणुदिने तेण कारिदेहिंण्हाणो ववासेहिं अदिदूरसरणिलङ्घणजंघालदुट्टवाह अणि इवो दूढराअमणिासिवि आणुहावणेहिं विअट्ठिच्चं ममेत्तावसि-

**किन्नरी**— अहो प्रमादः । अत्रैवागच्छति स्वामिनी निम्बवत्यपि ।
(ततः प्रविशतो नेपथ्यमुभयतः प्रदोषो निम्बवती च स्वस्वपरिवारेण)

**प्रदोषः**— (निम्बवतीं प्रति ।) अस्यां रजन्यां आवयोः इदमन्योन्यदर्शनन्न सुखायते ।

**निम्बवती**— किं! किं! ईर्ष्याकलुषितहृदयः प्रदोषो वा । (अनुचरीर्दृष्ट्वा) गन्तव्यमस्माभिरितः प्रदेशात् । यतोऽहमस्य शय्यां दर्शनं च सशपथं वर्जितवती ।

**प्रदोषः**— मा तावत्साहसिके, किन्नाहं ते प्रभवामि?

**निम्बवती**— तथाचेदहमपि ते प्रधानमहिषी । अपि न जाने यदा यदा भवान् हित्वास्मद्देशं धृत्वा गोपवेषं गत्वा वहु दूरं कृत्वा वेणुगानं आचकर्ष कस्याश्चित् मदनाक्रान्तायाः गोपिकायाः मनः । अयि मूढ, किमहं न बोधामि त्वत्प्रत्यागमनकारणं ते गूढनायिकायाश्शौर्यावलिप्तहृदयाया इन्द्रवर्मणा हठादुपयम्यमानायाः कनकलेखायाः परिणयमहोत्सवदिदृक्षैवेति ।

**प्रदोषः**— निम्बवति, कनकलेखाया मम च कमपि प्रणयमामन्त्रयन्तीं न बाधते त्वां लज्जा मयि जानत्येव ते अनुरागं इन्द्रवर्मणि । अपि न जानीषे यत्सर्वलोकविदितं त्वयैव कारणभूतया त्वदनुरागभाजनेन इन्द्रवर्मणा बह्व्यस्तमेव शरणं मन्वानाः कन्यकाः प्रायो विप्रलब्धा इति ।

**निम्बवती**—

ईर्ष्या ते हृदयगता मिथ्या वस्तूनि किमपि गुम्भयति ।
तस्मात्ते प्रतिवचनं दातुं दीनाऽहमद्य नालं हि ॥ ५ ॥

मया विवदमानस्य मासास्सप्त गतास्तव ।
तस्माद्द्वैविध्यमापन्नाः सर्वे वनमृगादयः ॥ ६ ॥

वनादस्माद्गतोहर्ष आगता दुःखसन्ततिः ।
शिशिरीकुरुते नैव मेघो वर्षेण ते वनम् ॥ ७ ॥

ऋतवोऽपि यथापूर्वं न सेवन्ते वनस्थलीम् ।
ग्रीष्मायते च हेमन्तो वसन्तः शिशिरायते ॥ ८ ॥

सरिच्छीकरशीतश्च राजीवाहृतसौरभः ।
न वाति माधवे कान्त, सुखदो मलयानिलः ॥ ९ ॥

दुर्दशावर्णने नाथ, न शक्ष्यामि पुरस्तव ।
अस्मद्विरोध एवात्र निदानमवधार्यताम् ॥ १० ॥

**प्रदोषः**— (सप्रणयमिव ।)

दुर्दशाया निवृत्तीच्छा यदि सा त्वद्वशंवदा ।
न निम्बवत्या संरोधः प्रदोषेच्छासु दीयताम् ॥ ११ ॥

अहं तु राजकिशोरकमेव त्वत्तो जिहीर्षामि ।

**निम्बवती**— ( सरोषशोकम् । ) जोषमास्यताम् । कृत्स्नोऽयं विद्याधरलोकोऽपि नैनं क्रीणीयात् । एकतमा ह्यस्य जननी मदाराधनपरा मे सखीषु । सा किल मया कदाचित्सुखस्पर्शमन्दानिलान्दोलितानेकानोकहरमणीयोपवनप्रान्तेषु कदाचित् प्रवातोद्धूयमानवाचालवीचिमालाकोलाहलाकुलितकालानलोद्भ्रान्तहालाहलोत्पत्तिकालायमानोदनृत्यद्द्रुणिक्पोतभागीरथीकान्तरम्योपकण्ठस्थतालीवनश्याममेघावृताकाशभागाधिकश्यामलामन्दकान्तारपीतपुलिनप्रदेशेष्वसकृन्मां निर्भरं परिष्वज्यानवरतममन्दमरन्दधारामाधुर्य-

वचनामृतवर्षेणासिञ्चन्मे कर्णयुगलम् । जातुचित् सागरसलिलनरीनृत्यमाननौकावलीमवलोकयन्त्यन्तर्वर्तिनी स्वयमपि पर्यायोद्गमनावगमनायितगतिचातुर्येण किञ्चिदन्तरं गत्वा परावृत्य तटभूमौ तां विडम्बयन्ती विस्मयविकसितलोचनारविन्दां समनन्दयत् प्रियसखीं माम् । ते हि गताः स्मर्यमाणमधुरा दिवसाः ।

अद्यापि तां युवमनोरथलक्ष्यभूतां
मन्दाकिनीतटतले शयितां श्रमेण ।
मन्दानिलेन च मया बहु वीज्यमानां
गर्भालसां प्रियसखीं सदयं स्मरामि ॥ १२ ॥

(अश्रूणि मुञ्चन्ती ।) हन्त ! कुमारमेनमखिललक्षणोपेतं प्रसूय मर्त्यत्वान्मद्दौर्भाग्याच्च प्रसववेदनयाऽमरलोकङ्गतायामस्यामनाथं तं बालकं वीक्ष्य प्रियसखीविनाशशोकविनोदनायौरसमिव खलु वर्धयामि । तत्कथं वा पूरयेयं तेऽभीष्टम् ।

**प्रदोषः**— कियन्तं कालमत्र वस्तुमिच्छसि ।

**निम्बवती**— यावदिन्द्रवर्मणः परिणयोत्सवदिवसः । यदि तेऽभिरुचिरस्माभिर्नर्तितुं तर्हि सङ्गच्छस्व मया । नोचेत् गम्यताम् । वयमप्यपसरामः ।

**प्रदोषः**— देहि मे राजकुमारम् । त्वया नृत्येयमधुना ।

**निम्बवती**— (सरोषम् ।) नैव ते विद्याधरलोकायापि ; किं पुनस्ते । (अन्यतो मुखमाक्षिप्य ।) सख्यस्त्वरितं गम्यतामन्यथा महान् कलहो भविष्यति ।

(इति सपरिवारा निष्क्रान्ता ।)

**प्रदोषः**— चण्डि गच्छ गच्छ, जहाहि मैतद्वचनं यावदहं त्वां दावयामि । सखे प्रमोह, अपि स्मरसि कदाचिदहं कस्मिंश्चिदुदधिरोधसि तिष्ठन्नुत्तुङ्गशैलशिखरेऽश्रृणवं किमपि देवार्हं गानमम्भोधिमध्ये । यस्य माधुर्येण शान्तोऽभवद्वीचिवाचाटोऽपि वारिधिः । कतिचन तारकाश्च विहाय खमण्डलं न्यपतन्सलिले ।

**प्रमोहः**— आं स्मरामि ।

**प्रदोषः**— तदाऽहं अद्राक्षं मदनं धनुर्बाणपाणिं डयमानोऽन्तरा मेदिनीशीतकिरणौ । न तु त्वमशक्ततया । सतु काञ्चित् प्रतीच्यवाटतपस्विनीं स्वशरव्यतां नीत्वा सजवममुञ्चच्छरमपघ्नन्निव सहस्रं प्राणिनां मनांसि । परं सा योगिन्यकलुषितहृदया सन्ततध्यानपरायणा नेयाय तद्वशताम् । एवमञ्जसा गच्छान्क्षिपन् स्फुलिङ्गानपि मोघीकृतात्मशक्तिस्तस्य बाणो निपपातामोघीभवन्निव कस्मिंश्चित् प्रसूने । तत्तु कुसुमं प्रकृत्या दुग्धधवलमपि मारशरक्षत्या रक्तमभवत् । समाहूयते चेदं कन्यकाभीरागालसनाम्ना । सद्यः समानय तत्सुमं यत्कदाचिददर्शयं ते । यस्य च रसः पतितश्चेदुपरि निद्रानिमीलितयोर्यस्य पक्ष्मणोस्तं जनं स्त्रियं वा पुरुषं वा स्वप्नसमनन्तरं यो नयनविषयीभवति तस्मिन् जीव एवानुरागाभिनिविष्टहृदयं करोति । आनयैतं प्रसूनमविलम्बेन कालेन यावता क्रोशार्धं गच्छेत्तिमिङ्गिलः ।

**प्रमोहः**— चत्वारिंशता क्षणानामखिलावनिं भ्रान्त्वा निवर्तेय ।

(इति निष्क्रान्तः ।)

**प्रदोषः**— गृहीत्वाऽस्य रसं निद्रानिमीलितनयनां निम्बवतीमुपलभ्य पातयामि तमुपरि तस्याः पक्ष्मणोः । ततः प्रबुद्धय

प्रथमं यमेषा पश्यति स व्याघ्रः ऋक्षः सिंहः लुलायो वृषो वानरो गोलांगूलो वा भवतु तमनुरागेणानुसरिष्यतीयं कोपना । अहं तु मूलिकान्तरेणास्या अनुरागोन्मादापनयनात्पूर्वमेव तं राजबालकं मे दापयामि । (पुरतोऽवलोक्य ।) कोऽयमागच्छति? (अनुधावन्तीं तरुणीं दृष्ट्वा ।) अन्तरितास्तिरस्करिण्या श्रोष्यामि तयोः सल्लापम् ।

(ततः प्रविशति मकरन्दस्तमनुधावन्ती सौदामिनी च ।)

**मकरन्दः**— (सौदामिनीं प्रति ।)

मा माऽनुधाव तन्वङ्गि, प्रणयो नास्ति मे त्वयि ।
कुत्रास्ते कौमुदी रम्या सवसन्ताऽद्य भामिनी ॥ १३ ॥

हनिष्यामि च तं मूर्खं साऽधुना हन्ति मामहो ।
कान्तारेऽस्मिन् प्रविष्टौ तावित्युक्तं हि त्वया पुरा ॥

तस्मादस्मिन्वने भ्रान्त्वा मार्गयन् कौमुदीमहम् ।
अपश्यन् तरुणीं कान्तां पश्याम्युन्मत्तवज्जगत् ॥२५॥

गच्छ गच्छान्यतो भद्रे, सर्वथा माऽनुयाहि माम् ।

**सौदामिनी**— अयि कठिनहृदय, त्वयैवाहमाकृष्टा । त्वया विमुक्ता चेत्तादृशी शक्तिरहमपि स्वयमेवापगता भवेयम् ।

**मकरन्दः**— किमहं त्वां प्रलोभये । किं वा ददामि ते प्रत्याशावकाशम् । न किं ते भणामि शश्वत् त्वय्यनुरागो नास्ति न जात्वपि च भविष्यतीति विस्पष्टैर्वचनैः ।

**सौदामिनी**— तथापि त्वयि मेऽनुरागोऽसाधारणः प्रतिक्षणं वर्धते । अहं ते बालिका सरमा । अत एव त्वया प्रहृत्यापसा-

रिताऽपि पुनः पुनरनुसराम्येव । तव सरमापोतपदं मामारोप यतु भवान् । त्वया धिक्कृतापि प्रहृताप्यपसारिताप्यनादृतापि कदाचिदपि न विमोक्ष्यामि त्वाम् । अनुसरणमनुमन्यस्वानर्हाया अपि मे । त्वदनुरागाय किमिदं सरमापोतपदमन्तरान्यदपकृष्ट-मभिलषेयम् । लघिष्ठमप्येतन्मम तु माननीयमेव ।

**मकरन्दः**—

वर्धयसि कोपमधिकं बाले वाचाऽनया हि मम सद्यः ।

त्वद्दर्शनेन खिन्नः--

**सौदामिनी**—

त्वद्विरहं नास्मि सोढुमयि कान्त ॥ १६ ॥

**मकरन्दः**— (सरोषकरुणम्)

हित्वा ह्यवन्तिनगरीमतितुङ्गसाला-
मागत्य मामनुसरस्यनुरागहीनम् ।
गाढं तमश्च विपिनं तु शरारुभीमं
त्वं कन्यकेदमुचितं न हि ते वचश्च ॥ १७ ॥

**सौदामिनी**— (सप्रणयम् ।) त्वद्धर्मशीलतैव मामेवं प्रेरयति ।

निर्मानुषाणि न हि नाथ, वनानि तानि
यन्मे जगन्ति निखिलानि भवन्मयानि ।
एवं समस्तमपि मे निकटे जगत् स्या-
देकाकिनीति कथमत्र भवान् ब्रवीति ॥ १८ ॥

रात्रिर्मे दिवसायते तम इदं ज्योत्स्नायते भीषणं
कान्तारं नगरायते तव वचः पीयूषवर्षायते ।

यत्र त्वद्वदनामलेन्दुरनिशं प्रह्लादनो दृश्यते
तत्रानन्दममन्दरागनिचितं विन्देयमेवाधुना ॥१९॥

**मकरन्दः**— अयि साहसिके, अधुनैवापहृत्य निगूढं यत्र कुत्रापि निकुञ्जे निलीय त्वां शरारूणामामिषीकरोमि ।

**सौदामिनी**—हन्त । नातिहिंस्राणामप्येवं भवति मानसी वृत्तिः । तवासन्निधाने नास्त्युपायः प्राणितुम् । भवतु यथाशक्त्यनुसरामि त्वाम् ।

**मकरन्दः**— (सक्रोधम् ।) न दद्यां तेऽवकाशमुक्तिप्रत्युक्तिवैदग्ध्यस्य । अद्यैव प्रद्रवेयम् । यद्यनुयासि मामवेहि त्वयि किमपि पापमप्याचरेयं क्रोधवशगः । (इति निष्क्रान्तः ।)

**सौदामिनी**— अये प्रस्तरप्रतीकाश, किमन्यदप्यस्ति पापाचरणम् । तत्तदेव खल्पक्रान्तं यदा मां मुक्त्वाऽन्यासक्तचेता धावसि । धिक्त्वामसदृशकारिणम् । अश्रुतचरं किल यत्काचित्तरुण्यननुरागिणं कञ्चित्पुरुषमनुगतेति । 'को वा सचेतनः स्त्रियमभिकामयमानां नाभिनन्दति ।' भवतु अहमप्यनुधावामि त्वाम् । त्वदलाभे कथं वा मन्दभागिन्या जीवितव्यम् ।

(इत्यनुधावन्ती मकरन्दं निष्क्रान्ता ।)

**प्रदोषः**—( सदयम् ) अयि मुग्धे, अनुयाहि तम् । यावदयं वनादस्मान्न निष्क्रामति तावत् त्वां प्रणयेनानुनेष्यति ।

( प्रविशन्तं प्रमोहमवलोक्य स्वगतम् । )

महाजङ्गाल, किमुपानीतं तत् कुसुमम् ।

**प्रमोहः**— नन्विदमेव । ( इति प्रसूनं दर्शयति । )

**प्रदोषः—** दीयतां ( हस्तं प्रसार्य गृह्णन् । )

**कान्तारोत्तरभागे सरसिजनिचितं सरोवरं रम्यम् ।**
**पुन्नागनागसालैश्चूताश्वत्थैर्वृतं भाति ॥ २० ॥**

तस्मिन्मन्दानिलविचलितविटपशिखरैर्वितायमानविस्तारैरभ्रंकषैस्तरुनिकरैराच्छाद्यमाने सरोरोधसि नर्तनहास्यप्रशंसालापैरात्मानं विनोदयन्ती निद्राति स्वावासे किसलयोपरचितपर्यङ्किकायां निम्बवती । अतोऽद्यैव गत्वा तस्याः स्वप्नमीलितलोचनयोस्तत्कुसुमरसं निषिच्य यस्मिन् कस्मिंश्चिज्जीवेऽमन्दानुरागमुत्पादयामि । त्वमपि किञ्चिदेतत् गृहीत्वा भ्रमास्मिन् गहने । काचिदवन्तीनगरयुवतिः प्रणयविहीनं कञ्चिद्युवानमनुनीय धावति । तावन्विष्य तस्य तरुणस्य पक्ष्माणि रसेनानेन सेचयित्वा तथा कुरुष्व यथाऽस्य निद्राविरामे सैव शोच्या कन्यका पुरतस्तिष्ठेत् । एवं जागरुकेण यूनस्तस्य तरुण्यामन्यादृशप्रणयं जनयित्वा ताम्रचूडनिनादात्पूर्वमेव द्रष्टव्योऽहं त्वया ।

**प्रमोहः—** प्रभो, न काऽप्यत्र विचारणा कार्या । इदं गम्यते ।

(इत्युभौ निष्क्रामतः ।)

(ततः प्रविशति कासारतीरे यथा निर्दिष्टा निम्बवती ।)

**निम्बवती—**

**नृत्यतां गीयतां सख्यः स्थीयतां मण्डलाकृति ।**
**अजाखुव्यालमार्जारचर्मभिर्व्रियतां वपुः ॥ २१ ॥**

**यावत्स्वपिमि पर्यङ्के तावत्स्थित्वैव गम्यताम् ।**
**प्रारभ्यताञ्च संगीतं युष्माभिः प्रीतये मम ॥ २२ ॥**

ताम्रपर्णीतीरे कल्लिडैक्कुरिचिजनपदे आहिताग्निभिर्वैदिकधर्मानुष्ठाननिरतैः विप्रवरैरलङ्कृते कांचन महतीं संस्कृतविद्याशालां प्रतिष्ठापयितुमुद्योगमनुतिष्ठति शेरन्मादेवि ताल्लूक् बोर्ड अग्रासनाधिपो राममूर्ति I. C.S. महाशयः । एषा च पाठशाला लक्षपरिमितेन नीवीधनेन महता समारोहेण चाचिरादेव प्रतिष्ठिता भविष्यति । ग्रामस्थाश्च मनस्विनो धनिकाः प्रतिसंवत्सरं सहस्रं रूपिका नियमेन पाठशालायै दातुं सममन्यन्तेति च शृणुमः ॥

पट्टाम्पिजनपदे पूर्वं प्रचालितः मध्ये च कैश्चित्कारणैः विच्छेदमापन्नः सारस्वतसमाजः अद्य प्रत्युज्जीवितः महता आघोषेण अभिवर्धत इति जानन्तो वयं नितरां संतुष्यामः ॥

दक्षिणकर्णाटभूभागे उदयावर् जनपदे काचन संस्कृतपाठशाला नूतनतया प्रतिष्ठिता अनुदिवसमुपचीयमानविद्यार्थिसंख्या आनन्दयत्यस्मान् ॥

---




# BRAHMASUTRA BHASHYA

OF

## SRI SANKARA BHAGAVATPADA

WITH

BHAMATI of Vachaspati Misra,
KALPATARU of Amalananda,
AND
PARIMALA of Appayya Dikshita.

This publication is unique in that it contains at one glance all the five granthas styled by Brahmananda as Vedanta Sastra. Undoubtedly it will be of great help to all Advaita Scholars. The work being a gigantic one is issued in parts. Each part consists of 80 pages and is priced at Re. 1. Post free.

THE MANAGER,
BOOKSELLING DEPARTMENT,
*Sri Vani Vilas Press, SRIRANGAM.*

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL. XX. No. 5.




PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM AND PUBLISHED AT MADRAS.



Registered No. M. 103.

# विषयाः ।





# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Purasawalkum, Madras (N. C.).
6. Annual subscription is Rs. 3 only, including postage.



**शकुन्तला—** अनसूये, आयतपिनद्धेन स्तनवल्कलेन प्रियंवदया नियन्त्रितास्मि। शिथिलय तावदेनम्।

**अनसूया—** तथा। [इति शिथिलयति।

**प्रियंवदा—** (सहासम्) अत्र तावत्पयोधरविस्तारयितृकम् आत्मनो यौवनमुपालभस्व।

—**शाकुन्तलम्**

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८.] राक्षसवर्ष श्रावणमासः । [संचि. ५.

## सुभाषितानि ।

अहो प्रकृतिसादृश्यं श्लेष्मणो दुर्जनस्य च ।
मधुरैः कोपमायाति कटुकेनैव शाम्यति ॥ १ ॥

ईषल्लब्धप्रवेशोऽपि स्नेहविच्छेदकारकः ।
कृतक्षोभो नरीनर्ति खलो मन्थानदण्डवत् ॥ २ ॥

शिरसि निहितोऽपि नित्यं
यत्नादपि सेवितो बहुस्नेहैः ।
तरुणीकच इव नीचः
कौटिल्यं नैव विजहाति ॥ ३ ॥

रविरपि न दहति तादृक्
यादृक्संदहति वालुकानिकरः ।
अन्यस्माल्लब्धपदो
नीचः प्रायेण दुःसहो भवति ॥ ४ ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

(पूर्वतोऽनुवृत्तम्)

—※—

गौरीगुरोर्गिरिराजस्य सौभाग्यमनुवर्णयितुं प्रवृत्तस्यास्य महाकवेः प्रायः प्रथमं तस्य धातुमत्त्वैव स्मृतिपथमारोहति । यथा रघौ —

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कुटानुद्धूतैर्धातुरेणुभिः ॥ इति ।

मेघे तु धातुभिर्मण्डितानां शृङ्गप्रदेशानां घनैरगम्यतया धातूनामनुवर्णनस्यानौचित्यमाकलयन् शैलराजं जह्नुकन्यासमलङ्कृतत्वेन निर्दिशति ॥

अनन्तरं हिमालये तत्र तत्र गुहागतानां संचरतां वा केसरिणां शरभानां वा गाम्भीर्यविक्रमादिकं सरसमनुस्मरति यथा रघौ--

शशंस तुल्यसत्वानां सैन्यघोषेऽप्यसंभ्रमम् ।
गुहागतानां सिह्मानां परिवृत्यावलोकितम् ॥ इति ।

यथा च मेघे—

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानः सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान्कुर्वीथास्तुमलकरकावृष्टिपातावकीर्णान्
केषां न स्युः परिभवफला निष्फलारम्भयत्नाः ॥ इति ।

तथैवेहापि हतद्विपानां केसरिणां गतिमनुवर्णयति कालिदासः ॥

मृगश्रेष्ठानां गतिविक्रमादिवर्णनानन्तरं 'भूर्जेषु मर्मरीभूताः' इति रघुवंशेऽनुसृतां पद्धतिमाश्रित्यास्मिन् काव्येऽपि भूर्जत्वचा शैलराजस्यापाद्यमानां सौभाग्यसंपदं सरसमुद्गृणाति न्यस्ताक्षरेत्यादिना ॥

**न्यस्ताक्षरा धातुरसेन यत्र**
**भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।**
**व्रजन्ति विद्याधरसुन्दरीणा-**
**मनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥**

विद्याधरसुन्दरीभिरप्सरोभिश्चानङ्गलेखेषु भूर्जत्वचः उपयुज्यन्ते— इतीह निर्दिशन्महाकविः पुनर्विक्रमोर्वशीये—

"**विदूषकः**— अविध अविध भो वयस्य सर्पनिर्मोक इव किमप्येतत्संमूखीनमागच्छति ।

**राजा**— (संभाव्य) भूर्जपत्रकृतोऽयमक्षरराशिविन्यासः ।

**विदूषकः**— नूनं खलु तत्रभवत्योर्वश्या भवतः परिदेवितम् श्रुत्वा रागसूचकान्यक्षराणि विसर्जितानि भवन्ति ।

**राजा**— नास्त्यगतिर्मनोरथानाम् । (ग्रहीत्वा, अनुवाच्य, सहर्षम्) प्रसन्नस्ते तर्कः ।"

इत्यादिना उर्वश्या अनङ्गलेखक्रियायां भूर्जपत्रस्यैवोपयोगं साधु वर्णयन्, दिव्याङ्गनाभिन्यस्ताक्षरं भूर्जपत्रं **कुञ्जरबिन्दुशोणमिति, सर्पनिर्मोक इवेति** चानेकधा हृदये संभावयति ।

सुखस्पर्शा भूर्जत्वच: वल्कलत्वेनाप्युपयुज्यन्ते इत्युत्तरत्र[1] वक्ष्यति ॥

अथ 'कीचकध्वनिहेतव:' इति रघुवंशे निर्दिष्टान्मरुत: स्मरणपथमारूढान् सरसमनुवर्णयितुमुपक्रमते 'य: पूरयन्' इत्यादिना ।

य: पूरयन्कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥

रघुवंशे कीचकरन्ध्रभागानापूरयत: श्रुतिमधुरं कूजत: समीरणस्य क्वणितं 'स कीचकैर्मारुतरन्ध्रपूर्णै: कूजद्भिरापादितवंशकृत्यम् । शुश्राव कुञ्जेषु यश: स्वमुच्चैरुद्गीयमानं वनदेवताभि:' इति वनदेवतागानमिवोत्प्रेक्षमाण: कविरिह तमेव निस्वनं देवगायकानामंशस्वरत्वेन संभावयन् हिमालयभूधरारण्येष्वात्मनानुभूतमानन्दमवगमयति सहृदयान् ॥

( क्रमश: । )

॥ श्री: ॥

## ॥ अघोरकामिनी ॥

( पूर्वतोऽनुवृत्तम् )

अघोरकामिनी ब्राह्मधर्मानुयायिनीति कथितमेव पूर्वमस्माभि: । इयं च निजपुरीमागतं कमपि धर्मप्रचारदक्षधियं सह पौरनरनारीभि:

---

1. गणा न मेरुप्रसवावतंसा
भूर्जत्वच: स्पर्शवतीर्दधाना: । सर्ग १. श्लो ५५.

सप्रमोदं सोत्कण्ठं सोत्सवमभिमुखीभूय, समभिनंद्य च तं गृहमानीय गूढमपि धर्मतत्त्वमुपदिशंती, तस्मै धनदानेन प्रोत्साहयति स्मेत्यहो! धर्मपरायणता देव्याः ।

अघोरकामिनी प्रतिदिनं सायं समं नगरनारीभिर्बुद्धालयं प्रयांती, मध्येपदवि भृशमाचारं सतीनां सौगतं च तत्वमुपदिशति स्म सर्वाः प्रजाः । अस्याः किलाऽप्रतिहतप्रसरं दैनंदिनं व्यवसायमवलोकयतां लोकानामुदभूदस्यां सुदृढा पूज्यतामतिः । मेनिरे च भुवनमवतीर्णा कापि देवतैवेयमिति जनाः ।

अस्याः किलाघोरकामिन्याः परोपकारम् भूतदयां स्वधर्मनिष्ठां पातिव्रत्यं प्रमदोन्नतये प्रयत्नमेवमादीननितरसाधारणान्सकलान्गुणानुपवर्णयितुं प्रवृत्ता अपि वयं नापारयामेति दुनोत्यंतरङ्गं नः ।

महानुभावाया देव्या अहर्निशं क्रियमाणेन परिश्रमेण तनिमानं समं लोकभाग्येन विंदमाने काये, युक्ताऽयुक्तविवेकविधुरा व्याधयो विविशुरेनाम् । वैद्यमहोदयेन केषु चिद्दिनेषु वातान्तरोपसेवनाय स्थलांतरमाश्रयणीयमित्यभिहिते, मोहमय्यां यावदारोग्यं प्रियाया निवासः कार्य इति निरणायि बाबूप्रकाशचंद्रमहाभागेन । अस्मिन्नेव व्यतिकरे क्रूरकृतान्तापाङ्गगोचरीभूता देवी अघोरकामिनी न केवलं प्रकाशचंद्रम्, सर्वानपि नगरवासिनः शोकसागरे मज्जयित्वा निर्दयं त्रिदशानां सदनमयासीत् ॥

आसन्नमरणाया देव्या लोचनयुगलान्निपेतुः कतिपयाश्रुबिंदवो, न चिरादेव पतिपुत्रवियोगो भवतीति । ततो न युक्तं शोचितुं, नियता मृतिः प्राणिनां, गंताहमानंदमयं सदनम्, कोऽयं हर्ष-

स्थाने शोकावेगो ममेति, मनस्याकलय्य समाहिता सुबोधनामानं ज्येष्ठतनयमाहूयाह । 'तात सुबोध चिरं जीव । मा कृथा मनागपि मानसं मानिनीषु मानवानां परेषां । नोत्सृज यावज्जीवं सत्यं । संपादय दिगङ्गनाकर्णावतंसीकृतकुसुमायमानं यशः । त्वत्कृते विहितं धनं नाम धर्म एव । मां मा शुचः । मंगलमयं धाम यास्यामीति ॥

वाचकमहाशयाः अस्मिन् चरमोपदेशे देव्याः कियती धर्मबुद्धिरासीत् । कियती वा कर्तव्यजागरुकता । कियच्च सद्वर्तनम् । सर्वमेतत्स्पुटीभवति । येषां किल देव्यास्संगलाभः समजनि ते परम्— अद्यैव नो जननी लोकांतरं गता; अद्य नः प्रियभगिनी मृतिमधिगता; अद्याऽस्माकं दुहिता त्रिदिवमगात्; अद्य खलु वयमनाथा स्मः; अद्य हि बहिश्चरं जीवितं प्रनष्टम्; अद्य हितोपदेशकर्ता गुरुरस्माकं नाकं ययौ'— इति मेनिरे ॥

सर्वत्र नगरे प्रसृतमौदासीन्यम । सर्वाः पौरनार्यो रुरुदुः सोरस्ताडनम् ॥

देवीयमघोरकामिनी स्वीयमायुष्यं सर्वं परोपकृतिनैव व्ययीचकारेति न विस्मरणीयमेतत्केनापि । एतदेव लोकान्बोधयितुं तदा तदा सृजति महनीयामेताद्दशीं व्यक्तिं भगवान्विधातेति वयं भावयामः परं ऋणिनश्च भवामस्तस्येति शुभम् ॥

रामाचार्य गलगली ।

---

॥ श्रीः ॥

# ॥ चित्रकेतूपाख्यानम् ॥

आसीत्पुरा कलिन्दकन्यासमलंकृतस्थलीषु, बृन्दावनादिपुण्यक्षेत्रैः पवित्रितेषु, शूरसेनेषु निर्जितारातिनिवहः, न्यक्कृतारिषड्वर्गः, सत्कृतविबुधसंघः, पूजितातिथिसार्थः, विरचितेष्टापूर्तः, समधिगतसर्वैश्वर्यो राजा चित्रकेतुर्नाम । तस्य अभिजनवंशोत्पन्ना लावण्यनिधयः सहस्रं भार्याः समभूवन् । अप्रतिमेन रूपेण, प्रशस्यतमेन सौन्दर्येण, अयातयामेन वयसा, अखिलजनमहनीयया जात्या, अनिन्द्यया विद्यया, अनितरसाधारणेनैश्वर्येण सम्पन्नस्यापि तस्य भूपतेः वंशवृद्धिकरं सुताभिधानं ज्योतिर्नोदियाय । 'अपुत्रस्य सन्ति न लोकाः शुभाः' इत्यनवरतं चिन्तया दन्दह्यमानहृदय आत्मनो जन्मसाफल्यमपश्यन् दिनचर्यासु सर्वास्वपि प्रायोऽरतिमेव आविश्चकार । तथा चोक्तम्—

'न तस्य सम्पदः सर्वा
महिष्यो वामलोचनाः ।
सार्वभौमस्य भूश्चेय-
मभवन् प्रीतिहेतवः ॥' इति ।

एवंविधस्य तस्य भवनं कदाचिद्यदृच्छया लोकाननुचरन्नंगिरा नाम महर्षिरुपजगाम । तं च प्रश्रयेण भक्त्या गौरवेण चाभिगच्छन्महाराजोऽर्घ्यपाद्यादिभिरर्हणैः सम्पूज्य महार्हे विष्टरे वासयित्वा साष्टांगपातं प्रणनाम । तं समुत्थाप्य महर्षिः 'अपि

कुशलं प्रकृतीनां सामात्यस्य भवतश्च? प्रजानां भृत्यानां दाराणामन्येषां चानुचराणां सुखमनामयं च त्वय्येव आयतते । अपि वर्धते निष्प्रत्यूहमिष्टापूर्त्तादिकं धर्माचरणं भवद्भुजबलगुप्तेषु राष्ट्रेषु? चिन्तया विगतप्रसादमिव ते मुखं यत्किंचिन्मनोरथवैफल्यमन्तर्गतमाख्याति । स्वैरं ब्रूहि' इत्यप्राक्षीत् ॥

सोऽपि निबद्धाञ्जलिः 'भगवन्, तपोज्ञानसमाधिभिर्निरस्तसर्वपापानां भवादृशां योगिनामगोचरो नास्त्येव विषयः । तथापि प्रश्नेन अनुगृहीतमात्मानं मन्वानो मनोरथं निवेदयामि । अपुत्रस्य मे किं राज्येन, किमैश्वर्येण, किं वा भोगेन । अतः पितॄणामृणनिर्मोक्षसाधनमात्मजं यथा लभेय तथा अनुग्रहो विधेयः' इति प्रार्थयामास ॥

एवमनुनाथितः स भगवान् कृपालुस्त्वाष्ट्रं चरुं श्रपयित्वा त्वष्टारमयजत् । प्रादाच्च यज्ञोच्छिष्टं तस्य भूपतेर्महिषीषु ज्येष्ठायै कृतद्युत्यै । अथ 'भो राजन्, तव अचिरादेवात्मजो भविता । तेन हर्षं शोकं चावाप्स्यसि' इत्युक्त्वा यथागतमगमत् ॥

तदाप्रभृति देवी कृतद्युतिर्दौहृदलक्षणान्युवाह । तस्या गर्भोऽनुदिनं कृष्णेतरपक्षशशलाञ्छन इव ववृधे । अथ प्राप्ते दशमे मासि महिषी प्रासूत कमपि तेजोमयं कुमारम् ॥

चित्रकेतोः पुत्रजननोदन्तं श्रुत्वा सर्वेऽपि शूरसेनः परां मुदमवापुः ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ नारदनैपुणी ॥

(पूर्वतोऽनुवृत्तम्)

—*—

**कृष्णः**— सङ्गीतलोल! तथ्यैव भवदुक्तिः। तथाऽपि प्रातः ब्राह्मणास्तपोधनाश्च नदीतीरमागच्छेयुरिति कुतो नालोचितं तेन! विशिष्य यमुना सर्वश्लाघ्या परिपूता च। कथमपीदं महदाग एव खलु? शासत्यपि धरणीं एतादृशस्याऽधर्मस्य सम्भवो वा मयि? अवश्यमस्य कार्याऽनुरूपा दण्डना। महर्षे! गालव! मा खलु दूयतां भवान्। एकस्य नक्तन्दिवस्याऽन्तर एव तच्छिरसा निर्यातयामि वैरम्।

**गाल**— सम्यक्! जनार्दन! सम्यक्!।

**नार**— सम्यक्! सम्यक्! सम्यगुक्तम्।

**गाल**— सिद्धप्रायमागमनप्रयोजनम्। अनुजानीहि गमनायाऽऽवाम्। कृष्ण! भवाऽवहितः। श्वो मरीचिमालिनोऽस्ताचलावलम्बनात्पूर्वम्।—

**कृष्णः**— आं, आं, नैव सन्देहः।

**नार**— हे भक्तमनोरञ्जन! कालियभञ्जन! गरुडासन! मुरशासन! पद्मदललोचन! भवमोचन! भगवन्! कृष्णपरमात्मन्! किमस्ति भवतोऽपि दुस्साधं कार्यं लोके! अनुजानीह्यावाम्। भव दीर्घायुष्मान्।

**गाल**— दीर्घायुष्मान् भव (गच्छतः)

इति तुरीयो निःश्वासः॥

## अथ पञ्चमो निश्वासः ॥

भगवान् पद्मबन्धुर्गगनमध्यमध्यासीनः समिन्धेतमाम् । दुस्सहैस्तदंशुभिस्संतप्ता मृगास्तरुतलं संश्रयन्ते । पुष्करिण्योऽपि तातोपशमनाय छत्रमिव कमलिनीपत्रमुपरि दधुः । विहगा वलभीरूपाणां कुलायानां रन्ध्रेषु निस्पन्दाः प्रलीयन्ते । वियोगिनां निःश्वासा इव समीरणादुस्सहा वान्ति स्म । स्वाभाविकमपि विहाय वैरं मयूरास्तरुमूलमवलम्बन्ते । समयेऽस्मिन् चित्रसेनं द्रष्टुकामे रत्नावलीसंध्यावल्यौ विविधैर्लतागृहैः सनाथं तदीयमाराममागच्छतः ।

**सन्ध्यावली—** अत्र वा प्रत्यहमागच्छति ?

**रत्नावली—** प्रत्यहमस्मिन्नेव समयेऽत्रागच्छति । अथ तत्र दृश्यमानं लतागृहमधिष्ठायोर्वश्या आलेख्यमसकृद्विलोक्य सदा रुदन्नेव कालं नयति । ह्योऽपि दृष्टं मया ।

**सन्ध्यावली—** तर्हि वच्मि कमप्युपायम्, शृणु । यदि सोद्यागच्छेत् तदा तदागमनमजानाने इव बहुधोर्वशीं दूषयावः । तेनास्य बुद्धिः सन्मार्गमनुसरेद्वेति प्रश्यावः ।

**रत्ना—** आं, आं, समीचीनोऽयमुपायः— भवाऽवहिता । पश्य पश्य, तत्र मन्दमागच्छति ।

(अङ्गुल्या चित्रसेनं दर्शयति ।)

(चित्रसेनोऽपि लतागृहमधिष्ठायोर्वश्या आलेख्यं विलोकयन् वर्तते ।)

**सन्ध्या—** रत्नावलि ! अपि श्रुत उर्वश्या वृत्तान्तः ?

**रत्ना—** किं ? किं ? सखि !

सन्ध्या— सदाऽस्मन्नाथ उर्वशीरूपया पिशाचिकयाऽऽक्रान्तः खलु वर्तते, सा कीदृशीति ज्ञातुकामा ह्यस्तस्या वसतिं प्राप्य व्यचिनवम् ।

रत्ना— ततस्ततः, को वृत्तान्तः ?

(चित्रसेनो निस्पन्दः शृणोति)

सन्ध्या— हन्त ! किमर्थं तत्पृच्छसि ? रूपाजीवा इत्येतावतैव न खलु सर्वा दुष्यन्ति । किं न सन्ति निर्दोषाः ? सुधर्मायां विद्यमानाः सर्वेऽपि रमणा एव तस्याः ।

रत्ना— हहह ! तादृशीं वा विचिन्त्य सदा रुदन् वर्तते नाथः ?

सन्ध्या— सखि ! अयं सदोर्वशीध्यानतत्परो वर्तते । सा पुनः कृतघ्नाऽर्जुनाख्ये कस्मिंश्चित् मानुषे लग्नचित्ता तदीयमालेख्यं दृष्ट्वा सदा रोदिति । ह्योऽप्यद्राक्षम् ।

रत्ना— हन्त ! किं नाऽवगतो भवेदयं वृत्तान्तः प्राणनाथेन, आहोस्वित् जानान एव तूष्णीं तिष्ठति ?

सन्ध्या— किमावाभ्यां क्रियते ? निवेदयाव इति चेदसूयत एते तस्यै रूपाजीवायै इति मन्येत । अतस्तूष्णीम्भाव एव श्रेयान् ।

रत्ना— हन्त ! दुर्भगायै तस्यै वा दास्यति देवेन्द्रदत्तमङ्गुलीयकम् ?

सन्ध्या— आः ! न खलु श्रुतस्त्वया स वृत्तान्तः ! शृणु वच्मि, ह्यो मया गूढं पृष्टोर्वश्यास्सखी रहस्यं सर्वमपि प्राचीकटत् 'कथमप्यर्जुनस्स्वायत्ती कर्तव्यः, स्वायत्तीकरणं च विना तदङ्गुलीयकं न सुसाधम्; तच्चेन्द्राधीनम्, तद्ग्रहणे चाऽन्यादृशी

नैपुणी चित्रसेनस्यैव' इति मन्वानया तयाऽयमुपाय: कृत इति । अयं च तस्या एवाऽवश्यं दास्यति । क्रमेण पश्य ।

**चित्र—** (तयोः पुरोभूय) चेत्तथा कुर्यां नाऽहं चित्रसेनः । हहह! तथा वा वृत्तान्त: ?

**रत्ना—**
**सन्ध्या—** } नाथ ! नाथ ! का वार्ता ?

**चित्र—** सन्ध्यावलि ! सर्वमपि त्वयोक्तं सत्यमेव । अद्यैवाऽवगतो मया दुर्भगायास्तस्या आन्तर आशय: । इत:परमामरणं स्वप्नेऽपि न तां चिन्तयेयम् । सत्यमिदम्, सत्यम्, सत्यम् ।

**सन्ध्या—** नाथ ! नाथ ! भवानत्र वर्तत इत्यावां-- उर्वशीं प्रत्यावाभ्यां कृता निन्दा मर्षणीया भवता ।

**चित्र—** का तावदत्र मर्षणा, भूयोऽपि सम्यक् निन्दतम् । उर्वशीविषयस्तु वृत्तान्त: कर्णारुन्तुदो मम । अतो न मह्यं ब्रूतम्-- प्रिये ! रत्नावलि ! सन्ध्यावलि ! कोऽयं मतिभ्रम एतावता मम ! अग्निसाक्षिकमेव परिणीतयो: सत्योर्युवयो: हहह ! दुर्भगायां तस्यां खलु सक्तोऽभवम् । प्रिये ! युवाभ्यामेव क्षन्तव्योऽयमपराध: । परमित: स्वप्नेऽपि न स्मरेयं दुर्भगां ताम् ।

**रत्ना--** नाथ ! गतं गच्छतु । सर्वमपि तद्विस्मरतु भवान् । अवगतं खलु यथातथमिदानीम् ? देहि मह्यं तदङ्गुलीयकम् ।

**सन्ध्या—** हुम्, मम का गति: ?

**चित्र—** मा खलु कलहायतं युवाम् । मासपर्यायेणाऽनुभुञ्जाथाम् ।

सन्ध्या— तर्हि प्रथमतो मह्यं दातव्यम् ।

रत्ना— हुम्! प्रथमतो मह्यमेव ।

सन्ध्या— हला! अहमेव खलु ज्येष्ठा? मह्यमेव प्रथमतो दातव्यम् ।

रत्ना— अहमेव खलु कनिष्ठा? मह्यमेव प्रथमतो दातव्यम् ।

नारदः— (अन्तस्स्थित एव) चित्रसेन! चित्रसेन!

चित्र— कःसः? नारदमहर्षेश्शब्द इव प्रतिभाति ।

सन्ध्या— आं, आम्!

रत्ना— इत आगच्छति ।

(नारद आगच्छति ।)

सर्वे— भगवन्! वन्दामहे!

चित्र— मुनिपुङ्गव! को वृत्तान्तः?

नार— चित्रसेन! न खलु विश्वसिहि स्त्रीवचनमिति तदैवाऽभिहितं खलु मया? महती खलु विपदद्याऽऽगता?

सर्वे— किं? किम्!

नार— किमन्यत्? त्वयि नभोमार्गेणोर्वशीगृहं गच्छति, त्वया निष्ठ्यूतो मुखवीटीरसो यमुनायामर्घ्यप्रदानं कुर्वतो गालवमहर्षेः करपुटेऽपप्तत् । क्रुद्धे तस्मिन् भगवन्तं वासुदेवं प्राप्य निवेदयति—

रत्ना—
सन्ध्या— } हहह!

**नार—** तच्छ्रुत्वा क्रुद्धेन वासुदेवेन श्व आदित्यास्तमयात्प्रागेव हन्मि दुष्टमिति प्रतिश्रुतं वर्तते ।

**चित्र—** हन्त! किमत्र क्रियते ?

**नार—** प्राणत्यागाय सन्नद्धेन भाव्यम्!

**रत्ना—** हहह! (मूर्च्छति ।)

(चित्रसेनो दूयते ।)

**सन्ध्या—** (पादयोः साष्टाङ्गं प्रणम्य) महर्षे! भवतैव रक्षणीयाः मत्प्राणनाथस्य प्राणाः । हन्त! अज्ञानात्कृतोऽयमपराधः । न्याय्या किमीदृशी दण्डना? कष्टम्! (रोदिति)

**चित्र—** महर्षे! निरपराधः खल्वहम्। नैवाऽहमद्राक्षं गालवमहर्षिं तदर्घ्यप्रदानं वा! अबोधात् कृतायाऽस्मै मन्तवेऽतिकठिनेदृशी दण्डना किं न्याय्या?

**नार —** किं प्रयोजनमीदृशेन वचनेन? गवेषय प्राणरक्षामार्गम् ।

**चित्र—** स्वामिन्! भवानेव गतिर्मम !

**सन्ध्या—** भगवन्! नाऽस्ति शरण्योऽस्माकमन्यः। कृच्छ्रादस्मान्नाथं रक्षन् देहि माङ्गल्यभिक्षाम् ।

(चित्रसेनः सन्ध्यावली च सप्रश्रयं नमस्कुरुतः)

**नार—** चित्रसेन! सन्ध्यावलि! उत्तिष्ठतम् । यथाशक्ति करोम्यत्र साहाय्यम् । तथाऽपि कार्यमिदं दुस्साधमेवेति प्रतीयते। कश्शक्नोति वासुदेवशराणामग्रतस्स्थातुम्? तथाऽपि कोऽप्युपायः प्रतिभाति । अर्जुनेनैव कार्यमिदं साधनीयम् । अर्जुनश्चेदस्मत्पक्ष्यो भवेत्सिद्धप्रायं कार्यमिति चिन्तयतम् । तदर्थं

तस्य दारास्सुभद्रा वशयितव्या । त्रयोऽपि यूयं मध्यमं लोकं प्राप्य सुभद्राया आरामस्य निकटवर्तिनि कस्मिंश्चित्प्रदेशे वह्निं समिन्ध्य म्रियमाणा इव साहसं महान्तं कुरुध्वम् । प्रहिणोमि तत्र सुभद्राम् । आगतां च तां याचत माङ्गल्यभिक्षाम् । उदारा च सावश्यं दद्यात् । दत्तायां च तस्यां तदनु सत्यं ब्रूध्वम् । तदुपरि करणीयं च मदायत्तम् । प्रयात त्वरितमेव । न खलु विलम्बः कार्यः । ममापि वर्तते कार्यान्तरम् । साधयामि तावत् ।

(नारदो गच्छति ।)

इति पञ्चमो निःश्वासः ॥

## अथ षष्ठो निःश्वासः ॥

---

दिवसेश्वरः पद्मिनीमधुपसक्ता विलोक्य संजातरोष इवाऽरुणवर्णोऽस्तमयासीत् । सद्य एव वियोगाकुलचित्तानि चक्रवाकमिथुनानि उत्पक्षमाक्रन्दितुमारेभिरे । रमणस्य भास्वतोऽदर्शनखेदादिव दिगङ्गना श्यामायमानवदना बभूवुः । धेनवश्च स्वस्ववत्सदर्शनोत्सुका अवधीर्याऽपि पीवराणामूधसां दुर्भरत्वं सत्वरं कुटीमविशन् । समयेऽस्मिन् सुभद्रा आरामे मन्दं चलन्ती स्वयमित्थं ब्रवीति ।

**सुभद्रा**— अनुरक्तोऽपि रमणो यदि राजा, न विश्वास्यः । नैसर्गिकी तेषामुक्तिविरुद्धा प्रवृत्तिः । धर्मवचनाद्रेखामात्रमपि यो न व्यतियाति, सोऽर्जुन एव चेदेवं कर्तुमुद्युक्तः तदाऽन्यान् प्रति किमु वक्तव्यम्? 'दारेष्वसत्यवचनं कदाचित्

न खलु दोषाय' इति ऐहिकसुखनिरपेक्षाणां मुनीनामनुशासनमिति श्रूयते । कोऽत्र निन्द्यः?–– क इति वा? अबोधादभिहितेऽपि तैस्तदनुष्ठातॄणां मनो न द्रवतीत्येतदेव महदाश्चर्यम्। द्वित्राश्चेद्दिवसाः सहनीयाः । परश्वएवाऽऽगच्छेयमित्यभिधाय गतः । अद्यचाऽतीतानि पञ्चदिनानि । ज्ञातपूर्व एव मयाऽस्य संभव ईदृश इति । तथाऽपि मम पुरत आगत्य कथमपि नयवचनैर्मां वशयन् मत् लब्धानुज्ञो गच्छति । मम मौढ्यमेव खलु निदानमत्र । स्त्रियोऽसमीक्ष्यकारिण्य इति सत्यमेवेदम् । न चेन्मयाऽद्य चिन्त्यमानो विषयः कुतः पूर्वमेव नालोचितः? धिक्! इतः परं वा मयाऽवहितया भाव्यम् । आस्तां तत्— किमिदानीं कर्तव्यम्? मृगयासक्तचित्तस्य नाथस्य नाऽल्पाऽपि वर्तते गृहविषयिणी चिन्ता । आहोस्वित्–– कार्यान्तरव्यापृतो वा? को जानीते? तीर्थयात्रायै प्रयातोऽयं मामुदवहत् खलु, अद्य मृगयार्थं गच्छन् यत्र कुत्राऽपि विवाहान्तरं चिकीर्षति वा? वंशानुकूला प्रवृत्तिः, सहवासदोषोऽपि । यदि यदा कदाऽप्येतदुद्दिश्य पर्यनुयुज्यते सत्यसंध एव किं तव यवीयान्, जानाम्यहं इति परिहसति । किं करोमि? इत्थं खलु मम शिरोलिपिः अच्युतस्यानुजायाम्सुभद्राया वियोगं न खलु सहेत निमेषमात्रमपि सव्यसाचीति प्रथा परं महती— हन्त! जगदीश! अमुत्र कृतस्य पापस्य फलं वा इदम्? एतदर्थं सर्वा असूयन्ति मह्यं सपत्न्यः । ह्यः काचिदागत्य मां पृच्छति, 'सहोदरि! सदा नाथं त्वदधीनमेव करोषि' इति । अपरा तु 'सखि! कःस उपायः, येन विजयोऽपि सदा त्वदधीनो भवति, कृपयोपदिश मह्यमपि' इति पृच्छति । सर्वज्ञा अपि पाञ्चाली नाथं गवेष्यागतान् गच्छथ, पृच्छथ सुभद्रामित्यभिधाय प्रहिणोति । कोऽयं मुधापवादः । धर्मसंकटेऽत्र किं करोमि ।

(क्रमशः ।)

ठ्ठाइ मह एव्वं गत्ताइ संवुत्ताइम् । ता इदो पदादो पदं विचरेदुं ण शक्णोमि एदारिसस्स मे इमादो दिवादो वारिणिहिमज्झगददिवन्तरगमणं अरुन्तुदपासवेदणासिङ्किलीदसिरासन्धिबन्धस्स उत्तमग्गस्सविदिअ सङ्कदो गण्डपाहाणपादो । का गई । कहं दाव एण्हिं इमादो पयाणादो अत्ताणं मोअइस्सम् । होदु एव्वं दाव प्रदेवतह एव्वझत्ति करिअदु । (चिन्तामभिनयन्) हद्धि । हद्धि । सहे एत्ताहेमहणं एह्मुणत्तणं सिलाहणिज्जं वि सच्चं अवरज्झूइ ।

**राजा**— सखे किमिदमकाण्ड एव त्वं ब्राह्मणत्वं बालवदुपालभसे । न तावत्कमपि तवैतावद्दुःखिताहेतुमवलोकयामि । अथवा— पुनरिदानीमहं दानीयाय भवते हृदयङ्गमहय्यङ्गवीनपूरपक्कानि विविधगोधूमापूपवटकमोदकप्रभृतीनि भक्ष्याणि प्रदापयितुं किं विस्मृतवानस्मि ।

**विदूषकः**— अणुकावेरितीरं पए । पए अणुदिणपुण्णच्छेत्तोववासस्स सेणट्ठिचम्मावसेसिदसारिरस्स मे एव्वं तुए विदिण्णेण विविहभरखवग्गेण उपबह्मिदो देहो । किन्दु एदस्स विप्पस्स तुए विप्पयोओ भवींसदित्ति अत्तणो बह्मणत्तणे उवालहे ।

**राजा**— कथमिव ।

**विदूषकः**— ब्रह्मणाणं समुद्दजाणं खु सव्वत्तणा णिसिद्धम् । ता वयस्स णअरमहं गमिस्सम् । गमिउणूच तुह देवीए जादरूवाएवव्वज्जोग्गं सरअणसमुग्ग अत्तत्तारिसं णासाहरणमुत्तामणिं उवहारिस्सम् ।

R. 4

**राजा**— ( स्वगतम् ) कथमियमापतिता पुनरुभयतः पाशा रज्जुः। तथा हि—

अभ्येति चेन्नगरमेनमदात्प्रियायै
दद्यान्मया सपदि तत्र समागतश्चेत् ।
ईक्षेत तां सुदृशमित्यधुना विकल्पो
द्वेधाधिचेतसमुदञ्चति दुर्निवारः ॥ ६२ ॥

( विमृश्य ) नगरं प्रति प्रेषणतो वरमस्य द्वीपान्तराकर्षणम्। तत्र कथञ्चिदस्य देवीपक्षपातिनो दृष्टिपातादुपायेन तां परिहरिष्यामि। तत्कथमिदानीमस्य नगरप्रयाणनिवारणोपायः। भवत्वेवं तावत् (प्रकाशं) तदैव दिव्या मणिरियं मम देव्या एव भवितुमर्हति (इति मणिं प्रदाय) वयस्य गच्छ गच्छ।

**विदूषकः**— (गन्तुमिच्छति)

**राजा**— (पार्श्ववर्तिनं सेनापतिं प्रति) द्विषन्तप सेनापते तत्र सिंहलद्वीपवासिनो देवस्य नानाविधसूपापूपाज्यशर्कराचित्रान्नपरमान्नमुख्यान्यतिहृद्यानि निवेद्यानि पूर्वमेव गतवता भवता संपाद्यानि। इदं च बलमखिलं सकलभूपालकुलसमाकुलमत्रैव स्कन्धवारे स्थापयन्नेवाहं तत्र परिमितपरिवारः सवेगमागमिष्यामि। तदर्णवतारणकुशलं कर्णिधारकुलं सत्वरमतिदूरगत्वारिमभिनवान्तरिमप्यन्तरीपान्तरमद्यैव संविधेहि।

**द्विषन्तपः**— यदाज्ञापयति देवः ( इति निष्क्रान्तः

**विदूषकः**— ( स्वगतम् ) आसादिदं एदं णासाहरणमुत्ताहलं शंताए णउरगदाए देवीए अव्वायासेन उपदीकदुअ वि सव्वं एत्तिअं

एव्व संपदं संपादणिज्जं। हिहि इमं समहिवशारिणो बयस्सस्स सअसेअणायासेण एत्थ एव्व तं सव्वं अवगतिअस्स मेदिट्ठि-आमिट्ठउवट्ठिणं जह णिहाणलाहाय अज्जणमूलिअं जणस्स खणं त्तत्सतत्थ एव्वत्थलंमि किद सण्णिहाणं णिहाणम्। ता संवत्तणा इमिणा सपरिवारेण णरेसरेण गलहण्डे आए इदो असक्कारेण णिक्कासिदो विणाहं णअरजत्ता कहांसिमिणेवि कहइस्सम् । (प्रकाशम्) भवन्तं एव्व अहं दाणिं णरेसर अणुसरेमि ।

**राजा**— (सोपहासम्) सर्वात्मना समुद्रयानं ब्राह्मणानां निषिद्ध-मिति कथमुदीरितमधुनैवावधीरितं भवता ।

**विदूषकः**— परमत्थदो मए तह णहि कहिदम्। किन्तु मइ पियवयस्सत्तणं तुह कीरिसं रिविमरिढेदु एव्व। असंमदोवि अहं इढो दिवन्तरेवि भवन्तं एव्व अणुसरम्मि। मज्झण्णमेत्तसमुद्दजाणं खु बह्मणाणं ण दोसावहम्। इदं च णासाहरणं कोसघरे करेम्मि ।

(इति तथा करोति)

[नेपथ्ये]

णावामंखुणवाखुवारिणिहिणो एदस्स सन्तारिणी
  सण्णद्धापअरन्ति सन्तदमिमे वेलाणुहूलाणिला ।
एसो किञ्च णियामओ णिमिदो एदारि सिन्ताकदा
  आरोहेण किदंधइस्सिदि अयं भूमण्डलाहण्डलो ॥

**राजा**— (श्रुत्वा ससंभ्रमम्)

सारङ्ग तत्र सरितां सुहृदः सकाशा-
  त्कोलाहलः श्रवसि कोऽपि ममावतीर्णः ।

प्रायेण नाविकपरिश्रमसंभवोऽयं
तत्साधयावतरणेरधिरोहणाय ॥ ६४ ॥

( इति विदूषकहस्तमवलम्ब्य नाट्येन परिक्रामन् पुरस्तादवलोक्य ]

अर्णवतीराभ्यर्णे निहितास्मिन् कर्णधारनिवहेन ।
तरिरियमधुना परिमितपरिवारमपां त्वया सह वहेत ॥

[इति तथैव नावारोहणं नाटयति । विदूषकं प्रति साश्चर्यम् ।]

विस्तारिते सति पदे गुणवृक्षभाजी
कोऽप्यागतोऽनुगुणवायुकुमारकोऽयम् ।
अम्भोनिधेः सपदि पात्रमये विचित्रं
नावं सखे स्वयमिमां नयते सखेलम् ॥ ६५ ॥

**नियामकः—**

दुव्वङ्कुराविअ महिरुहा अङ्कदो दूरदूरे
दीसन्तेजे तुह अहमिदे दिव्वदेसे वसन्ता ।
एदे भूमीतलवलरिवो एह माणाखणादो
णावात्रेआदिसयमहुणा णरवरं वा हरन्ते ॥ ६६ ॥

**राजा—** अहो वेगवैचित्र्यम् । तथाहि—

आगच्छतीव जलधेर्द्रुतमस्य पार-
मक्ष्णोरवारमचिरादपसर्पतीव ।
अर्को विदक्षिणादिशामनुधावतीव
धावन्त्यसावपि तरीरतिनिश्चितेव ॥ ६७ ॥

**विदूषकः—** (हस्तद्वयेन मस्तकमवलंब्य अधोमुखो भूत्वा सनिर्वेदं, हद्धि हद्धि इमस्स दासीए उत्तस्स समुद्दस्स महंतंमि जलमम्भमे

परिभ्भमयि तरियम् । यत्थ च अतिमेत्तघुण्णमाणं महाउत्तमङ्गं पंमाणस्सहेएत्ताहे वि किन्ति उपरखेसो ।

**राजा**— (सोपहासम्) एवं नावारोहणानभ्यास एवाधुना तुभ्यमपराध्यति । वैधेय । मया किमत्र प्रतिविधेयम् । (पुरस्तादवलोक्य सखे मा भैषीः । यदभिमतमिदमेव पारावारवारं विलासादस्माभि रासादितम् । नियामक । तदिमां नियमयाशु समया तीरम् ।

**नियामकः**— जं देव्वो आणवेदि (इति सपरिवारस्तथा करोति)

**राजा**— (विदूषकहस्तमवलंब्य सह परिवारेण नावावरोहणं नाटयति । परितो विलोक्य । साश्चर्यम) इह केचन सखे जलधितीरान्तिके जयन्ति स्वच्छन्दकन्दलितमुकुन्दकुन्दमुचुकुन्दमुचुलिन्दपिचुमन्दनागपुन्नागनागकेसरकेसरहिन्तालतालतमालकृतमालसालरसालकपित्थाश्वत्थबिल्वचिरिबिल्वमधुद्रुमाक्षरुद्राक्षभद्राक्षादिनानानोकहनिवहप्रच्छायस्वेच्छाविहरणनिर्वृतकेवलविविधमृगलकुन्ताः वनान्ताः । एते हि—

वेतण्डव्रजगण्डपिण्डकषणव्यत्यस्तगण्डोपल-
त्रस्यग्रस्तनिजस्तनन्धयचयव्याघ्राकुलव्याकुलाः ।
स्वैरस्वल्पमनल्पसर्पविसरन्निश्वासवैश्वानर-
प्रौढोष्मासहकासरप्रणिभवत्कासारवासादराः ॥ ६९ ॥

किञ्च—

तरक्षुभिरतिक्षुधाक्षुभितमानसैरावृताः
क्वचित्क्वचनहास्तिकैरपि मृणालिनीनास्तिकैः ।
कुहापि च महागुहान्तरविहारिवाहद्विष-
द्विषाणकषणक्षतक्षतजसक्तसत्वैरपि ॥ ७० ॥

अपि च—

त्रासेण द्युतिनिकरात्सरोजबन्धो-
रेतेषु प्रतिदिनमेयुषो निवासम्
चापल्याद्दयिततमस्तनन्धयानां
भल्लूका विहृतिजुषां भजन्ति रीतिम् ॥ ७१ ॥

संप्रति हि—

अभीक्ष्णं पश्यन्तो वलितमुखमस्माननृसृता-
नपाङ्गैरुन्नम्रश्रवणमधिकत्रासतरलैः ।
स्थले पर्णास्तीर्णे स्वखुरहतिजातादपि रवात्
कुरङ्गाः सारङ्गाः कुहचिदिह धावन्ति मिलिताः ॥

किञ्च—

दूरं वक्रायतमुपचितं दुर्वहं दन्तभारं
वोढा दानाकुलमलिकुलं मारयन् कर्णतालैः ।
दैन्यादस्मान् सरसमपि ता धावमानाः करेणू-
र्दर्शंदर्शं चलति शनकैर्दारुणो यूथनाथः ॥ ७३ ॥

अपि च—

क्रूरैर्व्याघ्रवृकादिभिः सरभसं कुत्रापि सौम्याः समं
सत्वास्ते शशरोहितप्रभृतयः सन्त्यज्य वैरं मिथः ।
संधीभूय परस्परप्लवनतः साशङ्कमस्मान् मुहुः
पश्यन्तो गतदिग्विभागमतयः प्रान्तेषु धावन्त्यमी ॥

( अनुचरान् सर्वानपि विलोक्य ) एतानि पुनरप्रहतानि कण्ट-
कबहुलानि स्थलानि । तदिह सर्वेऽपि सावधानमेव सरणिमनु

सरत । ( सर्वेऽपि तथैव पुरःसरजनचरणविन्यासप्रणिहितपदः कतिचित्पदानि परिक्रामन्ति )

**विदूषकः**— ( समन्तादवलोक्य साश्चर्यानन्दम् ) सखे एत्तासो अपुव्वस्स अदिहिणो भवन्तस्सरण्णोसमुइअण्णाणविहपरिणदफलेहिं पदेजहेच्छं आदिछं कुणन्ति कन्तार ऐरन्ता । ता भरखामोवयं सोरखाय इमाणि फलाइ पएलिमाणि ।

**राजा**— आघूनसन्ततं तव सारङ्गप्रत्यवसानचिन्तासन्तानितमन्तःकरणम् । सोऽयं नभोमध्यभागमासीदति भगवान् सरसीरुहिणीपरिणः । तदारादेव त्वामैरावत्यामाप्लुत्याशु तत्तीरवासिनो रमाविलासिनो देवस्य निवेद्य शिष्टानि चिरमभीष्टानि यावदहं प्रत्यवसाययामि ।

**विदूषकः**— ( सावज्ञम् ) सुणीयदि कोवि आहाणयो । सिद्धमण्णि परिच्चजिअ भिक्खं अटइ दुंमदित्ति ( सर्वे हसन्ति )

**राजा**— यथाभिमतं विहर (इति हस्तं विसृजति)

**विदूषकः** — (पार्श्वतोऽवलोक्य) हीही महसच्चं एदं खाइरमूले कइत्थं हलला होन्ति ।

**राजा**— (स्वगतम्) प्रायेण गजभुक्तनिर्मुक्तमिदं कपित्थम् । अयमाघूनः किं करोति (प्रकाशम्) प्रतिपालयामि ।

(इति तथाकरोति)

**विदूषकः**— (ससंभ्रममुपसृत्य तदादाय दशनेन दशति) दष्टमवलोक्य कहं भायासमेत्ताघमेपियेदइं एइं ।

**राजा**— (विहस्य) सखे साधुभवता सिद्धमन्नं भक्षितम् ।

(सर्वेऽपि उच्चैर्हसन्ति)

**विदूषकः—** (लज्जावनम्रितमुखो राजानमुपसृत्य) सहे तुह आणावयणाणा कण्णाणाढो एदारिसं फलं अणुहुन्द इहदिवेदिट्ठिमेत्ताणुरंजआणिसंवाणि मायाफळाणि ता इहीप्पहुदि तुह एव्व अणुसरेमि ।

**राजा—** (सोपहासम् विदूषकहस्तमवलंब्य कतिचित्पदानि गत्वा । अन्यतोऽवलोक्य सहस्तनिर्देशं) इतो नातिदूरतएव --

वन्यैः समं परिचयेन वसन्ति यस्मा-
द्ग्राम्याः कुहापि विहगैः कलविङ्कमुख्याः ।
प्रायेण तानि पुनरप्रहतेतराणि
तन्वन्ति हन्त विपिनानि ततो दिदृक्षाम् ॥ ७५ ॥

**विदूषकः--** तह महवि विदिदरखासमंमजंमइ । एदु एदु भवम् ।

**राजा--** (नाट्येन सपरिवारः परिक्रामन् समन्तादवलोक्य)

एतेषु—

गर्तास्ते वन्यहस्तिग्रहणपरिजनैः क्वाप्यगाधं निखाताः
सारङ्गाणां ग्रहाय क्वचन मृगयुविस्तारिता वागुरास्ताः ।
सत्वाश्चोपद्रुतास्ते मनुजचरणविन्यासवत्यामवन्यां
त्रासात्कुत्रापि वासान्न विदधाति परं तामुद्वीक्ष्य द्रवन्ति ॥

(अनुसृतान् सर्वानपि विलोक्य)

आलोक्यते किमपि गोपुरमग्रदेशे
प्रायो भवेत्तदिदमेव परस्य पुंसः ।

**किन्नर्यः—**

'कविससिदासिदणाआ कन्डइदङ्गा अ कविळभूदारा ।
ओसरध कुडिळकीडा देवीपज्जंकपस्सदो मसआ ॥२३॥'

कपिशसितासितनागाः कण्टकिताङ्गाश्च कपिलभूधाराः ।
अपसरत कुटिलकीटाः देवीपर्यङ्कपार्श्वतो मशकाः ॥

( इति गायन्ति )

( निद्रालसा निम्बवती निमीलयति लोचने )

**किन्नर्यः—** गम्यतामस्माभिः । काचिदनुपालयन्ती देवीं दूरे तिष्ठतु ।

( निष्क्रान्ताः । )

( निम्बवती गाढ निद्राति )

( प्रविश्य प्रदोषः प्रसूनं निष्पिष्य रसेन निम्बवतीपक्ष्माणि सिञ्चन् । )

यस्ते निद्रावसाने प्रथममवतरत्यक्षिमार्गे शरीरी
तं रागाविष्टचित्ता ह्यनुनयवचनैस्त्वं प्रसाद्यानुयाहि ।
मार्जारव्याघ्रकोलेष्वजखरशशकेष्वेक एवाल्पजन्तुः
स्वप्नान्ते निम्बवत्यास्तव नयनपथे प्रादुरास्तां पुरस्तात् ॥

(इति निष्क्रान्तः)

(ततः प्रविशति वसन्तः कौमुदी च ।)

**वसन्तः—** सखि वसन्तमयजीविते, कान्तारभ्रमणेनाध्वश्रान्तेव दृश्यसे । तत्वतो विस्मृतवानस्म्यध्वानमावयोर्गाढान्धतमसे । यदि ते रोचतेऽत्रैव विश्रम्य मार्गश्रममपनयावः ।

**कौमुदी**— भवतु विदूर एव शेष्व । अहमप्युपधायैतत् किञ्चिदुन्नतं सरित्तटमत्रैव शये ।

V. 5

**वसन्तः**-- आवामेकमेवोपधाय शेवहे । भिन्नशरीरयोरप्यावयोर्मनस्त्वेकमेव हि ।

**कौमुदी**— यद्यहमनुकम्पनीया ततः कुरुष्व दूरत एव शय्याम् ।

**वसन्तः**-- अनुरागेणेदं प्रार्थ्यते । करोमि न कदाऽपि मिथ्यावादम् । शयनेऽप्येकस्मिन् स्थले नोल्लङ्घयिष्याम्यवधिम् ।

**कौमुदी**-- नाथ, न कुर्यां मनस्यलीकवादी त्वमिति । क्वानुरागः क्व च कन्यकाजनपरिपालनीया लोकमर्यादा । तद्दूरत एव कार्यतां शय्या । यावदायुः क्षणमपि न विस्मर्तव्योऽयं दासीजनः ।

**वसन्तः**— अस्तु को दोषः । तथैव कुर्याम् । (कतिचित्पदानि गत्वा ।) अहमत्रैव । अयि मुग्धे, न विस्मरणीय आवयोः प्रणयप्रबन्धो जन्मान्तरेऽपि ।

**कौमुदी**-- साधु साधु ।

(उभौ निद्रामनुभवतः ।)

(ततः प्रविशति प्रमोहः ।)

**प्रमोहः**—

भ्रान्त्वापि सर्वविपिनं नाहं पश्यामि देवनिर्दिष्टम् ।
क्वास्तेऽवन्तीतरुणः कुसुमरसं लोचनेऽस्य सिञ्चेयम् ॥
सूचिभेद्यं तमो भाति निर्निनादमिदं वनम् ।
( कौमुदीवसन्तौ पश्यन् । )
कावेतौ सुकुमाराङ्गौ निद्रातः किञ्चिदन्तरे ॥ २६ ॥
स एवायं युवा नूनं सैवैषा मत्तकाशिनी ।
धिक्कृत्यैनां हि निद्राति प्रदोषेणोक्तमेव तत् ॥ २७ ॥

**दीनेयमनुरागेण भूतले धूलिधूसरे ।**
**अहो विधिवशाद्बाला ह्यनुशेतेऽतिरागिणी ॥ २८ ॥**

**विद्रावयामि नैर्घृण्यमेतस्यास्यां चिरोद्गतम् ।**
**प्रसूनरससेकेन निद्रामीलितचक्षुषि ॥ २९ ॥**

(तथा कृत्वा ।) निद्राविरामे तरुणीमेनामेव साक्षात्कृत्यास्यामनुरक्तो भव । अहमपि प्रदोषं विज्ञापयामि ।

(इति निष्क्रान्तः ।

(ततः प्रविशति मकरन्दस्तमनुधावन्ती सौदामिनी च ।)

**सौदामिनी**— तिष्ठ तिष्ठ कान्त मकरन्द, हंस्यपि मां मन्दभागिनीम् ।

**मकरन्दः**— (सक्रोधम् ।) अयि मूढे साहसिके, गच्छ गच्छ सर्वथा माऽनुसर माम् ।

**सौदामिनी**— मा मा मुञ्च नाथ, मामनाथामस्मिन् गाढान्धतमसे।

**मकरन्दः**— तिष्ठात्रैव । नियतिगतिर्हि तादृशी । अहमेक एवापसरामि ।

(इति निष्क्रान्तः ।)

**सौदामिनी**— हन्त दारुणमिदं दैवदुर्विलसितम् ।

**चरणौ रुजतस्सद्यः सुदूरभ्रमणेन मे ।**
**निश्श्वासश्शश्वदायाति किं कर्तव्यमितः परम् ॥ ३० ॥**

नेतः परं पदमपि चलितुं शक्ष्यामि । सर्वथा भाग्यवती कौमुद्येव । यतः युवमनोहारी तत्कटाक्षः । केन वा कारणेन शोभते तदपाङ्गः । न ह्यनवरताश्रुधारया । तथा चेन्मदक्षियुगलमपि तादृशं भवेत् ।

अहो भाग्यमहो भाग्यं कौमुद्यावर्धतेऽधुना ।
असंशयमहं रूपहीना भीता मृगा अपि ॥ ३१ ॥
पिशाचीमिव मां दृष्ट्वा धावन्ति परितो यतः ।
न चित्रं मकरन्दोऽयं मुक्त्वा मामन्यतो गतः ॥ ३२ ॥

कः पुनरयमादर्शोऽप्रशस्तो यो मां दुर्भगां कौमुद्य आत्मानं गणयितुं प्रैरयत् । (इति परिक्रामन्ती । भूमौ चक्षुर्निक्षिप्य ।) कोऽयम् ? वसन्त !-- भूतले-- मृतो वा सजीवो वा । न ह्यसृक्क्षतादयो दृश्यन्ते । (वसन्तं स्पृष्ट्वा ।) वसन्त, यदि सचेतनोऽस्युद्धाटय पक्ष्मणी ।

**वसन्तः**-- (विबुध्य) अयि रमणीये सौदामिनि, त्वत्कृतेऽग्निमप्यवतरेयम् । महान् खलु विधेस्त्वद्रूपनिर्माणे यत्नः । दृष्टायां त्वयि ते हृदयमादर्शवत्प्रतिभाति । अहो ते त्रिजगज्जैत्रं लावण्यम् । कुत्रास्ते मकरन्दः ? नयाम्यद्यैव तं कृपाणधारया स्मर्तव्यां गतिम् ।

**सौदामिनी**— वसन्त, मा तावत् । न तथा भाषस्व ते कौमुदीमयं कामयत इति । कौमुदी दृढं त्वय्येवानुरक्ता । तथा सत्यार्तिकारणं न पश्यामि ।

**वसन्तः**-- (सानुरागम्) नेतः परं स्मरिष्यामि कौमुदीम् । एतावन्तं कालं कौमुदीमनुरक्त इत्यत्र भृशं दूये । अद्य युवतिललामभूता त्वमेव विकिरस्यक्ष्णोरानन्दम् । अनभिज्ञतया तावन्मया कौमुद्यनुसृता । अद्यैव किल विवेचना जाता । त्वदृतेऽन्यां न द्रक्ष्यामि ।

( इत्यालिङ्गितुमुत्तिष्ठति । )

**सौदामिनी**-- (सलज्जम्) कोऽयमद्यतनस्ते दुर्विनयप्ररोहः! किं मामुपहससि यदि त्वयि बद्धप्रणया त्रिलोकसुन्दरी कौमुदी । अहो भवितव्यता । यत्सर्वेषामप्युपहास्यतां नीता । किमेवं विडम्बनाया वा भाजनमहं सृष्टा । यन्मकरन्दो मां न्यक्कृत्यापसरतीत्यत्र न कोऽपि मयोपालब्धव्यः । भवन्त्वन्विष्यामि मकरन्दम् ।

(इति सजवं निष्क्रान्ता ।)

**वसन्तः**-- (दीर्घमुष्णं निश्वस्य) कथं गता सौदामिनी । कौमुदीमत्र स्वपन्तीं नोपलब्धवत्येषा । (विचिन्त्य) पुनरपि सौदामिनीं सौन्दर्यनिकेतनमनुनीय तामेव परिणेष्ये । क्व रमणीया सौदामिनी । क्व चेयं दुर्भगा कौमुदी । (कौमुदीं प्रति) इयानेवावयोः प्रणयः । सौदामिन्यर्थे जीवितमपि त्यजेम् । तामननुनीय किं मया जीव्यते ।

( इति सौदामिन्याक्षिप्तचित्तस्तामिवानुध्यायन्निष्क्रान्तो वसन्तः ।)

**कौमुदी**— (किञ्चिदुत्स्वप्नायमाना) हा वसन्त, कौमुदीप्रणयैकनिधे, करुणामालम्ब्य परित्रायस्व परित्रायस्व मामेतस्माद्दुष्टसर्पात् । अयमद्य वक्षस्यारुह्य दंष्टुमिच्छति । (इति सभयं विलप्य पक्ष्माण्युद्घाट्य ।) किमयं स्वप्नः । किं परिहासो वा । (विचिन्त्य) नाथ, वसन्त, (इत्याक्रन्दन्ती कम्पं नाटयित्वा) वल्लभः कुत्र गतः । आर्य, क्व गतस्ते मय्यसाधारणः प्रणयः । कुत्र वा गतोऽसि विहाय मां त्वदेकशरणाम् । नायं कालः परिहासस्य । ( भयमभिनीय )

कानन भीषणं शर्वगलकाला च शर्वरी ।
दीनाहं कन्यका नाथ दयार्द्रं कुरु मानसम् ॥ ३३ ॥

(इतस्ततोऽन्विष्य) सत्यमेव गतो वसन्तः । यदि नोपलभे दयितं शरणमस्तु कृपणाया मे देवः कृशानुरेव । भवतु भाग्यमत्र परीक्षिष्ये ।

(इति निष्क्रान्ताः सर्वे ।)

इति वासन्तिकस्वप्ने द्वितीयोऽङ्कः ॥



# तृतीयोऽङ्कः ॥

---

(ततः प्रविशति धान्यकोऽधरकः, धनकः, वसुपालितः, राजसः, साधकश्च।)

**अधरकः**— कहं अह्मवग्गिआ शव्वे वि एत्थ जेव्व।

कथमस्मद्वर्ग्याः सर्वेऽप्यत्रैव।

**धान्यकः**— शम्म शम्म। एशे वेअ प्पएशे अम्हाण पुढमपओआह उइदेत्ति पडिहाइ। इमाओ शामाओ सरित्तडभुओ होदु रङ्गट्ठली। णिउञ्जे एशे अत्थु जवणिअन्तले। अवणिवाह शण्णिहिम्मि विअ एत्थ वि णडिश्शम्ह।

सम्यक्सम्यक्। एष एव प्रदेशोऽस्माकं प्रथमप्रयोगस्योचित इति प्रतिभाति। इमाः श्यामाः सरित्तटभुवो भवन्तु रङ्गस्थली। निकुञ्जोऽयमस्तु यवनिकान्तरम्। अवनिपस्य सन्निधाविवात्रापि नटिष्यामः।

**अधरकः**— अले ले धण्णआ।

भो धान्यक।

**धान्यकः**— वअशु वत्तव्वं अहलअ, सन्ददालावीण,।

वद वक्तव्यमधरक, सन्ततालापिन्।

**अधरकः**— इमश्शिं भाणुमईअम्हइन्दणाडए कइच्चिअ अप्पयशत्थविशआ दीशन्दि। पुढमे दाव अम्हइन्देण अप्पाणं हन्दुं अशी आअलिशिदव्वे। तं पुलोवन्तीओ णालीओ भएण लोदमाणाओ ओशलेज्ज।

अस्मिन्भानुमत्यश्मकेन्द्रनाटके कतिचनाप्रशस्तविषया दृश्यन्ते । प्रथमस्तावदश्मकेन्द्रेणात्मानं हन्तुमसिराकृष्टव्य: । तत्पश्यन्त्यो नार्यो भयेन रुदत्योऽपसरेयु: ।

**राजस:**— शव्वह भए उप्पज्जेज्ज ।

सर्वधा भयमुत्पद्येत ।

**साधक:**-- ता वहं वच्चइत्तूण णडिश्शम्ह

तद्वधं वर्जयित्वा नटिष्याम: ।

**अधरक:**— ण किं पि वज्जदव्वं अम्भेही । अत्थि एत्थ के वि उवाए । कं पि पत्थावणं विळिह । अम्हाण अशीही ण हिंशा जाएज्ज । अम्हइन्दणेप्पच्छधाळी हके तत्तुवदो तन्दुवाए अहळए वेअ त्ति विळाशिणीभीवाळणाह कडे फुडे अहिहिज्जउ तत्थ उउग्घाअम्मि

न किञ्चिदपि वर्जयितव्यमस्माभि: । अस्त्यत्र कोऽप्युपाय: काञ्चित् प्रस्तावनां विलिख । अस्माकमसिभिर्न हिंसा जायते । अश्मकेन्द्रनैपथ्यधार्यहं तत्वतस्तन्तुवायोऽधरक एवेति विलासिनीभीतिनिवारणाय स्फुटमभिधीयतां तस्मिन्नुपोद्घाते ।

**धान्यक:**— शम्म शाहु उत्ते ।

सम्यगुक्तम् ।

**राजस:**-- ण किणो भाइज्जा अवळाओ मइन्ददंशणे ।

न किं बिभीयुरबला मृगेन्द्रदर्शने ?

**साधक:**-- शे वि जणणे भीईठ्ठाणे ।

## [illegible] ॥

---

श्रीमन्तः श्रीमत्काञ्चीकामकोटिपीठमलङ्कुर्वन्तः जगद्गुरु श्रीशङ्कराचार्याः सर्वेषामप्यास्तिकवर्याणां प्राचीनाचारादिषूत्कर्षबुद्धिमावहतामुपकाराय 'आर्यधर्मः' इत्यन्वर्थनाम्नीं कांचन मासिकीं पत्रिकां अस्मिन्वत्सरे वैशाखशुद्धपञ्चम्या आरभ्य प्रकाशयन्ति इतीदं नितरां प्रमोदस्थानमस्माकम्। एषा च पत्रिका द्राविडभाषया प्राचीनार्यधर्ममर्माणि सरसैर्मधुरैश्चोपन्यासैः सुविशदमुपदिशन्ती समानन्दयति सहृदयान्। अभिनन्दनीयेन समुज्ज्वलेन वेषेण श्रीवाणीविलासालयात्प्रतिमासं बहिरवतार्यमाणा पत्रिकेयं सहृदयया सखीत्वेन सभावनामर्हति। अन्येऽपि मठाधिपतयः एवमेव प्राचीनार्यमततत्त्वं सामयाचारिकाणां धर्माणां उत्कर्षापादकान् विषयांश्च सर्वानप्यास्तिकानवबोधयितुमुद्योगमनुतिष्ठेयुरिति दृढं विश्वसिमः ॥

---

READY FOR SALE.

# Dharmakutam

## PART I.

THIS is a rare work hitherto unpublished. The author is one Tryambakaraya Makhi a minister at the Court of King Ekkoji of Tanjore. The manuscript of the book was found only in the Tanjore Palace Library. The work consists of six dissertations in Sanskrit on the six kandas of Sri Valmiki Ramayana. The object of these lectures is to convince the public that the Ramayana is not a mere chronicle of the life of Sri Rama but that it is chiefly intended to inculcate a right conception of one's Dharma. Each incident therein depicted, each portrayal of character is chiefly intended to expound some one or other of the several aspects of Dharma. The lectures are all in very simple flowing style easily understandable by all, full of excerpts from the Dharma sastras in justification of the intrepretations given of the Ramayana. The sample pages would give a clear idea that this kind of intrepreting the Ramayana, not as a mere epic detailing the story of Rama but as an allegory teaching morals and duty, was a desideratum up to now. The author who seems to have lived in the seventeenth century has performed his task in such a marvellously lucid manner that when we read the manuscript we became very eager to print and publish it at once. Since we found the lectures worth earnest study we resolved to print them in a most handy form and to publish them in parts so that the public may not have to wait till they are completely printed. The size of the book is Royal 16mo. Each part consists of two hundred pages and is priced at **Re. 1.** only.

THE MANAGER,
Bookselling Department,
SRI VANI VILAS PRESS,
*SRIRANGAM.*

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,

Vidyanidhi.

VOL. XX.

No. 6.




PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.



Registered No. M. 103.

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).
6. Annual subscription is Rs. 3 only, including postage.



**दुष्यन्तः—**

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तम् ।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥

**—शाकुन्तलम्**

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिराहता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ]   राक्षसवर्षं भाद्रपदमासः ।   [ संचि. ६.

## सुभाषितानि ।

वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा
विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम् ।
शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो!
मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ १ ॥

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसञ्ज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ २ ॥

शान्तेर्मातुर्विवेकात्पितुरपि कृपण मङ्क्षु कृत्वा पृथङ्मा-
माशायोषा स्वतन्त्रा व्रजति परगृहान्सर्वदा वीतलज्जा ।
संधत्ते मत्कृशत्वं मम यमनियमौ भ्रातरौ भर्त्सयन्ती
पुष्टा चैवात्मबन्धूंस्तदपि पुनरहो! हन्त वन्ध्यां श्रयामः ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

( पूर्वतोऽनुवृत्तम् । )

---

पद्यमिदमनुध्यायतामस्माकम्—

'शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संरक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ।
निर्ह्रादी ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या-
त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥'

इति मेघे महाकविनानेनाविष्कृताः आशयविशेषाः स्मरणपदवीमधिरोहन्ति ॥

आदावात्मानं मण्डयन्तीनामप्सरसां स्थितिमनुवर्ण्य, ततस्तासामनङ्गलेखाभिर्वल्लभानामाह्वानं संभाव्य, तदनुरोधेनागतानां किन्नरप्रमुखानां सह प्रियाभिः संगातकानुसेवनं निरूप्य, तैः सरलद्रुमेभ्यः प्रसृतेन क्षीरेण सुरभितानां सानूनामाश्रयणं हृदयेनालिखतो महाकवेरस्य मुखात् 'कपोलकण्डूः' इत्यादि सरसं निःसरन्ती सरस्वती समानन्दयति सहृदयान् ॥

कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति ॥ ९ ॥

सत्स्वपि बहुषु द्रुमेषु सरलेष्वेव गजानां बन्धनम् 'सर-

लासक्तमातङ्गग्रैवेयस्फुरितत्विषः' इत्यादिना रघुवंशे निरूपयन्नसौ कविरिह करीणां तेष्वेव सरलेषु कपोलविघट्टनं वर्णयन् आत्मनः कृतिषु सर्वतोमुखमाशयानुगुण्यमवगमयति भावुकान् ॥

अथ 'आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः' इत्यात्मनः सूक्तिमनुस्मारयन्निव तादृशीर्दीपिकाः पुनः प्रकारान्तरेणानुवर्णयितुमारभते वनेचराणामिति—

**वनेचराणां वनितासखानां**
**दरीगृहोत्सङ्गनिषक्तभासः ।**
**भवन्ति यत्रौषधयो रजन्या-**
**मतैलपूराः सुरतप्रदीपाः ॥ १० ॥**

कविरसौ प्रथमं यश्चेत्यादिपद्ये आसन्नसन्ध्यं प्रदोषं ध्वनयन् संभावयंश्च विभावरीमस्मिन्पद्ये पुनरहर्मुखे दरीमुखेभ्यः किन्नरीणां बहिर्निष्क्रमणं सूचयितुमारभते उद्वेजयतीत्यादिना—

**उद्वेजयत्यङ्गुलिपार्ष्णिभागान्**
**मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वहश्रोणिपयोधरार्ता**
**भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥**

हिमालयोपान्तेषु किन्नरमिथुनानि इतस्ततः सञ्चारमातन्वन्ति, आवर्जयन्ति च प्रेक्षकाणां मनांसीति भट्टबाणो वर्णयति कादम्बर्याम् ॥

पद्येऽस्मिन्नाविष्कृता स्वभावोक्तिसरणिः गौरीगुरोः घनीभूतहिमप्रदेशेषु असकृत्सञ्चारमस्य महाकवेरनुमापयति विमर्शकान् ॥

'मार्गे शिलीभूतहिमे' इत्यनेन 'पदं तुषारेत्यादिपद्ये अस्माभिरुन्नीत आशय एव दृढीकृतो भवतीति विदांकुर्वन्तु विमर्शकाः

अथाहर्मुखापगमे दिवाकरस्योदयं हृदि भावयन्कविः 'उज्ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः' इति रघुवंशे प्रोक्तामात्मनः सूक्तिमनुस्मारयन् रजन्यपगमे गुहासु तमसो दृढामवस्थितिमनुवर्णयति दिवाकरादित्यादिना—

दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव ॥ १२ ॥

अत्रोत्तरार्धे अर्थान्तरन्यासरूपेण निर्दिष्टमाशयम् मेघसंदेशे 'न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः' इति निपुणमुपबृंहयन् महाकविः 'शरणागतरक्षणमेव महतां प्रकृतिः' इत्युपदिशति लोकस्य ॥

( क्रमशः । )

॥ श्रीः ॥

## ॥ तद्वदनाम्बुजम् ॥

( पूर्वतोऽनुवृत्तम् )

—*—

अस्मिन् वसुमतीमण्डले किमपि सुन्दरं अलौकिकं हृदयस्पृक् वस्तु विद्यत इति न मया ज्ञातमासीत् । तन्मध्ये

ज्ञापयेत्, तस्य मोहे मां निपातयेत्, तत्कृते मां वातुलतान्वितं कुर्यात् एतदुद्दिश्य प्रसभं विधातारं को रुरुधे । कदापि ममाज्ञातं यदासीत् तत्किमिति मे ज्ञानसरणिमानिनाय? साधु ज्ञापितम् । ज्ञापितमपि तन्मदन्तिके किमर्थं न निवासयांचकार? भोः देव, विश्राणितं पुनः भवतैव किमित्याहृतम्? तव मनस्याहरणेच्छैव आसीच्चेत् प्रथमं वितीर्णमपि किमिति दत्तापहारः कं प्रयोजनमुद्दिश्य कृतः? ॐ अपाकरिष्णुरपि त्वं किमर्थं न विस्मारयसि तत् यत्पुनः कदाप्यलभ्यम् तदुद्दिश्य क्रंदं क्रंदं समयोऽपनेतव्यो मया? अयमेव तावकमनोरथः? यद्गतं तद्विषयकं प्रेमापि प्रणष्टं भवेत् । सत्येवं मदीयं प्रेम किमिति न प्रणाशमधिगच्छति? यन्मदीयेक्षणसरणितः दूरतः अतिचक्राम तत् हृदयतोऽपि किमर्थं दूरे नापसरति? हंत बलाद्विस्मर्यमाणमपीदं नांशतोऽपि विस्मृतिपथमुपयाति । हा? अयमेव जगतो नियमः? अस्य नियमस्य कापि नियंमितताऽस्ति न वा? नायं नियमः, असौ तव स्वैरिणी वांच्छा । भो ब्रह्मन्, तव सौमनस्यं भवति चेत् सर्वं सरलं जायते । अवितथमेव ब्रवीमि त्वं मया न विचारणीयः; पर्याप्तमस्ति मदीयदुःखं मह्यम् । परं साहजिकः प्रश्नः । संसारे एतावद्दुःखं किमिति न्यस्तं? कुसुमेषु कीटकाः किमर्थं? अमृतकिरणे कलंकः किमिति? पुण्यमार्गः कठिनतरः किमिति? यादसांपतौ लवणता किमिति? सौंदर्यं किमिति नश्यति? ननु हृदये निराशा किमिति प्रविशति? आनंदस्य पश्चात् शोकः किमिति? प्रणये विरहः किमिति? आशायामविश्वासः किमित्युद्भवति? मनुष्यः स्वार्थपरः किमिति जायते? अन्यदीयदुःखविषये प्रत्येकं जनः औदासीन्यं किमि-

त्यालम्बते ? मनसि ये दुःखतरङ्गाः संभवन्ति तन्निवेदनकृते भाषायां किमिति तादृशाः शब्दाः न विद्यन्ते ? हृदयमध्ये यद्विकारान्दोलनं भवति तन्मुखात् किमिति न प्रकटनं कारयसि ? स्नेहे आशङ्का किमिति वसति ? यस्मै यद्रोचते तत्किमिति तेन न लभ्यते ? यो यस्योपरि प्रेमाणं करोति तत् तन्मनुष्यतः किमित्यपाकृतं भवति ? साधु, तत्प्रणष्टवेलायामेव तं मरणाधीनं किमिति न करिष्यसि ? एतज्जडं जगत् किमिति निर्मितम् ? एतन्मृत्तिकामये देहे सुखदुःखसमाकुलम्, स्नेहवात्सल्यपरायणम्, सौन्दर्यलोलुपं हृदयं किमित्युदपादयः ? अत एवाहं प्रवक्ष्यामि यद्यस्य विश्वस्य कोऽपि विधाता वर्तते चेत् स महान् निष्ठुरतर इति । जीवमात्रस्य शुभं भवेदिति तस्य काङ्क्षैव न विद्यते कस्यापि कल्याणस्य दिदृक्षा न वर्तते तस्य । परकीयदुःखं नावलोकयति सः । कस्यापि मुखस्योपरि न हि दृष्टिं निक्षेप्तुमभिलष्यति । तस्य पादौ शोकाश्रुभिः प्रक्षालितावपि सः दुःखितानां आर्तरवं नाकर्णयति । स महानिर्दयः तस्मादपि निर्घृणतरः कोन्यः पुमान् जगति वर्तते ? जगति प्रकाशमानं सर्वं हास्यं सर्वमानंदं सर्वं सुखं स्वकीयलीलया प्रणाश्यैव केवलं तस्य मनः समाधानं न विंदते । किंच आत्मना प्रणाशितस्य तादृशस्य स्मृतिं मानवहृदये शरीरपातावधि निदधाति । सर्वं प्रणष्टं वर्तते; तथापि दुःखमयदिवसेषु अतीतानां सुखानां स्मरणं कियदिव दारुणं दुःखमापादयति ? विवेचयत । तस्मादेवाहमुद्घुष्यामि हृदयविहीनो विधातेति । भगवन् भवानिच्छामयः । तव मनसि आकलिता चेत् सर्वसंसृतिः सुखमयी भवति । परं स विचारः भवदीयहृदंबुजं न हि स्पृशति

तस्मादेवाहमभिधास्यामि नास्ति ते हृदयमिति । संसारे सुखं न विद्यते? यदि स्यात् नाहं नास्तीति वच्मि । परं तदतितरामस्थिरमनित्यं क्षणभङ्गुरं च । अयं संसारः केवलं दुःखमयः? तथाऽभविष्यत् नैतावदसह्योऽभविष्यत् । परमस्मिन्नन्धे तमसि सुखं नाम कश्चिदालोकः क्षणं प्रसार्य दुःखासिकामपनोदयति । संसारोऽयमतीव विचित्रः यो हि क्षणं हास्यकिरणैः प्रकाशितः पुनरश्रुजलवृष्टिगुंफितो भवति सुचिरम् । तस्मादेव वक्तव्यं भवति हृदयावयवरहितो विधातेति । परं मदीयं मनः वातुलमद्य निष्ठाशून्यं भ्रमति । विस्मृतं विवक्षितम् । किमभिधातव्यमद्य? कथमात्मा संस्तम्भनीयः?

स्मृतमां तदेव चारु वदनांबुजम् । असाधरणात्मीयप्रभापुंजपिञ्जरितसकलदिगन्तरालं, निद्रितबालकस्य बिम्बाधारे सुखस्वप्नोत्थितमृदुमधुरमन्दहासस्य लीलोत्सव इव हृदयविलोभनं अर्धस्फुठितमल्लिकापुष्पमिव सुन्दरं दृश्यमानं तत्पवित्रतमं मुखपङ्कजं को वेद? कस्योज्वलभावेन रचितम्! तत्स्वर्गीयं वक्रम्, तद्वर्णनं चिकीर्षे । परं तु न पारयामि । तदेव आननराजीवं भोः समीक्षस्व— न हि न हि । सांप्रतं कुतो दृश्येत? क्षणं दृश्यमानं क्षणं दर्शनपथमुपेयिवत् तदाननप्रसूनं अस्मिन् हृदये— अस्मिन्नेव हृदये— वर्तते— तदेव पश्य— क्षणे दूरं प्रयाति— क्षणे समीपमुपगच्छति— अवलोकय-- आगतं— भो मुखांबुज स्वागतं ते! अंतिकमेवायातं— हे, निभालय— धृतं— न हि । विसृष्टं दूरतः ॥

हा! हा! पूर्वजन्मांतर्गतसुखस्वप्नमिव भासमानं तत्सुंदरं वक्त्रांभोजं को नाम निर्ममे! कैः साधनैः निर्मितं साधारणानि पृथिवीजलादिमानि न हि तन्निर्माणे कारणतां गतानि स्युः । कथं

निर्मितं ! संप्रति मम चित्तमध्ये कथमपि भवति मदीयमनसः कथामुपश्रोतुं मन्मानससदृक्षः श्रोता किमिति न लभ्यते ? ममाधिं कस्य पुरतः निवेदयामि, शांतचेतसा कः शृणुयात् मम दुःखालापम् । मदीयं दुःखं ज्ञातुं मानवः समर्थोऽस्ति न वा? हंत ! मदीय शोकमप्याकर्णयितुं न कोपि सन्नद्धो भवति

अयि दुरात्मन् विधातृबंधो पाप निर्घण, रुषा फालतलकलितलुलितभ्रूलतः सन्नकारणमेव किमिदमपि भयंकरं दुःखं मामकीननिटिलतटे प्राणैषीः ? इति कश्चन कांताविप्रयोगकलुषितांतःकरणः सकरुणं विलपति ॥

केशवभट्टः (गलगलि)

॥ श्रीः ॥

# ॥ चित्रकेतूपाख्यानम् ॥

( पूर्वतोऽनुवृत्तम् । )

———*———

राजाऽपि अमन्दानन्दभरितः सद्य एव स्नातः शुचिरलंकृतो मन्त्रिपुरोहितानानाय्य तस्य कुमारस्य जातकर्मादि संस्कारं यथाविधि कारयित्वा ब्राह्मणेभ्योऽनर्घाण्याभरणानि विविधानि वासांसि, गोदानभूदानादीनि च प्रभूताभिर्दक्षिणाभिः साकं यथेच्छं विततार । तेऽपि प्रहृष्टमनसो नृपतिमभिनन्द्य 'सुकुमारोऽयं कुमारो निरामयश्चिरं जीवतु' इत्याशिषः शतशो वाचयित्वा स्वस्वगृहं प्रति निववृतिरे ।

( क्रमशः । )

॥ श्रीः ॥

# ॥ नारदनैपुणी ॥

( पूर्वतोऽनुवृत्तम् । )

---

(सेवकः कश्चिदागच्छति ।)

सुभद्रा-- कःसः ?

सेवकः-- द्वारकाया आगतो दूतः ।

सुभद्रा-- आ! अपि त्वम ? को वृत्तान्तः ? अप्यनामयं कृष्णादीनाम् ?

सेवकः-- कुशलिनः सर्वेऽपि ।

सुभद्रा— किमर्थमत्राऽऽगतस्त्वम् ?

सेवकः— भगवान् कृष्णः प्राहिणोन्मामर्जुनानयनाय । अत्राऽऽगते मयि धर्मराजं पृच्छति, पृच्छ सुभद्रामित्यन्वजानात् । अतोऽहमागतः ।

सुभद्रा-- सम्यक्, स एक एवाऽत्रशिष्टोऽभूत् । सोऽपि किमेवमन्वयुङ्क्त ?-- अतीव सम्यक् । अत्राऽऽगतस्य तस्य दिवसाः पञ्चाऽतीताः । मृगयार्थं गतो नाऽद्याऽपि प्रत्यागत इति ब्रूहि, गच्छ ।

सेवकः— यथा निदेशः । (गच्छति)

सुभद्रा— इत्थं वर्तते मदीयो वृत्तान्तः! श्वेतवाहनश्चेत् न दृश्यते सुभद्रा प्रष्टव्येति विचारस्सर्वेषाम् । सुभद्राया गतिस्त्वी-

दृशी !— प्राणनाथ उक्तिविरुद्धमाचरत्यपि, मय्यस्त्येव खलु गौरवबुद्धिरन्येषाम् । तदेवाऽऽश्वासकरम् ! अस्तु, यदोदेति मनसि करुणा तदैव खल्वागच्छेत्, चिन्तया किम् ?

(द्वितीयस्सेवक आयाति)

**द्वितीयसेवकः**— देवि ! आगतः किमर्जुनराज इति गवेषणायाऽऽज्ञप्तोऽस्मि कुन्तीदेव्या ।

**सुभद्रा**— कः ? किं देवी कुन्ती ?— हहह ! न साऽऽगस्विनी—नाऽद्याऽप्यागत इति ब्रूहि, याहि ।

**द्वितीयसेवकः**— यथा निदेशः । (गच्छति)

**सुभद्रा**— किमिदं कष्टम् ! नाथो नाऽऽगत इति मयि दूयमानायां जाज्वल्यमानेऽग्नौ तैलाभिषेक इव तं गवेषयद्भिस्सवैरहं वाऽनुयोक्तव्या ?

(एकतस्तृतीयस्सेवक आगच्छति । तुरीयस्सेवकः पृष्ठतो विचिन्वन्नायाति)

**सुभद्रा**— अयमपरस्सेवक आगतः ! अर्जुनराजमन्वेषयन्वाऽऽगतस्त्वम् ?

**तृतीयसेवकः**— आं; देवि ! आज्ञापितोऽस्मि पाञ्चाल्या । अर्जुनवृत्तान्तः कीदृश इति सुभद्रां पृष्ट्वा ब्रूहि" इति ।

**सुभद्रा**— जगदीश !— नास्त्यत्रेति ब्रूहि । याहि ।

**तृतीयसेवकः**— यथा निदेशः । (गच्छति ।)

**सुभद्रा**— कष्टम् ! किमत्र क्रियते ? चेदत्र स्थीयते सदैतादृश एवोपद्रवः । लतागृहेऽस्मिन्नुपविशामि । तत्र न कोऽप्येवं मां हिंस्यात् ।

(लतागृहान्तर्यान्त्यां तस्यां तत्र गवेषयन्तं सेवकं पश्यति ।)

तुरीयसेवकः— देवि! नमस्करोमि ।

सुभद्रा— सेवक! किमर्जुनराजं गवेषयन्नागतस्त्वम्? ह्य एव किं नाज्ञप्तोऽसि, न खलु पृच्छ मामर्जुनविषयं वृत्तान्तमिति? किमर्थमद्याऽऽगतः?

तुरीयसेवकः— न खलु देवीं प्रष्टुमागतः ।

सुभद्रा— तर्हि किमर्थमागतोऽसि?

तुरीयसेवकः— स्वयं गवेषयितुकाम आगतः ।

सुभद्रा— गच्छ, न पुरतस्तिष्ठ । विना मदाज्ञां नाऽत्र प्रवेष्टव्यं त्वया ।

तुरीयसेवकः— यथा निदेशः । (गच्छति ।)

सुभद्रा— जगदीश! इतः परं वा यथा न कोऽप्यत्राऽऽगत्य मां हिंस्यात् तथाऽनुगृहाण— आ! किञ्चिदत्र स्थित्वा विश्राम्यामि (उपविश्य) आरब्धः खलु रमणीयो वसन्तः? हन्त! अयमिन्दिन्दिरो हृष्टान्तरङ्गस्सहकारमञ्जरीमिमामाश्लिष्य परिचुम्बति । कलकण्ठोऽप्ययं रसालतरुमधिष्ठाय मधुरं कूजन् स्वान्तम्मदीयमाकर्षति । सुरभिस्सुखस्पर्शश्चायं सायन्तनो वायुरादाय मकरन्दकणानारामस्थलीमिमां सिञ्चति । हन्त! हन्त! दुर्भगाहम्, यतस्समयेऽस्मिन् पुरोभूय नाऽनुगृह्णाति मां प्राणनाथः ।

(नारद आगच्छति)

नारदः— सुभद्रे! किमनुमन्यसे मदागमनम्?

सुभद्रा— कः सः ?

नारदः— अहमेव नारदः ।

सुभद्रा— भगवन् ! नमस्करोमि, आगम्यतां, अलंक्रियतामासनमिदम् ।

(नारदस्तत्रस्थे कस्मिंश्चित् विष्टर उपविशति)

नारदः— दीर्घसुमङ्गली भव !

सुभद्रा— भगवन् ! किं हेतुकमियद्दूरमागमनम् ? विशेषेण केनाऽपि भाव्यम् ।

नारदः— किं मदागमनं विशेषद्योतकम् ?

सुभद्रा— आम्, मम श्रेयःप्रदं खलु भवदागमनम् । न खलु लभ्यते भवादृशानां दर्शनं पापैः ।

नारदः— सम्यक् ! सुभद्रे ! सम्यक् ! अप्यनामयमर्जुनस्य ?

सुभद्रा— किं भवानपि मां तदनुयुङ्क्ते ?

नारदः— कमन्यं पृच्छेयम् ? अन्ये पृष्टा अपि सुभद्रैव जानाति वृत्तान्तमर्जुनस्येति वदन्ति । सत्यमेव खल्विदम् ! अति हि प्रियं मेऽर्जुनस्त्वद्विरहासह इति । प्रतिजन्म तवैव रमणो भवतु रमणीयोर्जुनः ।

सुभद्रा— भगवन् ! सर्वमपि भवदनुग्रह एव !

नारदः— न तथा ब्रूहि ममाऽनुग्रह इति, न खलु लभ्यमिदं साधारणैः । जन्मान्तरोपार्जितस्य पुण्यस्य फलमेवेति चिन्तय । कृष्णानुजाया जिष्णुपत्न्या अभिमन्युमातुस्तव किमस्ति लोके-

ऽस्मिन् दुस्साधम्? प्रतिमासं गौरीव्रतानुष्ठानेन खलु लभ्य-मिदम्?

सुभद्रा— भगवन्! किंरूपं तद्व्रतम्? विविच्य बोधयतु मां भवान्।

नारदः— तच्च शुभे दिवसे प्रातरुत्थाय गङ्गायां स्नात्वा प्राप्य चाऽऽरामं तत्र कलशे गौरीमावाह्य विधाय पूजादिकं ब्राह्मणादीनां मनोरथपूरणमेव।

सुभद्रा— भगवन्! प्रातरेव कर्तव्या मयेयं पूजा। अनुगृह्यतामयं जनोऽनुज्ञादानेन।

नारदः— सुभद्रे! किमर्थं तवेदं व्रतम्। यत् फलं व्रतेनाऽनेनाऽन्येऽभिलषन्ति तत्करतलामलकवल्लब्धं त्वया। किमर्थं तवेदं कष्टम्?

सुभद्रा— भगवन्! न खलु तथा, प्रतिजन्माप्ययमेव यथा मम रमणस्स्यात्, यथाऽत्र जन्मनि च मामवियुञ्जानो भवेत्।

नारदः— किमिति तथाभिहितं त्वया? त्वां वा? अर्जुनो वा? विहाय गच्छेद्वा? किं परिहससि शिष्यं मम?

सुभद्रा— अहं जानामि भवच्छिष्यवृत्तान्तम्। भवांस्तु "किं मम शिष्यं परिहससि" इति पृच्छति। श्व एवाऽगच्छेयमित्यभिधाय गतस्य तस्याऽद्याऽतीतास्त्रयो युगाः।

नारदः— कः? अर्जुनो वा?

सुभद्रा— आम्।

नारदः— कुत्राऽगमत्?

**सुभद्रा—** आखेटार्थमित्यभिधाय गतः। ततः कुत्र गतवानिति नावगम्यते। भवानेव जानाति।

**नारदः—** कदाऽगमत्?

**सुभद्रा—** अद्य त्रीणि दिनान्यतीतानि।

**नारदः—** त्रयो युगा इति खल्वभिहितम्।

**सुभद्रा—** तेन विरहिताया मम त्रुटिरेकाऽपि युगायते। इतोऽप्यधिकतया वक्तव्यमभूत्। न खलु सङ्गच्छते त्रयो युगा इत्युक्तिः। भगवन्! किं न्याय्यमिदम्? वदतु भवानेव। किं सत्यसन्धो द्विर्भाषेत? किं युज्यत एकाकिन्या मम त्यागः?

(दूयते।)

**नारदः—** सुभद्रे! न खलु दूयस्व। कदाचित् मृगयार्थं गतस्य कारणेन केनाऽपि भवेत् कालविलम्बः। साधारण एव खल्वयम्। एतदर्थं शोचितव्यं वा? त्वरितमेव त्वन्नाथस्सुखं प्रत्यागच्छेत्। न दूयस्व।— साधयामि— कथमपि श्रेयस्करमेव तद्व्रतानुष्ठानम्।

**सुभद्रा—** अद्यैवाऽनुतिष्ठाम्यहम्।

**नारदः—** कोऽयं निर्बन्धोऽद्यैवाऽनुष्ठातव्यमिति। कुरु यथाभीष्टम्। पुरात् बहिर्गत्वा पूजां कुरु। चेदत्र क्रियते याचितारो यद्यत्पृच्छन्ति देयमेव भवेत्तत्तत्सर्वम्। किं सुसाधमिदम्?

**सुभद्रा—** भगवन्! किमिति भवान् तथा वदति? किं न शक्यते दातुमभिलषितम्मया?

नारदः— सुभद्रे! न खलु तथा, प्रार्थितानां सर्वेषां वितरणाय न हि वर्ततेऽत्र त्वन्नाथ इति विचिन्त्याऽभिहितं मया। कुरु यथाभीष्टम्।

सुभद्रा— भगवन्! अभिलषामि भवदागमनमपि।

नारदः— तथैव भवतु। अहमप्यागच्छामि।

सुभद्रा— तथैव भगवन्!

नारदः— दीर्घसुमङ्गली भव! (गच्छति)

इति षष्ठो निःश्वासः॥

## अथ सप्तमो निःश्वासः॥

भगवान् शुभ्रांशुरपि मलिनांशुरभवत्। पुराणमौक्तिकानि विडम्बयन्तस्त्रिचतुरास्तारकाः परमन्तरिक्षेऽदृश्यन्त। न कोऽपि स्पृहयति निर्गलितविभवायेति बोधयन्त इवेन्दिन्दिरा धिक्कृतकैरवाः कमलवनीमगच्छन् युवजनकर्णारुन्तुदाश्चरणायुधानां कूङ्कारा विजजृम्भिरे। कोकसुदशामाश्वासप्रदास्सिन्दूरारुणा आरुणाः किरणाः क्रमेण प्राचीमलमकुर्वन्। समयेऽस्मिन् चित्रसेनादयो यथोक्तमुद्यानासन्नप्रदेशेऽग्निं समेधयन्तो वर्तन्ते।

चित्रसेनः— हा! सन्ध्यावलि! किमर्थमनुभवसि दुर्भगस्य मम कृत इयत्कष्टम्? चित्रसेनोद्य म्रियेत' इति चेच्छिरोलिपिः कः पारयेत्तां प्रतिबन्धुम्? किमर्थं तवेयं व्यथा? यथातथमेवाऽस्मिन्नग्नौ पतामि। अनादिनिधनस्य भगवतोऽपि शत्रुर्भूत्वा तद्बाणेन मरणाच्छ्लाघ्यमेवाऽग्नौ पतित्वा मरणम्।

रत्नावली-- नाथ! सहैव भवताऽहमप्यग्निं प्रविशामि ।

सन्ध्या— नाथ! एतावता क्षान्तो भवान् किञ्चित्कालमपि क्षाम्यतु । आसन्न एव सुभद्रादेव्या आगमनसमयः । नारदोक्तिवद्यदि सुभद्रां वशयेम तदा सुसाधमस्मत्कार्यमिति मन्मनोदर्पणे प्रतिफलत् किमपि मां प्रत्याययति । शकुनं च प्रातस्समीचीनं । न खलु तत्फलमवितथं भवेत् ।

चित्र-- कः पारयति रोद्धुं भगवतो वासुदेवस्य बाणान् ?

सन्ध्या-- किं न श्रुतं भवता, पार्थस्य बाणः पाषाणमपि द्रावयेदिति ? सत्येवं पार्थसारथेः परं मनः किं न द्रवेत् ? पश्यामः-- तत्र सुभद्रा नारदसनाथा दूरत आगच्छतीति प्रतिभाति । रत्नावलि ! दुःखसागरमग्नेव तूष्णीं वर्तस्व । नाथ! भवानपि पतितुकाम इवाऽग्नौ साहसं महान्तं करोतु । अहं च प्रलपामि । अवधत्त!-- (उच्चैश्शब्दायते) हन्त! नाथ! न खलु! न खलु! मदर्थं वा किञ्चित् प्राणेषु कुरु दयाम् । हा! किं नाऽस्ति कोऽपि रक्षिताऽत्र किं नाऽस्त्येव ।

चित्रसेनः-- वृथा किमिति मां रुणत्सि ? मुञ्च ! मुञ्च !

सन्ध्यावली-- हन्त! नाथ! नाथ! [रोदिति]

( एकतः सुभद्रानारदावागच्छतः । )

सुभद्रा— भगवन्! अनुमन्यस्व, किमिदमिति विज्ञाय सत्वरमागच्छामि ।

( क्रमशः । )

द्वारं ग्रहं तु खलु गच्छत तत्र यूय-
मैरावतीमहमनेन गवेषयामि ॥ ७७ ॥

**अनुचराः**— यदाज्ञापयति देवः (इति निष्क्रान्ताः)

**राजा**— [ विदूषकेण समं परिक्रमन् समन्तादवलोक्य ]

अत्र च विविधविचित्रतरवन्यद्रुमसहजन्यपरस्परसंबद्धलतावितानतिरस्कृतदिशाविभागे विपिनाभोगे सरिदैरावती कुत्र वा प्रवहतीति पुनरावामतित्वरमेव गवेषयावः । (इति चिन्तामभिनीय परिश्रान्ताविव छायामाश्रयतः)

**राजा**— (स्पर्शमभिनीय सानन्दम्)

उचितविचलद्वीचीतीरोपमर्दनसंभवो
नलिनतलिने हंसस्त्रीपक्षपातसमेधितः ।
अयमिह लतामालंब्य हन्त पदे पदे
सविधवियतोमन्दं मन्दं समीरकिशोरकः ॥ ७८ ॥

तदिह नातिदूरत एव तया प्रवहन्त्या स्रवन्त्या भवितव्यम् । एनं शीतलपवमानमादावभिमुखमेवानुसरावः । (उभावपि तथा कुरुतः)

**राजा**— (पुरतोऽवलोकयन् श्रुतिमभिनीय साश्चर्यानन्दम्)

पार्श्वद्वंद्वप्ररूढक्षितिरुहनिवहप्रौढशाखाशिखान्त-
वेल्लद्वल्लीमतल्लीजनितयवनिकामध्यमध्यासितेयम् ।
शंसन्ती हंसकौघैर्निजवसतिमहीमंसलैः किं सघोषै-
रारादैरावती सा विलसति विजने सिन्धुनेतुःपुरन्ध्री ॥

(उपसृत्यावलोक्य च । साश्चर्यम्)

पार्श्वद्वंद्वक्षितिरुहचरत्प्रौढशाखामृगौघ-
स्वैरक्रीडारभसगलितैः सूनगुच्छान्तरालात् ।

धूलीजालैः सममविरतं धूसरैरासवेन
प्रायः सेयं प्रवहति नदी न द्रुतं नापि मन्दम् ॥८०॥

तावदेवावामनुसराव: । (उभावपि तथा कुरुत: ।)

**राजा—** (पार्श्वतो विलोक्य सविस्मयम्)

सखे! मम नयनखेदमपनुदति कथमयमविरतखेलनपरमानन्दपरवशमानसकोकिलदंपतीकुलजृंभितकलकलसंपदमुपश्लाघमानैरिव जीवनेतरशीतलपवनेरितशाखाशिखाशिरोभिरतिशिशिरोपाचितप्रच्छायस्वेच्छाविहरणरसिकरथाङ्गचक्राङ्गप्रमुखविहङ्गमसङ्घैरिह लवङ्गलतालिङ्गनसुखितसरसकेसरनागपुन्नागमाकन्दचन्दनचंपकमुखानेकानोकहनिवहैरावृतनिजतटाभोगस्तटाग: ।

सकुतुकमुपकण्ठं सागरक्षीरकण्ठं
सततमुपनयन्ती सानुरागं तटाकम् ।
विपुललहरिदंभादत्र विस्तार्य हस्ता-
नपि सरिदियमारादङ्गमालिङ्गतीव ॥ ८१ ॥

(स्पर्शमभिनीय साश्चर्यम् ।)

कण्डूलवन्यकरिमण्डलगण्डपिण्ड-
संघर्षकन्दलितचन्दनगन्धसान्द्राः ।
श्रान्तिं हरन्ति सरसीजलशीकरार्द्राः
संप्रत्यमी मम समीपचराः समीराः ॥ ८२ ॥

**राजा—** (स्वगतम्) सेयमैरावती च नयनगोचरमासादितवती इयं च जनसञ्चरणरहिता वर्तते । कुतस्तादृशो नलिनीदृशो दर्शनम् ।

शश्वत्तदैववचो विश्वस्याकर्षदङ्घ्रिमुत्तार्य ।
हृदयं मामिह गहने नदयन्निन्दाम्यहं मदीयमपि ॥ ८३ ॥

( विमृश्य ) सोऽयं मनसो नापराधः । किन्तु— तस्य स्वभाव एव । तथाहि—

तामेणीदृशमेष पञ्चविशिखः स्वप्नेऽप्यदृष्टामिमा-
मातन्वन्नतिसंस्तुतामिव मनस्यासीदनुग्राहकः ।
सोऽयं माहतको विधिस्तु जलधिं सोपद्रवं वञ्चकः
सन्तार्यात्र वने चिराय विजने सञ्चारयन्त्याः कथम् ॥

( पुनर्विचिन्त्य )

धाता चेत्स्वयमेव पञ्चविशिखस्तस्यां ममैतादृशं
तन्वङ्ग्यामनुरागमप्रतिहतं तन्वन्नहो सांप्रतम् ।
इन्दुर्वा मधुरेव वा विरचयन्नेतस्य साहाय्यकं
वेदाभ्यासजडः प्रतारयति मां वेधाः कथं प्राकृतः ॥ ८५ ॥

तटागतटादैरावतीमवतीर्णस्य सुलक्षिता महावराहस्य पदपङ्क्तिः । (दृष्ट्वा साश्चर्यानन्दम् ।) सर्वथा मया दारितस्यैव महतो ग्राहस्य तानि पुनरेतानि पदाङ्कितानि । इतस्तटाकतटभूमेर्नासाभरणरत्नसमुद्गकं नातिचिरमेव मांसपिण्डशङ्कया जग्राह स ग्राहः ।

आकर्ण्य वाक्यमशरीरि निरीक्ष्य चेदं
सान्द्रं वनं हृदयसंशयडोलिकायाम् ।
भ्राम्यद्द्रुतं त्वमवढोह भजस्व धैर्य-
मासीद्यतो विधिवशेन विशेषदृष्टिः ॥ ८६ ॥

पुनरप्यशरीरिवचनमेवानुसरामि । अमुष्मादितस्तटाकतो दे-

वीपक्षपातिनं केनोपायेनापरत्रापसारयामि । (विमृश्य) भवत्त्वेवं तावत् । (प्रकाशम्) सखे मा भैषीः ।

**विदूषकः**-- (सोत्प्रासम्) वयस्स किमिदमकण्डे अहयप्पदाणसंसणम् ।

**राजा**— (महावहारपदाङ्कितं तत्तीरसैकतं हस्ततो निर्दिशन्) सखे! पश्य ।

**विदूषकः**— (दृष्ट्वा साश्चर्यम्) अपुव्वेयं पयपयपन्तितीरंचिणं दीसइ ।

**राजा**— प्रायेण सेयं महावहारस्य पदपङ्क्तिरिव दृश्यते । तदत्रापि तादृशं महावहारं खण्डयन्नयमेव मण्डलाग्रो मे भवन्तमक्षतं रक्षिष्यते । तदिह सहैवावगाहस्व ।

**विदूषकः**— (सभयकंपमुपसृत्य) तुह एदं मण्डलग्गं दिढरक्खदिणतिसयं एव्व पेक्खन्तो एदस्सिंमक अतव अणेवि आमहावहारिणीहाणे तडायम्मि सहे कहं अवगाहेमि । कोणु खु सिद्धमूअलिआलद्धात्तिदव्विरएण दट्ठोहादि । ता अण्णदो गमिट्ठं ण एदाए एरावदीये पवाहे णिभ्भयं अभ्भुत्तेम्मि (इति निष्क्रान्तः)

**राजा**-- (समन्तादवलोक्य साश्चर्यानन्दम्) प्रायेण सेयं विलासेन सह वयस्याजनैः सरस्याः पुनरस्याः समीपभूमिमनतिचरान्निजचरणविन्यसनादेव धन्यतमतामानीतवती सुदती । यतः—

**अचिरमपचितानामंबुजानां रजांसि**
**प्रचुरमधिपलाशं पद्मिनीनां लसन्ति ।**
**सलिलविहृतिवेगोत्सारितं पार्श्वदेशा-**
**त्सरासि मिलति मन्दं शैवलानां च बृन्दम् ॥ ८७ ॥**

तावदिदं तटाकान्तरमवगाहे । (इति तथाकरोति ।)

(सौरभाघ्राणमभिनीय सानुस्मरणम्) असौ नासाभरणसौरभविशेषे सौहार्दमात्मनो वहन्ती कथं तीरदेशमितः समन्तादिमं तावदावरिवरीति परिमललहरी ।

अवैमि हिमवालुकामहमवैमि कस्तूरिका-
मवैमि नवकुङ्कुमद्रवमवैमि पिष्टातकम् ।
अवैमि च पृथक् पृथक् पुनरवैमि तां मिश्रिता-
महो जगति सौरभं त्वननुभूतमेवंविधम् ॥ ८८ ॥

(विमृश्य) तदिह सस्नातामेनां नताङ्गीमणिं जात्या पद्मिनीति जानीमः ।

कासारेऽस्मिन् विहृतविहृतिः कामिनी पद्मिनीयं
जात्या नोचेदिदमुदञ्चरी तच्छरीरानुषङ्गात् ।
मन्दारद्रुप्रसवविसरन्माकरन्दप्रवाहै-
र्मिश्रेवामुं कथमिव समुन्मीलयेद्दिव्यगन्धम् ॥ ८९ ॥

इतः कासारसकाशादेषा भूषा भुवो योषामणिः रमणीयभावमापादयति कतमं वा समीपावस्थितं प्रदेशम् । अये केनोपायेन पुनरासादयेयमितस्तादृशं प्रदेशम् । (विचिन्त्य) तदिह तस्याः कृतविहरणायाश्चरणाङ्कणसरणिमेवानुसरामि । (तीरमधिरुह्य । चरणाङ्कनगवेषणं नाटयति) (अन्यतोऽवलोक्य साश्चर्यानन्दम्) स्त्रीणामिह तिसृणामलक्तकारुणानि चरणार्पणानि दृश्यन्ते ।

उभयोरिह सममुत्पललोचनयोश्चलितयोर्विलोक्यन्ते ।

चरणार्पणानि पुरतः सैकतमृदुले परिस्फुरन्मार्गे ।
पश्चादपि कस्याश्चिदनुसृतायाः पुनरिमानि पदाङ्कनानि ॥

(विभाव्य) तदेतेषु पश्चादनुसृतायाः पदाङ्कनानि करङ्कवाहिकाया एव । नखदलितनागवल्लीदलपुटपर्यन्तशकलकीर्णानि पदाङ्कनानि यस्मात्प्रायेणैतानि दृश्यन्ते ।

( पुरस्तादवलोक्य सविस्मयानन्दम् )

अविरलसरलाङ्गुलीदलानि
प्रथितयवाङ्कुशपङ्कजाङ्कितानि ।
अतिमृदुलतयार्पितानि गाढं
पथि विलसन्ति पदाङ्कनयनानि ॥ ९२ ॥

यानि तानीमानि तस्या महाभागाया एव ।

(पुनर्निरूप्य सबहुमानम् )

पादार्पणेषु तस्याः पद्मानि स्पष्टरेखमीक्ष्यन्ते ।
पादेन साम्यरोषात्प्रतिपदमेतान्यधः कृतानीव ॥ ९२ ॥

किञ्च—

अथ नैनवयावकारुणानि
प्रमदायाः कलये पदार्पणानि ।
जघनस्तनभारजातपाद-
द्विगुणारुण्यविभानुरञ्जितानि ॥ ९३ ॥

अन्यानि कन्यामणिहस्तावलंबनविनियुक्तायाः व्यवस्यामि पदानि वयस्यायाः ।

पद्मेक्षणायाः पथि दक्षिणासमं
तस्याः प्रयान्त्याः पदमेतदेककम् ।
हस्तावलंबावनतार्थविग्रह-
स्फीतेन भारेण भृशं यदर्पितम् ॥ ९४ ॥

भवतु । अमुमेव मार्गमनुसरामि । (तथा करोति)

[नेपथ्ये]

विजयस्स महाराअ विजयस्स ।

**राजा**— (श्रुत्वा ससंभ्रमम्) प्रकृतिकुटिलो य इहापि कथं सङ्गतः सारङ्गः । सर्वदा पुनरयमिह सहवयस्यायाः प्रेयस्याः पदार्पणानि विज्ञास्यति । तावदहमन्यत्र गमिष्यामि । (इति पन्थानं विमुच्यान्यत्र गच्छति ।)

(ततः प्रविशति कृतस्नाननैपथ्यो विदूषकः ।)

**विदूषकः**— (अग्रतः सरसीमवलोक्य राजानमदृष्ट्वा संभ्रान्तः ।) इह मं महागहणे विसज्जिय एत्थकि अह्णिविहिणेमणुक्कण्ठिदमणो देवालयं किं पट्ठिदो देवो (विमृश्य) अहवा किदं सन्देहेण । पच्चहं एक्कावीसणचउव्विससहंसबह्मणमिठ्ठण्णदाणकुसलो रहुणाहनरवालो बहुक्खिअणं एक्कं बह्मणं अहोजिअसंयं एव्वजेमणत्थं कहं गमिस्सदि । ता एत्थ एव्व पच्छायासिअले कहं वि पायवमूले चिट्ठइ । (इति परिक्रम्यावलोक्य सहर्षम्) कहं एत्थ एव्व महाराओ चिट्ठइ । (उपसृत्य) वयस्स एराव-दिपज्जन्ते णिव्वट्टियमझंदिणकम्मो एसो बह्मणो । ताजेमणढं देवालयं गमिस्सामो । एद्दकीअणेणवद्दविलंबेण ।

**राजा—** किमनुष्ठितं निखशेषं माध्यन्दिनं कृत्यम् ।

**विदूषकः—** (श्रुत्वा सासूयम्) अज्ज एव्व सव्वोवि एक्कसंव च्छूलपेज्जन्तं मज्झण्णकम्मो सम्मं आकण्ठीअ अणुट्ठिदो। वयंस किणं पस्ससि। अदम्भेण दम्भपवित्तेण अङ्गुली सण्णि- वेसिदेण णिडालतललित्तेण तिवुण्डेण अ अप्पा मण्डिदो। इदो किंकरणिज्जं विणाजेमणेन। एसो बह्मणो बहुक्खिदोत्ति संपदं अहिलं विभमइ भुवणम्। किं ण पेक्खेसे। तह वि तुह अहिजादजम्मणे एदस्सिं बह्मणे दया णादिसइ। अयं उण उन्णप्प किदितवणो णिडाल तवइ। एसो वि देसो पादणहं- पचो। इणमोविटदरञ्जालजडालउव्वग्गिदजाढरग्गिजंजरिदम्। केण वि अन्दट्ठिदेण जंघासिरा आयड्ढियदि। मज्झादिणमु- ज्जादवसन्तावाहिरिस्सं दुक्खिजाढरग्गिसीहङ्गणिग्गदधूमाकुलिदा- विअ अस्थिणो महनपेच्छन्ति कण्णेसु को विमझ्णमहासंखंध- मइ। किंतुह्म ण सुणीयदि। किं बहुणा। एदस्सिं पदे सेवण- महिसाविअदंसाउव्विढपक्खा अन्तरिक्खे परिब्भमन्ति। ता णिर- न्तरपासंदुमसतदिसाहासिहाणुहावदाए अमुज्जंपस्से अविरलसि- सिरसिअदामणहरदाए सेवणजोग्गे तस्सि मग्गे जेमणत्थं झत्ति गमिस्सामो। (इति तथा कुरुतः)

**राजा—** (स्वगतम्) तानि पुनरेतानि पदाङ्कितानि नायिकायाः कथमन्यथा नयामि। तावदेवमन्यत्रासक्तदृष्टिं करोमि। (प्रका- शम्) (ऊर्ध्वमवलोक्य) अहो नैरन्तर्यं सरणिपर्यन्तकन्दलित- विविधानोकहनिवहशाखाशिखानाम्।

**विदूषकः—** अहइम्। सरदामुत्तेजिदसुज्जकिरणवज्जपडणवि-

तदप्यन्यद्भीतिस्थानम् ।

**अधरकः**— शे शाहु शम्म विआलिअ कळणिज्जे । भीळूणं मझ्झे मइन्देत्ति अच्चाहिदे पशे ।

तत्साधु विचार्य करणीयम् । भीरूणां मध्ये मृगेन्द्र इत्यतिभयङ्करमेतत् ।

**राजसः**— इमिणा पत्थावणन्दळे वि ळेख्खे ।

अनेन प्रस्तावनान्तरमपि लेख्यम् ।

**अधरकः**— तत्थ पञ्चशिअणेप्पच्छधाळी हके वत्थुदो धणएत्ति वच्चे । ताह वअणद्धं पि जह दीशिज्ज वह धाळिज्जउ णेप्पच्छे । शे वि कण्ठदो बुअउ ळङ्गभूमिम्मि मा भाआध अहके ण शीहे त्ति ।

तत्रां पञ्चास्यनेपथ्यधार्यहं वस्तुतो धनक इति वाच्यम् । तस्य वदनार्द्धमपि यथा दृश्येत तथा धार्यतां नैपथ्यम् । सोऽपि कण्ठतो ब्रवीतु रङ्गभूमौ मा भैष्टाहं न सिंहः इति ।

**धान्यकः**— होदु तत्थ अण्णे वि काठिण्णे वट्ठण ।

भवतु तत्रान्यदपि काठिन्यं वर्तते ।

**कहूण ळङ्गभूमिम्मि चन्दिआणअणं शहे ।**
**भाणुमच्चम्हइन्दा हि जोण्हाए इल शङ्गदा ॥ १ ॥**

कथं पुना रङ्गभूमौ चन्द्रिकानयनं सखे ।
भानुमत्यश्मकेन्द्रौ हि ज्योत्स्नायां किल सङ्गतौ ॥

**राजसः**— (विचिन्त्य ।) अत्थि वा णट्टप्पओअळअणीए चन्दिआ ।

अस्ति वा नाट्यप्रयोगरजन्यां चन्द्रिका ।

**अधरकः**— दीशदु अविलंब्वेण काळशूइआ ।

दृश्यतामविलम्बेन कालसूचिका ।

**धान्यकः**— णिअदं वेअ ळअणिं तं अळङ्करेइ शशङ्के ।

नियतमेव रजनीन्तामलङ्करोति शशाङ्कः ।

**अधरकः**— तह जइ जाळमग्गेण लङ्गभूमिं ओदळिश्शन्दि शीदकिळणळम्ही ।

तथाचेज्जालमार्गेण रङ्गभूमिमवतरिष्यन्ति शीतकिरणरश्मयः ।

**धान्यकः**— शाहु आदु कण्डएही आबद्धे दीअं घेत्तूण प्पविविअ शशङ्काअमाणे वट्टउ के वि पुळिशे । विआळनिज्जे अण्णे एशे विशए । ळंगभूमिम्मि का वि भित्ती आवशिअई । कुळिअळन्धेण इळ णाअआ संळवन्दि ।

साधु, अथवा कण्ठकैराबद्धो दीपं गृहीत्वा प्रविश्य शशाङ्कायमानो वर्ततां कश्चित्पुरुषः । विचार्योऽयमन्यो विषयः। रङ्गभूमौ काचिद्भित्तिरावश्यकी । कुड्यरन्ध्रेण किल नायकौ सञ्जपतः ।

**राजसः**— वळे भित्ती कहं आणेअव्वा । अहळआ, किंणु उच्चयि शळणे अम्हाण अज्ज तुह पळिहा वेअ ।

अहो भित्तिः कथमानेतव्या । अधरक, किमुच्यते । शरणमस्माकमद्य ते प्रतिभैव ।

**अधरकः**— भित्तिणेप्पच्छधाळीण वित्थिदहत्थशाहे चिट्ठउ केवि ळंगप्पएशम्मि । तदो ताह पाणिविडवळन्धेण संळवन्दु देवी देवे अ ।

भित्तिनैपथ्यधारी विस्तृतहस्तशाखस्तिष्ठतु कश्चिद्रङ्गप्रदेशे ।
ततस्तस्य पाणिविटपरन्ध्रेण सल्लपतां देवी देवश्च ।

**धान्यकः**— तह जइ शव्वे शाहु । संवइ पत्थुज्जउ । अम्ह-इन्दा, अहळा, क्कमेण णं णिउञ्जजवणिअं पविशन्दु ।

तथा चेत्सर्वं साधु । संप्रति प्रस्तूयताम् । अश्मकेन्द्र, अधरक, भवानेव तावत्प्रथमः । वचनावसाने सर्वाण्यपि पात्राणि क्रमेणैनां निकुञ्जयवनिकां प्रविशन्तु ।

( ततः प्रविशत्यदृश्यमानः प्रमोहः । )

**प्रमोहः**— ( पुरोऽवलोक्य सवितर्कम् ) कथमेते वराकाः स्वपन्ती-मस्मत्स्वामिनीं निम्बवतीमजानानास्तच्छयनदेशं निकषा नर्तितु-मारब्धवन्तः । भवत्वत्रैव स्थित्वा सामाजिकीभवामि । सति समये नटोऽपि कदाचिद्भवेयम् ।

( इति गूढं स्थितः ।)

**अधरकः**— अह्मइन्दा, कहं तुण्हीं ठ्ठिज्जइ । भाणुमइ, सज्जा होहि ।

अश्मकेन्द्र, कथं तूष्णीं स्थीयते । भानुमति, सज्जा भव ।

**धान्यकः**— भाणुमइ, ( सचिन्तम् )

भानुमति ।

प्पशूणा आमगन्धाइ जह ळम्माइ भामिणि ।

प्रसूनान्यामगन्धिनी यथा रम्याणि भामिनि।

**धान्यकः**— मन्दमए, शुगन्धाइ शुगन्धाइ ।

मन्दमते, सुगन्धीनि सुगन्धीनि ।

**अधरकः**— (पुनरपि ।)

**पशूणाइ शुगंधाइ जह ळम्माइ भामिणि ।**
**तह दे भाइ णीशाशे मळआणिळशोळ्हे ॥ २ ॥**

प्रसूनानि सुगन्धीनि यथा रम्याणि भामिनि ।
तथा ते भाति निश्वासो मलयानिलसौरभः ॥

के शे शद्देत्ति वित्तूण णिवट्टेज्ज जवा शहि ।

कोऽयं शब्द इति ज्ञात्वा निवर्तेय जवात् सखि ।

(इति निष्क्रान्तः)

**प्रमोहः**— चित्रतरोऽयमश्मकेन्द्रः ।

(इति निष्क्रान्तः ।

**वसुपालितः**-- कहं वत्तव्ये मह ।

कथं वक्तव्यं मया ।

**धान्यकः**— उवजंदव्वे हळ तुए । इमे उ अज्ज आअण्णिदं शद्दं विआळिअ अइला आअमिश्शइ ।

उपयन्तव्यं किल त्वया । अयं त्वद्याकर्णितं शब्दं विचार्या चिरादागमिष्यति ।

**वसुपालितः**—

**अणंगपेशलंगे शे अम्हइंदे विहाइ मे ।**
**शिअंते व्व शुहावुट्ठिं दंशणेण दिशा मह ॥ ३ ॥**

अनङ्गपेशलाङ्गोऽयमश्मकेंद्रो विभाति मे ।
सृजन्निव सुधावृष्टिं दर्शनेन दृशोर्मयि ॥

वळ्ळह शङ्केदघळणिआह णिअडे तुमं उण वि पेख्खंमि ।

वल्लभ, सङ्केतधरणिजस्य निकटे त्वां पुनरपि प्रेक्षे ।

**धान्यकः**— (सक्रोधम्) अळे मुळिहा शंकेदघळणिए ण अज्ज पत्थोदव्वे तुए । शे खु उत्तळे होदि । तुए जे जे इमश्शि पअळणे वत्तव्वे शे शे शव्वे वि एक्कपदच्चिअ भाशिदुं ण उइदे । (निकुञ्जाभिमुखम्) अम्हइंदा, पविशिअ ण कइ वि मं विम्हळशु त्ति तुए अज्ज फणिदव्वे ।

अरे मूर्ख सङ्केतधरणिजो नाद्य प्रस्तोतव्यस्त्वया । तत्खलूत्तरं भवति । त्वया यद्यदस्मिन् प्रकरणे वक्तव्यं तत्तत्सर्वमप्येकपदे भाषितुं नोचितम् । अश्मकेन्द्र, प्रविश्य न कदाऽपि मां विस्मरेति त्वयाऽद्य फणितव्यम् ।

**वसुपालितः**— (विचिन्त्य) वळे शुमलिदे । वळ्ळहा अणुळाअपद्धदीए ण कइ वि खळिश्शम् ।

आः स्मृतम् । वल्लभ, अनुरागपद्धतेर्न कदापि स्खालिष्यामि ।

(ततः प्रविशति ससंभ्रमं शिरसा रासभोऽधरकः सहासः प्रमोदश्च ।)

**अधरकः**— अइ भाणुमइ, जइ हके शुन्दळे शे शव्वे वि तुह ळामणिज्जए वेअ ।

अयि भानुमति, यद्यहं सुंदरस्तत्सर्वं त्वद्रामणीयकमेव ।

**सर्वे**— (सभयम्) अविध ! पमाए पमाए । अच्चळिअं अच्चाहिए

अ एशे । शव्वे वि एदे भीशिदा ह्म । झत्ति ओशेलिअ पाणा शंळक्खम्ह ।

अहो प्रमादः प्रमादः । आश्चर्यमतिभयङ्करञ्चैतत् । सर्वे-ऽपि वयं भीषिताः स्मः । झटित्यपसृत्य प्राणान् सं-रक्षामः ।

[ इति निष्क्रान्ताः

**प्रमोहः**— ( सोल्लासस्मितम् । ) क नु खलु धावथ । अयमहमागत्य वः सर्वानपि वनेऽस्मिन् भीषयित्वा विद्रावयामि ।

[ इति निष्क्रान्तः

**अधरकः**— कीश एदे धावन्दि । णिअदं एव्व मं भीशेदुं इदं आळद्धम् ।

कथमेते धावंति । नियतमेव मां भीषयितुमिदमारब्धम् ।

( पुनः प्रविश्य राजसः ।)

**राजसः**-- शू चित्ते एशे । अळे अहळआ, कहं ळाशहे तुमं शंवुत्ते । किणो एशे उअळि दे गिव्वाए ।

हंत चित्रमेतत् । रे अधरक कथं रासभस्त्वं संवृत्तः । किमेतदुपरि ते ग्रीवायाः ।

**अधरकः**-- (सरोषम् ।) तुह पडिइदिं विण किं अण्णं पुळवाशि । गच्छ मुलिहा, का इअं बिहीशिआ ।

तव प्रतिकृतिं विना किमन्यत् पश्यसि । गच्छ मूर्ख, केयं विभीषिका ।

(राजसः निष्क्रान्तः ।)

( पुनः प्रविश्य )

**धान्यकः**— अहळआ, कहं वा केण वा एवं कडे शि ।

अधरक, कथं वा केन वैवं कृतोऽसि ।

( इति निष्क्रान्तः । )

**अधरकः**— ण कइ वि पळिहशणिज्जे हुविश्शं । मं ळाशहीकादुं एशे आळम्भे त्ति पडिहाइ । मं भीशेदुं उवाए एशे एदाण त्ति बोहम्हि । ण एदादु पदा पदं पि पअळिश्शं । अहळिशं एत्थ एव्व गाइश्शं । अवत्तवाए अधोमुहे ता विहाइश्शं ।

न कदापि परिहास्यो भवेयम् । मां रासभीकर्तुमयमारम्भ इति प्रतिभाति । मां भीषयितुमुपायोऽयमेतेषामिति बोधामि । नैतस्मात् पदात् पदमपि प्रचलिष्यामि । सहर्षमत्रैव गास्यामि । अपत्रपयाऽधोमुखान् तान्विधास्यामि ।

( इति गायति । )

( गीतिः । )

**शाळशहंशकवोदा कोअचओ ळळिचाअआ विविणे ।**

**निम्बवती**— ( विबुध्य ) को वा गन्धर्वो मां प्रबोधयत्यात्मनो यदृच्छाविनोदनागताधरीकृतवेणुनिनादकलकण्ठगीतेन । को वा महान् मच्छ्रवसोरमृतधारां वर्षति गानमिषेण ।

**अधरकः**—

**कूअन्दि कण्णमहुलं णो तह गाअन्दि जिव्वळोआ मे ॥**

सारसहंसकपोताः कोकचकोरालिचातकाः विपिने ।
कूजन्ति कर्णमधुरं न तथा गायन्ति जीवलोका मे ॥

**निम्बवती**— ( आकर्ण्य पुलकिताङ्गी ) उपसृत्य ।

अहो मानवशार्दूल गातुं त्वां प्रार्थये पुनः ।
यथा ते गानमाधुर्याविष्टचित्ता भवाम्यहम् ॥ ५ ॥
तथानवद्यं ते रूपं वीक्ष्य नन्दन्ति मन्मनः ।
असंख्यास्त्वद्गुणा मन्ये प्रेरयन्त्यद्य मां त्वयि ॥ ६ ॥

**अधरकः**— के उच्चइ । के हेऊ तुह मइ अण्णालिशाणुळाअह ता इमादु वणा तुळिदं गन्दुं मइश्शं । चिन्देशु अप्पणो वावाळम् ।

किमुच्यते । को हेतुः तव मय्यन्यादृशानुरागस्य । तदस्माद्वनात् त्वरितं गन्तुं यतिष्ये । चिन्तयस्वात्मनो व्यापारम् ।

**निम्बवती**—

स्थातव्यं मत्कृते कान्त, कान्तारेऽस्मिन्मनोहरे ।
अनुग्राह्या महाभाग, जीवातुर्हि भवान्मम ॥ ७ ॥
विद्याधर्यप्यहं नाथ त्वद्रागेणार्दिता भृशम् ।
यद्यत्र नेच्छसि स्थातुं तर्हि त्वां स्थापयाम्यहम् ॥ ८ ॥

दास्यामि रत्नाकररत्नजातं
दास्यश्च या मे तव दास्यहेतोः ।
करोमि ते पादसरोजसेवां
प्रसूनपर्यङ्कतलस्थितस्य ॥ ९ ॥

## देशवृत्तान्ताः ॥



कुम्भघोणनगरे गोविन्ददीक्षितेन राजप्रतिग्रह सफलयितुकामेन प्रतिष्ठापिता वेदशास्त्रपाठशाला कवेरजातीरे विलसतीतीदं न खलु न विदितं चोलदेशनिवासिनाम् । सा ह्येतावता नातीवादृता पुरुषैरधिकृतैरद्य भागधेयवशाच्छिवगुरुनाथश्रेष्ठिवर्येणाभिज्ञेन नवीनपरिष्कारानाधातुमिच्छं- ता अचिरादेव परिष्कृता भविष्यतीति श्रुणुमः ॥

विद्याध्यक्षेण (Director of Public Instruction ) आगामिनो वत्सरादारभ्य गैर्वाण्यां काव्यनाटकादिषु व्याकरणे च मध्यमशाखाविद्या- र्थिनां प्रवेशपरीक्षा (Preliminary Examination) क्रियेत । तत्रोत्तीर्णा- नामेव शिरोमणिकक्ष्यासु प्रवेशो दीयेतेति राजकीयैः कश्चन नियमो- ऽङ्गीकृतः ॥

---

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

R. Krishnamachariar, M.A.,
Vidyanidhi.

VOL. XX.

No. 7.



ॐ

PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.



Registered No. M. 103.

# विषयाः ।





# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).
6. Annual subscription is Rs. 3 only, including postage.



॥ श्रीमातृभूतस्वामिगिरिः त्रिशिरःपुरम् ॥

|| श्रीः ||

# || सहृदया ||



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ] राक्षसवर्ष आश्विनमासः । [ संचि. ७.

## सुभाषितानि ।



कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां
घोषं कञ्चन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः ।
प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा
व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥ १ ॥

न जिघ्रत्याम्नायं स्पृशति न तदङ्गान्यपि सकृत्
पुराणं नादत्ते न गणयति किञ्च स्मृतिगणम् ।
पठञ्शुष्कं तर्कं परपरिभवार्थोक्तिभिरसौ
नयत्यायुः सर्वं निहतपरलोकार्थयतनः ॥ २ ॥

कर्कशतर्कविचार-
व्यग्रः किं वेत्ति काव्यहृदयानि ।
ग्राम्य इव कृषिविलग्न-
श्चञ्चलनयनावचोरहस्यानि ॥ ३ ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

( पूर्वतोऽनुवृत्तम् । )

—*—

'उच्चैः शिरसाम्' इत्यनेन महाकविः हृदये संभावितं हिमालयस्य गिरिराजत्वं पञ्चभिः श्लोकैः सरसमुपपादयतुमुपक्रमते लाङ्गूलेत्यादिभिः—

लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्वन्ति वालव्यजनैश्चमर्यः ॥ १३ ॥

यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किं पुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बाः
स्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥

भागीरथीनिर्झरशीकराणां
वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किराते-
रासेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥

सप्तर्षिहस्तावचितावशेषा-
ण्यधो विवस्वान्परिवर्तमानः ।

पद्मानि यस्याग्रसरोरुहाणि
प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥

अत्र प्रथमं राजचिह्नानि, अनन्तरं प्रतीहारिपदमापन्नानामिव दिव्ययोषितामवस्थितिं ततः (सभामण्टपेषु) सर्वतो दिव्यगन्धमावहता शीतेनानिलेनानुवीजनं, अथ सप्तर्षिभिः सोपायनहस्तैरूर्ध्वकरेणादित्येन चानुसेवनं, तदनन्तरं सोमलताप्रदानेन यज्ञकारकत्वं (भूभृतां षष्ठांशभागभाक्त्वमिव) यज्ञभागभाक्त्वं च निपुणमनुवर्णयन् हिमालयस्य सर्वक्षितिभृतामाधिपत्यं निःसंशयमवगमयति भावुकान् ॥

आद्ये पद्ये महाकविः प्रभातसमये हिमालयोपान्तवनराजिषु स्वनिलयेभ्यो बहिरागत्य लाङ्गूलानुक्षिप्येतस्ततः सञ्चरद्भिः चमरीमृगैर्नगेन्द्रस्यापाद्यमानां शोभामनुवर्णयन् 'हिमालयः गिरिराजशब्देनादिकाविना[1] निर्दिष्टः किल, तत्स्थान एव' इति समर्थयितुमुपक्रमते ॥

द्वितीये दरीगृहेषु सह दयितैः रजनीमतिवाह्य पुनरहर्मुखे बहिः सविलासं निष्क्रामन्तीनां अंशुकाक्षेपविलज्जितानां किन्नरीणां जलदाः द्वारेषु तिरष्करिण्यो भूत्वा बहूपकर्वन्तीति वदन्

1. सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः— रामायणे ।

कविः 'कुर्वन्कामात्क्षणमुखपटप्रीतिमैरावतस्य' इत्यात्मनः सूक्तिमनुस्मारयति।

अथ तृतीयं पद्यमनुवाचयताम्—

"पृक्तस्तुषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी।
तमातपक्लान्तमनातपत्र-
माचारपूतं पवनः सिषेवे। रघु. स. २. श्लो. १३.

गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे॥ रघु. ४. ७३.

असौ महेन्द्राद्विपदानगन्धिः
त्रिमार्गगावीचिविमर्दशीतः।
आकाशवायुर्दिनयौवनोत्थान्
आचामति स्वेदलवान्मुखे ते॥ रघु. १३. २०.

आधूय शाखाः कुसुमद्रुमाणां
स्पृष्ट्वा च शीतान्सरयूतरङ्गान्।
तं क्लान्तसैन्यं कुलराजधान्याः
प्रत्युज्जगामोपवनान्तवायुः॥ रघु. १६. ३६.

इत्यादयो महाकवेरस्य सूक्तयः स्मरणपदवीमास्कन्दन्ति॥

चतुर्थे प्रातः सूर्योदये हिमालयोपान्तप्रदेशेष्वनुभूयमानां शोभामनुवर्णयति कालिदासः॥

पञ्चमे— हिमालये न केवलं सोमलतादीनामुद्भवः परमखिलभूमण्डलरक्षणक्षमं द्रविणमप्युपलभ्यते इत्यवगमयन्कविसा-

र्वभौमः 'राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा' इत्यन्यत्रोक्तमाशयमुपव्रह्मयति ॥

महाकविरेवं काव्यस्यादिमे पद्ये प्रोक्तं 'नगाधिराजो देवतात्मा हिमालयः' इत्याशयं सप्तदशभिः श्लोकैः सुदृढं समर्थयन् प्रस्तुतां कथामुपक्रमते 'स मानसीं' इत्यादिना ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ भाट्टकल्पतरुः ॥

---*---

विदितमेवैतत्सर्वेषामास्तिकमहाशयानां यत्प्रमाणविषयतारूढं पूर्वमीमांसाशास्त्रं धर्मानुष्ठानोपयोगितया जगति वरीवर्ति सर्वप्राधान्येनेति। तदिदं सकलशास्त्रोपकारकं दुरूहबहुतरविचित्रार्थन्यायबोधकम् ।

"धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥" इति

प्रकरणपञ्चिकोक्तदिशा धर्मोत्पत्तीतिकर्तव्यताभूतं उपत्तिसहस्रसूत्रपरिमितं षोडशाध्यायात्मकं षट्सप्ततिपादविशिष्टं त्रयोदशशताधिकरणसंकुलं मीमांसाशास्त्रं तत्रभगवान् अपारकरुणापूरतरङ्गितान्तरङ्गः जैमिनिराचार्यः यथावद्वेदार्थज्ञानाशालोकोद्दिधीर्षुतया व्यरीरचत् । तथाचाहुः अभियुक्ताः । "पादैःषट्सप्तत्या त्रयोदशशतमितिभिरधिकरणैः । अध्यायैः षोडशभिः जयति मुनेः जैमिनेः शास्त्रमिति ॥ एतेषां सूत्राणामुपरि भगवता पाणिनि-

गुरुणा उपवर्षाचार्येण रचिता वृत्तिरेका आसीत् इति तत्र तत्र आचार्यशबरस्वामिपार्थसारथिमिश्रमाधवानां 'गकारौकारविसर्जनीया इति भगवानुपवर्षः,' 'उपवर्षस्तु वृत्तिकार' इत्यादि तन्नामोल्लेखनेनावगम्यते। ततश्च भगवता भाष्यकारेण अध्याहारविपरिणामादिभिरन्यथावर्ण्यमाणे सूत्राणामर्थे तदसहमानः यथाश्रुतार्थप्रतिपादकं भाष्यमाबभाषे। इदं च भाष्यं परिशीलयतां अस्माकं एतत्स्वान्तपदवीमधिरोहति यत् अस्माद्भाष्यात्प्राचीनानां श्लोकरूपेण मीमांसाधिकरणार्थप्रतिपादकानां ग्रन्थानां स्थितिरभूदिति। तथाह्युदाह्रियन्ते श्लोकाः भगवता भाष्यकारेण। श्लोकमप्युदाहरन्ति।

आधानं पौर्णमास्यां चेत् वृत्ते दर्शे करिष्यते।
अनङ्गपितृयज्ञश्चेत् तत्रैव न करिष्यते॥ इति,

पू. मी. भा. अ. ४. प. ४. अ. ८. सू. १९.

भट्टपादाः—

ततश्च प्रभाकरभवदासादिभिः आकुलीकृते भाष्यार्थे कार्तिकेयावतारः भगवान् भट्टकुमारिलः भाष्यं व्याचिख्यासुः बौद्धादिमतखंडनात्मकं तर्कपादाभिधं प्रथमपादं श्लोकरूपेण ततः पादोनत्रिलक्षणीं वाक्यश्लोकोभयमयत्वेन च विस्तरेण व्याख्याय अवशिष्टं भागं संक्षेपेण व्याचख्यौ येषां च यथाक्रमं श्लोकवार्तिकतन्त्रवार्तिकटुप्टीकाभिधानानि प्रसिद्धानि॥

पार्थसारथिमिश्राः— इमे च मैथिलयज्ञात्मजाः सुप्रसिद्धतन्त्ररत्नन्यायरत्नमालाशास्त्रदीपिकान्यायरत्नाकराभिधग्रन्थचतुष्टयी-

प्रणेतारः मीमांसायां अधिकरणप्रस्थानसमीकरणधुरन्धरा इति नैकस्यापीदं विशयाय ॥

ततश्च गच्छता कालेन नवीनाः प्रकाशकारप्रभृतयः प्राचीनमतखंडनादिद्वारा स्वमतानि प्राचीकटन् तत्र नवीनतमः कनिष्ठिकागणनीयसुप्रसिद्धमीमांसकचूडमणिः रुद्रदेवतनुजः आचार्यखंडदेवः भाष्यवार्तिकादीनां आधुनिकदुर्ज्ञेयत्वं अपरिष्कृतप्राचीनग्रन्थतां सुपरिष्कृतनवीनहृदयानावर्जकत्वं चालोच्य भट्टमतेन मीमांसाकौस्तुभाख्यं प्रतिसूत्रव्याख्यानं कौस्तुभमिव भगवतो यज्ञपुरुषस्य द्वितीयाद्येकादशपाद्याः व्यरचयत् । अस्य ग्रन्थस्य तावता विरामं विघ्नादिहेतुकं कैश्चिदुच्यमानं न बहुमन्यामहे । तदनन्तरं ग्रन्थद्वयस्य तेनैव विरचनात् परन्तु तावता शास्त्रस्य सर्वस्य गतार्थतां मन्वानः तावत्येव व्यरंसीदिति ब्रूमहे । ततश्च तस्य किसलयतल्पजकोमलस्वान्तदुर्ज्ञेयत्वं निश्चित्य स्वयमेव तत्संक्षेपरूपां भाट्टदीपिकां प्रथमाध्यायद्वितीयपादमारभ्य आद्वादशाध्यायसमाप्ति अग्रथ्नात् । ततश्च तत्र तत्र कौस्तुभदीपिकोक्तानंशानुद्धृत्य कांश्चिदधिकांश्च संयोज्य भाट्टरहस्यनामकं भट्टमतानुसारिशब्दबोधरीतिप्रतिपादकं प्राणैषीत् ग्रन्थरत्नम् । अयंचाचार्यखंण्डदेवः क्रिस्ताब्दीय 1600, A. D., आदिभागोत्पन्नः वार्धके गृहीततुरीयाश्रमः प्रथितश्रीधरस्वामिनामा काश्यामवशिष्टं वयोभागं व्यनैषीदिति तच्छिष्यशंभुभट्टकृतदीपिकाव्याख्यान्त्यश्लोकतोऽवगम्यते । अपरा च विद्यते व्याख्या । इयं भास्करराजवांचेश्वरप्रणीता चन्द्रिकाचिन्तामण्यभिधा । प्रकृते च आसां व्याख्यानां दुर्ग्रहतां प्रौढैकवेद्यतां स्वयं वाक्यार्थरूपतां मूलार्थास्पष्टयितृतां चालोच्य

व्युत्पित्सुजनानुजिघृक्षया महामहोपाध्यायबिरुदाङ्किताः सर्वतन्त्रस्वतन्त्रप्रज्ञाः अप्रतिहतप्रतिभाप्रसराः भाष्यगाम्भीर्यनिर्णयाद्यनेकग्रन्थप्रणेतारः तिरुवशनल्लूर्ग्रामाभिजनाः तत्रभवन्तः श्रीरामसुब्रह्मण्यनामाङ्किताः भाट्टकल्पतर्वभिधां निवीतान्तभाट्टदीपिकाव्याख्यां विरचय्य मुद्राप्य च स्वधनव्ययेन प्राकाशयन् । अस्य च कल्पतरोः दर्शनमात्रेण अर्थिजनार्था इव व्युत्पित्सुजनाभिलषिता अर्थाः करतलामलकीभवन्तीति स्वात्मैकसंवेद्यमेव सर्वेषां ग्रन्थपरिशीलिकानाम् । अत्र च चित्राक्षेपपरिहारः, आकृत्यधिकरणम्, बलाबलाधिकरणमरुणाधिकरणमित्यादयः तथोपपादिताः यथा तेषां ग्रन्थान्तरगतार्थता न भवेत् । एवमेव तत्र तत्र विरुद्धार्थान्तरकथनेन जनान् व्यामोहयतां अभिप्रायाश्चाखण्डिषत ।

मूल्यं चास्य ग्राहकसौकर्याय सपादरूप्यकमेव व्यवस्थापि ग्राहकाश्च स्वल्पद्रव्यसाध्यं बहुफलदं कल्पतरुमिव कल्पतरुमेनं विक्रीय यथा उपरितनभागमुद्रापणमनतिविलम्बितं स्यात्तथा यतेरन्निति विश्वसिमः ।

प्रार्थयामहे च भगवन्तं सकलकल्याणगुणगणमणिनिधिं वारिजाक्षं सशिरःपातं एषां चिरायुषदानेन यथावशिष्टाः भाट्टदीपिकारहस्यादयः व्याख्याननिरपेक्षदुर्ज्ञेयाः व्याचक्षीरन् तथा सदयहृदयोभूयादिति ।

---

॥ श्रीः ॥

# ॥ नारदनैपुणी ॥

( पूर्वतोऽनुवृत्तम् । )

---

**नारदः**— सुभद्रे! किमिदं कष्टम्! गौरीपूजार्थमागतया त्वया तत्समापनात्पूर्वमेव किमित्यन्विष्यते कार्यान्तरम् ?

**सुभद्रा**— भगवन्! न खलु तथा, कोऽपि रोदिति । प्रतिभाति च स्त्रीशब्द इव । भगवानाश्रयाशश्च समिन्धेतमाम् । मनो मदीयं न सहत इदं कष्टम् । अतस्तत्र गत्वा किमित्यवगत्यागच्छामि ।

**नारदः**— सुभद्रे! शृणु मद्वचनं, तत्किमपि स्यात् । तत्र किमर्थमस्माकं शिरःप्रवेशः । वर्तते बहु कर्तव्यम् । तस्यैव नास्त्यवकाशः मा, मा, शृणु मद्वचनम् ।

**सुभद्रा**— भगवन्! मयि गच्छन्त्यां न खलु भवता विरोधः कार्यः । देह्यनुज्ञाम् । परमहं गच्छामि । न चेदिष्यते सहमयाऽऽगमनं तदात्रैव तिष्ठतु भवान् । प्राणत्राणं हि सहस्रव्रतानुष्ठानाच्छ्रेष्ठमित्युपदिष्टाऽस्मि ज्येष्ठभ्रात्रा वासुदेवेन ।

**नारदः**— तर्हि कुरु यथाभीष्टम् । अभिहितो मदभिप्रायः । न खलु ततो मयि दोष आरोपणीयः, यद्यापतेत्काप्यापत् ।

**सुभद्रा**— किं तावदापतिष्यति तादृशी? न किमपि ।

**नारदः**— तर्हि सुभद्रे! याहि सुखेन । अहमत्रैव तिष्ठामि । सत्वरं प्रत्यागन्तव्यम् (गच्छति ।)

(सुभद्रा सन्ध्यावल्यादीनां वासस्थलं याति)

(सन्ध्यावली रुदती वर्तते)

**सुभद्रा**— हला! का त्वं? अत्राऽग्निं समिन्ध्य किमिति रोदिषि? कः स निकटवर्ती?

**सन्ध्या**— अम्ब! भवती उत्तमेव प्रतिभाति। पापानां वृत्तान्तं किमर्थं जिज्ञाससे? तच्छ्रवणमपि पापाय। अतः परिसमाप्य स्वकृत्यं याहि मार्गान्तरेण। यतः 'कथाऽपि पापानां अलमश्रेयसे।' (रोदिति)

**सुभद्रा**— हण्डे! न खलु तथा, अभिधेहि दुःखनिदानम्।

**सन्ध्या**— देवि! त्वयि तदुक्त्या किं प्रयोजनम्? यदि शृणुयाः दूयेथाः। अतस्तूष्णीम्भावः श्रेयान्।

**सुभद्रा**— न खलु तथा, ब्रूहि, यथाशक्ति करोमि साहाय्यम्।

**सन्ध्या**— भवत्या किं शक्यते? श्वेतवाहनस्य द्वितीययाऽपि न सुसाधमिति खल्वभिहितं मुनिपुङ्गवेन। किं शक्यते भवत्या?

**सुभद्रा**— अहमेव सुभद्रा मयाऽपि दुस्साधं कार्यं किम्? अवश्यं वक्तव्यम्।

**सन्ध्या**— (सुभद्रायाः पादयोः प्रणम्य) देवि! भवत्या अपि दुस्साधमस्ति किं लोके? हे नारायणसोदरि! हे विजयसहधर्मिणि! यद्यभिलष्यते भवत्या किं दुस्साधम्? प्रार्थनां मम सफलयामीति ब्रूहि। वदामि दुःखनिदानम्। प्राणा मम भवदायत्ताः।

**सुभद्रा**— तथैवाऽस्तु, को वृत्तान्तः?

**सन्ध्या**— देवि! अलमलम्, सिद्धोऽभून्मम मनोरथः। मह्यं

माङ्गल्यभिक्षा देया । निकटवर्त्ययं मम पतिः प्राणत्यागाय सन्नद्धो वर्तते । तन्निरुद्धय रक्षणीयाऽहं भवत्या । सापि मम कनिष्ठसोदरी दुर्मनायते । तस्या अपि रक्षणीयं माङ्गल्यम् । एतदेव प्रार्थये ।

सुभद्रा— किमिति स प्राणत्यागाय सन्नद्धः ?

चित्रसेनः— (पुरोभूय) देवि ! विधेयोऽयं रक्षणीयः । निरपराधस्याऽपि मम हननं केनाऽपि प्रतिज्ञातं वर्तते । ततस्स्वयमेव प्राणत्यागश्श्रेयानिति तदर्थं सन्नद्धोऽस्मि । किमर्थमिदं कष्टं भवत्याः ? अबलया त्वया किं कर्तुं शक्यते ।

(अग्नौ प्रविविक्षति ।)

सुभद्रा— न खलु, न खलु, यदि न शक्यते मया भर्तृद्वारा वा पालयामि भवत्प्राणान् । मा दूयस्व, सहस्व किंचित्कालम् । मा खल्वग्नौ पप्तः ।

चित्रसेनः— देवि ! अपि सत्यमिदम् ?

सुभद्रा— सत्यमेवेदम् । माऽस्तु संशीतिः ।

चित्रसेनः— देवि ! धन्योऽस्मि । लब्धप्राणश्च भवामि । वदामि मद्वृत्तान्तम्, अवधानेनाऽनुगृह्यतामयं जनः । अहं चित्रसेनाख्यो गन्धर्वः । मयि नभोमार्गेण गच्छति मयाऽविमृश्योद्वमिते मन्मुखवीटीरसेऽघोयमुनायामर्घ्यप्रदानमाचरतो गालवस्य करपुटे पतिते, तेन चाऽयमपराधोऽबोधकृत इत्यसहमानेन निवेदिते च तद्राज्याधिपतौ, तेन प्रागद्य सूर्यास्तमयादागस्विनं हन्मीति प्रतिश्रुतं वर्तते । नाहं पारयामि तं रोद्धुम् । तथा मरणादद्यैव सन्न-

द्धोऽभूवं प्राणत्यागाय । जन्मान्तरकृतसुकृतवशादभयदानेन रक्षितोऽस्मि भवत्या ।

**सुभद्रा**— केन प्रतिज्ञातम् ?

**चित्रसेनः**— तद्राज्याधिपतिना कृष्णेन ।

**सुभद्रा**— किं ? कः ?

**चित्रसेनः**— भगवान् कृष्णः । देवि ! भवत्यैव रक्षितव्योऽहं यथोक्तम् ।

**सुभद्रा**— हन्त ! किं कृष्णः । मम यवीयान् वा ?

**चित्रसेनः**— आं, आम् ।

**सन्ध्या**— देवि ! माङ्गल्यमावयोर्भवदधीनम् ।

**सुभद्रा**— हन्त ! कः पारयति रोद्धुं कृष्णस्य बाणान् ! कथं पालयेयमेतान् ? भगवन् ! किमिति मामित्थं परीक्षसे ? अज्ञानादभयदानमकार्षमेतेभ्यः। कथमुक्तिमन्यथयेयम् । किं करोमि, महर्षिर्नारदोऽद्यैवाऽभ्यधात् ।

(नारद आगच्छति ।)

**नारदः**— तदैवाऽभ्यधां, तदैवाभ्यधाम् । न मानितं त्वया मद्वचनम् । न खलु प्रविशाऽन्यस्य कार्यं इति तदैवऽवादिषम् । सुभद्रे ! को वृत्तान्तः ?

**सुभद्रा**— को वृत्तान्तः । नैव वर्तते भवतोऽनवगतं किञ्चित् । सर्वस्याऽप्यस्य हेतुर्भवानेव ।

**नारदः**— सुभद्रे कोऽयमपवादः ? ब्रूहि वृत्तान्तम ।

**सुभद्रा**— कार्यगौरवमजानानाऽत्र वर्तमानयोः चित्रसेनतत्पत्न्यो

रभयप्रदानमकार्षम् । अनन्तरमेवाऽवगतं गालवप्रार्थनयाऽद्य सूर्यास्तमयात्प्राग् हन्मि चित्रसेनमिति, कृष्णेन प्रतिश्रुतमिति । किमत्र प्रतिविधीयते ? उक्तिविरुद्धाचरणं हि महते भवति दोषाय । विशिष्याऽपयशस्करं च ।

नारदः— कोऽयं धर्मसंकटः ?

सुभद्रा— न खलु दूयतां भवान् अजानान इव । किं सत्यमेव वृत्तान्तोऽयं नाऽवगम्यते भवता ?

नारदः— जानामि किञ्चित् । अत एवाऽभ्यधां न याहि तत्रेति । किमतीतकार्यानुशयेन ? इतः परं कर्तव्यं किम् ?

सुभद्रा— इतःपरं कर्तव्यं किम् ? भवतैव वक्तव्योऽत्र कोप्युपायः । भवानेव खलु हेतुरस्य ?

नारदः— आगस्वी कश्चित्, तत्फलभोक्ताऽन्यः । अत्याश्चर्यमिदम् । कोऽर्थः तच्चिन्तया ? इतः परं किं करिष्यसि ? सुभद्रे ! ब्रूहि ?

सुभद्रा— कथमपि रक्षणीयं मद्वचनम् । तत्र च मार्गो भवतैव वक्तव्यः ।

नारदः— दुस्साधं,— इदं कार्यम्— कश्शक्नोति कृष्णस्य पुरतःस्थातुम् ?— तत्राऽपि तस्य कनीयसी त्वम् ।

सुभद्रा— किं तेन ?

नारदः— न कोऽपि तेन विशेषः । तथाऽपि कोऽपि मार्गः प्रतिभाति । वर्तते च तस्याऽयमन्तरायः ।

सुभद्रा— कीदृशो मार्गः ? कश्चाऽन्तरायः ?

नारदः— कृष्णसदृशो वीरो विजय एक एव— तर्हि भवती च

सहजा कृष्णस्य । कृष्णश्च विजयस्य स्यालः । उभावपि मित्र-धेये । किमत्र क्रियते?-- हुम्, किमिदं कष्टं मम! किमर्थं तादृशं वचनं, कलहप्रियो नारद इत्यपवादो वा किमर्थः?

**सुभद्रा**— भगवन्! न खलु तथा, नाऽहं कदाचिदपि तथा मन्येय । ब्रूहि तं मार्गम् ।

**नारदः**— अर्जुनेनैव कार्यमिदं साधनीयम् । नैव तेन विना पारयति कोऽपि ।

**सुभद्रा**— कस्तत्रोपायः--एतच्छ्रवणोत्तरक्षण एव स मह्यं क्रुध्येत् ।

**नारदः**-- किं तेन? प्रथमतोऽर्जुनं वशीकृत्य कार्यमब्रुवन्त्येव ततः चित्रसेनस्य प्राणभिक्षादानरूपनिश्चयवचनप्राप्त्यनन्तरं प्रकृतवृत्तान्तो वक्तव्यः ; तदनु कथमपि परमभक्तेन पार्थेन सह नैव प्रतियुध्येत भगवान् कृष्णः-- तथाऽपि सुभद्रे! कुरु यदभीष्टम् । न खल्वारोपय नारदोऽवादीदिति, मय्यपरा-धम् । अन्ते च भर्तृयवीयसोः कलहमजनयन्नारद इति न मां दूषय ।

**सुभद्रा**-- भगवन्! समीचीनोऽयमुपायः । कथमपि मदुक्ती रक्षणीया । नैव विलम्बितव्यम् । चित्रसेन! सर्वेऽपि यूयं प्रच्छन्ना अत्र तिष्ठत । यावत् प्रहिणोमि दूतम् ।

**सन्ध्या**--
**चित्रसेन**-- } देवि! यथा निदेशः ।

**सुभद्रा**-- भगवन्! सिद्धं खलु भवदागमनप्रयोजनम् । देहि मह्यमनुज्ञाम् ।

नारदः— सुखेन याहि शिवाः सन्तु ते पन्थानः । सत्वरं कृतकृत्या समागच्छ ! भव दीर्घसुमङ्गली ! (सुभद्रा त्वरितं गच्छति) चित्रसेन ! न खल्वितःपरं बिभिहि । सन्तुष्टः तिष्ठ !

(नारदो याति)

सन्ध्या —
चित्रसेन— } भगवन् ! सर्वमपि इदं भवदनुग्रहात्सुसंपन्नं भविष्यति ।

इति सप्तमो निःश्वासः ॥

## अथ अष्टमो निःश्वासः ॥

प्रभाकरः स्वप्रभानिरीक्षणकान्दिशीकान् काऽपि प्रलीनान् शात्रवान् ध्वान्तचयान् गवेषयन्निव नभोमध्यमारोहति । समीरणाश्चाऽऽश्रयमन्विष्यन्तो यदृच्छया लब्धानि चलानि तालवृन्तानि सर्वात्मना सेवन्ते । चित्तवृत्तिरिव वियोगिनां वसुन्धराऽखिलाऽपि सन्तप्ता बभूव । लुब्धेष्विव पान्थेषु समेधते स्माऽति तृष्णा । रमणीव वियोगिनी कार्श्यमभजत च्छाया । समयेऽस्मिन् गालववचनात्सञ्जातक्रोधः कृष्णः प्रासादमधिष्ठाय किमपि चिन्तयन् वर्तते ।

(सुभद्रा समागच्छति)

कृष्णः— आगच्छ सुभद्रे ! आगच्छ ! को विशेषः ? किमर्थमियद्दूरमागताऽसि ? यदि मम दर्शनाय कुतो न प्राहिणोः दूतम् ? किं नाऽगच्छेयमहम् ?

सुभद्रा— न कोऽपि विशेषः, भवन्तं विलोकितवत्या ममातीतानि बहूनि दिनानि । भवद्दर्शनमाकांक्षन्त्येवाऽऽगमम् ।

कृष्णः— अप्यनामयं तत्र भर्तुः ? धर्मपुत्रादयश्च किं कुशलिनः ?

**सुभद्रा**-- सर्वेऽपि कुशलिन एव।

**कृष्णः**-- कुत्र यातोऽभिमन्युः ?

**सुभद्रा**-- गृहे वर्तते, त्वरितमागताऽहं नाऽपारयमानेतुम्।

**कृष्णः**— को हेतुः तावत्त्वरितमागमनस्य ?

**सुभद्रा**-- नाऽन्यत्किमपि। श्व एवाऽऽगच्छेयमित्यभिधाय मृगयार्थं गतस्य नाथस्याऽद्याऽतीतानि चत्वारि दिनानि। कदाचिदत्र किमागतो वर्तते, इति ज्ञातुकामाऽत्राऽऽगाम्।

**कृष्णः**— एतदर्थं शोचितव्यं वा ? सहजमेव खलु राज्ञां मृगयायै गमनम् ? कृतकार्याः खलु ते प्रत्यागच्छेयुः ? अद्यैवाऽवगम्यते मया कष्टं राज्यभरणस्य। कियत्कष्टम्! कियत्कष्टम्!

(दीर्घमुच्छ्वसिति।)

**सुभद्रा**-- किमित्युच्छ्वसिति भवान् ? किमस्ति भवतोऽपि दुःखम् ?

**कृष्णः**— सुभद्रे ! तत्किमर्थं पृच्छसि ? यानि वर्तन्ते लोके दुःखानि सर्वाण्यपि तानि मदीयान्येव। राज्यपरिपालनात् विपिनं प्राप्य गेयपूर्वकं धेनुपरिपालनं श्रेयः। यो यो यद्यदकृत्यं करोति सर्वस्याऽपि तस्य फलमनुभवति राजा। अपराधिनो दण्डयिता च स एव। कियत्कष्टम् ? एतद्विषयकचिन्तया न किमपि प्रयोजनम्। न कोऽप्यलमन्यथयितुं शिरोलिपिम्। पश्य, चित्रसेनगन्धर्वेण नभोपदव्या किं गन्तव्यम् ? किमुद्गमितव्यो मुखवीटीरसः।

( क्रमशः। )

घड्डिमसिरिकपरक्कवालपच्चापत्तिकप्पणचणपच्चायसिसिरसमीरणणा-
मन्तराअणिआम आणुलेवणेहि अज्जसणिवादाए नहाविवआए णिम्मुक्कोक्षि ।

**राजा—** सखे ! सम्यगभिहितं भवता । (उच्चैरालक्ष्य सहस्तनिर्देशं) वयस्य पश्य पश्य । इमानि पचेलिमानि स्वत एव विदीर्णानि वनान्तरेषु सुवर्णसावर्ण्यमावहन्ति निरन्तरं वर्षन्ति रसानिह पनसानि ।

**विदूषकः—** (अवलोक्य साश्चर्यम्) तुह अन्तेउरमज्झावट्टिदस्स बालुज्जाणस्सम्मं वहइ सम्मपरिणम्मफलभरपानान्तानिरन्तरं विहरुक्खसन्तदिं सपुण्णं इणं रण्णं पमदवणफणसाविअएदेवि किंपादेसु फलन्ति । दाव विलोयइस्सम् ।

**राजा—** (स्वगतम्) एनमन्यत्रासक्तदृष्टिं करोमि । (प्रकाशम्) सम्यगुपक्रान्तम् । यदयमेव पुनरवश्यशङ्कनीयनायिकापादाङ्कनदर्शनोपायः । भवतु । किं करोतीति प्रतिपालयामि ।

(इति तथा करोति)

**विदूषकः—** (अधस्तात्स्त्रीणामलक्तकारुणानि पदार्पणानि दृष्ट्वा सभयकम्पम्) हद्धि हद्धि । दारुणणहरपहरणविदायिअसणिहवदत्तविदूसियादुट्ठसद्दूलाणं अपयपंति दिसइ । ता इमं बह्मणं परित्तायदु परित्तायदु ।

(इति सोद्वेगं भूमौ पतति)

**राजा—** (स्वगतम्) एतद्दशना ? ययैव महत्या संप्रत्याचरिता मदनुकूलतया । यदनया पुनरेतेषु यावकारुणेषु पादार्पणेषु सत्त्व-

रुधिरसक्तशार्दूलपदबुद्धिरुत्पादिता । कथमिदमनेनान्यथाचिन्तितमनुमोदयामि । भवत्त्वेवमभिधास्ये । (प्रकाशम्) सखे, मा भैषीः । नूनमेतानि पुण्डरीकमुख्यनिन्दितरूपाणां चरणार्पणानि। भवतु । भवन्तमदसीयदृष्टिपातादुपायेन दूरत एवाहमिह परिहरिष्यामि । (इति हस्तमाकर्षति ।)

**विदूषकः**— (कथञ्चिदुत्थाय) पुणोवि पुण्डरीअमुक्खणिन्दिआमिआणं एदाणं चरणं कणसरणं कहमणुसेरेसि । एद्द अणुसरन्तमं एदाणं दिट्ठिपादापादोदो परिहरिस्सन्ति कहं तुए रण्णा पडिण्णादम् । कहंदतुहवअणविसासेण आरिसे आउलघदेसंणरे· सरअणुसेरेमि । णखु एदं तुह देसगदा जणाविअदुठ्ठमिआ णिदेसहारिणो होमि । ता वयं सदेवालअङ्गमिस्सं मह तुए सहायदाए होदव्वम् ।

**राजा**— (खड्गं निष्कोशयन्) स एष खड्गो मे निष्कोशः खण्डितमहावहारः पुनरत्रापि भवन्तमक्षतं रक्षिष्यति । तदिह मा भैषीः ।

**विदूषकः**— (खड्गधाराबिम्बितमात्मानमवलोक्य सभयकंपमक्षिणी निमील्य) इमिणं अच्चुग्गमण्डलग्गं णरेसरेकासेन्तरे झडिइ करेमि । अण्णहा मद्दाकुलीणोऽयं बह्मणो । हं तंथपडिहलिदो गाहोवि अविदारिददेहो जाव होमि ।

**राजा**— [सोपहासम्] [खड्गं संकोचयन्] सखे! कोशान्तरितः खड्गः । अहो कथमायुधावलोकनेऽपि सभीतिरग्रजातिः ।

**विदूषकः**— (अक्षिणी उन्मील्य सासूयम्) (संस्कृतमाश्रित्य)

'परिक्षार्थमप्यायुधं नाददीत' इति तत्तभवन्तेण आवत्थम्बेण मुणिणा बह्मण धम्मो एव्वं ववट्ठाविदो । तमतिमेत्तमणुसर तेण मए बह्मणुत्तमेण दंसणं विण करणिज्जन्ति एव्व करियदि महधिरङ्कायबलं साहसं वि किन्तु मं ण जाणासि । [इति खड्गं गृह्णाति ।]

**राजा—** [खड्गं दत्त्वा] [स्वगतम्] करालतरकरवालकरं मां निध्यायते । मुग्धा जना भजेयुरतिभयमिति सन्दिहानस्य मम सहायकमाचरितमनेन तावदेतामसिधेनुलताम् । दहत्त्वेष मूर्खः । भवतु । एवमभिधास्ये । [प्रकाशम्] तथैव त्वं निर्मर्यादसत्वधैर्यशौर्यादिगुणगणानां विपणिः । अतस्तव हस्तमेव पुनरविनयमेदुरपरनरस्वामिपरिषदविरतरुधिरास्वादनव्यग्रो मण्डलाग्रोऽयं मण्डयतु ।

**विदूषकः—** अहइम् । सच्चं एव्व उच्चरियं अय्येण महाराएण ।

(अतिभारतया खड्गं शिरसा वहन्मन्दं मन्दं परिक्रामति)

**राजा—** अनार्यमिति धार्यते शिरसा खड्गः ।

**विदूषकः—** (स्वगतम्) एदबलाहावं अहकह कहेमि । होदु एव्वं दाव (प्रकाशम्) महारायकरग्गहजोग्गं खग्गं अहं ब्रह्मणो वि कहं हत्थे वहेमिति उत्तमङ्गेण एव्व वहेमि ।

[उभावपि कतिचित्पादानि परिक्रामतः]

**राजा—** [पुरतोऽवलोक्य] किमिदमग्रत एव प्रत्यग्रतरसमग्रसहकारपल्लवतल्लजास्वादनविकस्वरसङ्गीतभङ्गीसमानमङ्गीकृतमलयाचलनिलयानिलाहतीरितमालतीकिसलयाघट्टनकरतालयानुकूल्यमु-

द्वेल्यमानरुचिरकलापं उररीक्रियमाणविविधमुखाभिनयं उदञ्च्यमानचतुरचरणलयं, उरीकृतनटनरीमयूरीकुलं निरीक्षमाणैर्विकचपयोजमणिमयोदग्रभद्रासनमध्यमध्यासीनैः राजहंसैरविरतप्रशंसैकतानसनादमधुकरनादैरुपशोभितोऽयं प्रदेशः निखिलऋतुधर्मोपचितमुपवनमिव नयति नयनयुगलममन्दमानन्दम् । यतः—

क्रमुकवकुललोध्रनालिकेरी
कनकवटीररसालसालमुख्याः ।
सममिहतरवः समेधमानाः
विदधति मोदममी विभिन्नरेखाः ॥ ९५ ॥

किंच—

वीक्ष्यन्ते मणिवेदिका विटपिनां रेखाजुषामन्तरा
सारण्यः सुमधूलिकल्पिततटाः सान्द्रा मधूलीरसैः ।
कर्णालंकृतिघण्ठिकाघणघणत्काराभिरामा मृगाः
विस्तीर्णाश्च चतुष्किकास्तत इतो विश्रान्तये निर्मिताः ॥

**विदूषकः**— [सोपहासम] जाणेमि जणेसर तुह अहिच्छिदम । अपुव्वसन्दंसणकोदूहलं उप्पाय अन्तेण मह अप्पा भवन्तेण आलङ्घियदि । ता एत्थ एव्व उहक्खसयासे संविसेमि । वयस्स जुह आदिमदं तुहं सञ्चरिय एत्थ एव्व पासुन्तेण मए सन्दुदियोजेमणत्थं देवालयं गच्छेहि ।

**राजा**— किमेवं भाणितव्यम् । बालमित्रं खलु भवान् ।

**विदूषकः**— (श्रुतिमभिनीय) अहो कोवि सवणसुहावहो सुहारसोविय सुणीयदि एसो आलावो । सहे किमेदक्कहेमि परमेत्थदो ।

**राजा—** (स्वगतम्) अहो पुनरिहोपवने सैषा योषा मणिवल्लकीमङ्गुलीपल्लवेन क्वापि निक्वाणयन्ती तिष्ठति । कथमिवास्मै कथयामि परमार्थतः । कथं तावदिदमपलपामि । भवत्त्वेवं तावत् । (प्रकाशम्) सखे । सारङ्ग ! द्वीपान्तरगतकोकिलवाण्याः पुनरयं विलासः ।

**विदूषकः—** अह्म केरदिवगदाए कोइलवाणीए एक्कोसा कोइलवाणी सहस्सहायादिसइदा । ता एसा तुह एव्व आहरणिज्जा ।

**राजा—** [स्वगतम्] [साश्चर्यम्] फलतु सेयमुपश्रुतिः । तावदेनमन्यासक्तचित्तं करोमि । [प्रकाशम्] [अङ्गुल्यग्रेण वृक्षाग्रं प्रदर्शयन्] सखे वृक्षाग्रे व्यायमात्रमिदं मधुछत्रं दृश्यते ।

**विदूषकः—** [दृष्ट्वा साश्चर्यम् आवेष्टितमुत्तरीयमुपबर्हयन्नुत्तानशयस्तत्रैवासक्तदृष्टिर्मधुच्छत्रं पश्यति]

**राजा—** अस्तु । एषमेव समयः । (इत्युपवनं प्रविशति)

[मुहूर्तमवधार्य सविस्मयम्]

वीणातन्त्रिगुणक्वणेन गुणितं विष्टब्धसत्स्वारवं
वामाक्षीकलकण्ठनालगलितं बालानिलेनाहृतम् ।
सङ्गीतं बत जातु जातु विलसत्तारस्वरं केवलं
दूरादस्फुटरागभेदमधुना दुग्धे सुधां श्रोत्रयोः ॥ ९७ ॥

(समन्तादवलोक्य साश्चर्यम्)

अमी वेदीभागाः क्वचिदरुणकान्तोपलमयाः
ज्वलन्तः पर्णान्तर्विगलितसमग्रातपतया ।
यदा नीतं गीतं तदिदमनुकूलेन मरुता
तदैव स्विद्यन्ति स्फुटमिहसमाकारनिनदम् ॥ ९८ ॥

[अधस्तादवलोक्य] नेदीयसा वेदिपथेन पुनरेतेन सौत्रामणिभिरिह मणिभिराकुलितेन पार्श्वयुगलबालवकुलपादपस्तम्बकान्तरपरिप्रस्तकोमलतरपरागभरमेदुरतया सुलक्षितविन्यासैः कन्यामणिचरणाङ्कैरधिगतधन्यभावेन तदभ्यर्णमुपगम्य कर्णरसायनं गानं सम्यगाकर्णये। (इति परिक्रम्य मुहूर्तं दत्तमाकर्णयति।)

अङ्गीकृतं नताङ्ग्या सङ्गीतं वल्लकीरवोल्लसितम्।
मिलितं मिलिन्दनादैः कोकिलकोलाहलं विडम्बयति॥

(भूयोऽपि कर्णं दत्त्वा सविमर्शम्)

विशदगमकभेदं वीतकाकुप्रकाम-
प्रकटितपटुतालप्राप्तिसप्राणशक्तिः।
मुहुरुपचितनादा मूर्छनास्वच्छनाना-
स्वरनिकरविभेदं श्रूयते व्यायतेयम्॥ १००॥

किमियमौडवो वा षाडवो वा संपूर्णो वा रागः। (पुनरपि सविशेषमाकर्णयन्) असौ संपूर्ण इति मे निर्णयः। सप्तापि यत्तावदावर्तन्ते मधुरं ते स्वराः। एतेषु—

आरूढषट्श्रुतीतावदुभावृषभधैवते।
निषादः काकलीसंज्ञो गान्धारश्चान्तराभिधः॥१०१॥

शिष्टास्त्रयोऽप्यविकृता एव श्रूयन्ते।. तदयं नाटिराग एव। भवतु। तामेव द्रक्ष्यामि। [इति नाट्येन कतिचित्पदानि परिक्रामन्। पुरस्तादवलोक्य साश्चर्यानन्दम्]

माद्यत्षट्पदशोभिपुष्पविगलन्माध्वीरसस्रोतसः
पाटीराद्रिसमीरबालकचलच्छाखाः शिखाः शाखिनः।

एते गीतमिहावकर्ण्य कुतुकादेणीदृशाङ्गीकृतं
सानन्दाश्रुभरं ध्रुवं विदधते श्लाघाशिरःकंपनम् ॥१०२॥

[ भूयोऽपि कर्णं दत्वा ]

कङ्कणघणघणरणितैः
सविधस्थसखीजनस्तवैरपि च ।
कलिपतकरावलंबनमेत-
द्गीतं समेधते सुदृशः ॥ १०३ ॥

तदिह सन्निहिततरमहितबालकर्पूरकदनकाननपरिणतिविदलितदलविगलितकर्पूरपूरकरीषपाषाणस्वच्छन्दकन्दलितचन्दनविटपिविटपझाटगाढावलीढाधिकतमैलालवङ्गलतावितानप्रच्छायशीतले मरतकचतुष्किकातले पुनरवलेयमनङ्गावलेपादयसिद्धमूलिकामुग्धगन्धर्वविद्येव मूर्तिमती कर्णामृतवर्तिकायमानं गायन्ती परिजनाभ्यामुभाभ्यामुपास्यमाना तिष्ठति । भवतु तावत् । अत्रैव चन्दनलतानिकुञ्जे निगूढोऽहममुष्या मृगाक्ष्या रूपातिशयं द्रक्ष्यामि ।
[इति निभृतपदं तथा करोति]

[ ततः प्रविशति मरकतवेदिकायामुपविष्टा उपवीणयन्ती नायिका सखी चेटी च ]

राजा— [ साश्चर्यानन्दानुरागम् ] नूनमियं नासासादितनासामणी रमणी । [ पुनर्निरूप्य ] अहो निर्वापितरतिगर्वातिरेकमस्याः सर्वावयवलावण्यम् । [ केशपाशं निरूप्य ]

अत्यायतानमुष्याः स्रष्टा केशान् सकौतुकं सृष्ट्वा ।
अनतिक्रमाय पदयोरद्धा तेषामरालतामाधात् ॥ १०४ ॥

नूनमस्या महीतलस्यालंकृतेरतिनिबिरीसकबरीभरसौन्दर्यलव-चौर्यमिथ्यापवादादत्याहितेन सत्यापनमत्या परमद्यापि वनपद्यानु-सञ्चरन्ती चञ्चुपुटेन कञ्चुकिगणग्रहणसोत्कर्णा नीलकर्णाः।
(अक्षिणी निरूप्य)

तारल्यविभ्रमतरङ्गिततारकं त-
दस्या विभाति नयनद्वयमंबुजाक्ष्याः ।
आकर्णजाहमवगाहमवाप्य रुद्ध-
मत्याकुलं मुखमिवाखिलमावरीतुम् ॥ १०५ ॥

किञ्च—

स्पर्धावशेनेव परस्परस्य
दृशौ भजन्त्यावतिदीर्घभावम् ।
उदीक्षितुं प्रापि समुन्नतत्वं
मध्यस्थया नासिकया मृगाक्ष्याः ॥ १०६ ॥

(कपोलद्वितयमालक्ष्य)

नूनमप्रतिहतमण्डलाभोगं द्विधा कृतेन सुधासूतिमण्डलेन तावदन्तरा कलितदलितभागेन गल्लयुगलमस्याः स्रष्टुमंबुजविष्टरेण।

अन्तर्निश्च्योतदमृतस्रोतः श्रोत्ररसायनम् ।
गानव्याजेन गन्धोपगतेरुज्जृम्भते यतः ॥ १०७ ॥

[मुखमवलोक्य] असंशयमस्या हंसगमनायाः कैरवधवगौ-रवधनचोरवदनमरीचिवीचिकया पराजिताडंभरमंबुरुहनिकुरुम्ब-मम्बरमणिबिम्बरचितदृष्टिशम्बरमधितिष्ठदतिनिष्ठुरमद्यापि दुश्चरं तपश्चरति । [ आपादचूडं विलोक्य ]

तत्प्रसीदास्मै दासजनाय । संप्रति समाह्वयामि चेटीः । अहो जयसेने, विजये, भो धूमिनि, गोमिनि ।

( ततः प्रविशति जयसेना विजया गोमिनी धूमिनी च । )

**जयसेना**— स्वामिनि, सज्जाऽहम् ।

**विजया**— अहमपि ।

**धूमिनी**— इयमस्मि ।

**गोमिनी**— अहं च ।

**सर्वाः**— आज्ञापयतु देवी ।

**निम्बवती**— (अधरकं निर्दिश्य ।)

**सेव्योऽयं नवपल्लवारुणकरो लावण्यपाथोनिधिः**
**सौशील्यादिगुणोज्वलो मम पुनःसज्जन्मभाग्योदयः।**
**मृद्वीकामृतभक्षणैरहरहः संवर्ध्य तं श्रद्धया**
**गानालापमरन्दपानमुदितं कुर्वन्तु चेट्यो मम ॥ १० ॥**

**जयसेना**— स्वागतमहो महानुभाव, मानवशार्दूल, ।

**विजया**— स्वागतम् ।

**धूमिनी**— स्वागतम् ।

**गोमिनी**— स्वागतम् ।

**अधरकः**— मुदिदे म्हि णेण कुशळप्पण्हेण । संवइ जिण्णाशू हगे होदीए णामहेअम् ।

मुदितोऽस्म्यनेन कुशलप्रश्नेन । संप्रति जिज्ञासुरहं भवत्या नामधेयम ।

**विजया**— देव, विजयाऽहम् ।

**निम्बवती**— यूयममुं महानुभावमस्मदुद्यानं नीत्वा सम्यक् स्नपयित्वा कुंकुमपटवासधूळिभिः परिलिप्य माधुर्योपपन्नानि नानाविधान्यास्वाद्यवस्तूनि च दत्वा भवतीभिरहं सत्वरं ज्ञापनीया ।

(इति सहाधरकेण सर्वाः निष्क्रान्ताः)

**इति मिश्रविष्कम्भः ।**

(ततः प्रविशति प्रदोषः ।)

**प्रदोषः**— न जाने यदि प्रबुद्धा न वा निम्बवती । को वा जीवस्तस्या दृष्टिपथमवातरत् । (इति चिन्तयन् किञ्चिदन्तरं गत्वा पुरोवलोक्य) अहो ! अत्रैवाभिवर्तते मे नर्मसचिवः । सखे प्रमोह, कस्ते वृत्तान्तः !

(प्रविश्य । )

**प्रमोहः**— महाराज, आश्चर्यमाश्चर्यम् । देवी निम्बवती कञ्चित् रासभमनुरक्ता । अवन्तीनगरात् कतिचन तन्तुवायप्रभृतयो नीचपुरुषा निद्रान्तीं देवीमजानानाः तच्छयनदेशं समया यदि-न्द्रवर्मणः परिणयदिवसे प्रयोक्ष्यन्ते तत् प्रकरणं प्रथमं गूढं नाटयितुमारेभिरे । तेष्वेकतमोऽश्मकेन्द्रवेषं धृत्वा किञ्चिन्नाटित्वा यवनिकामिव निकुञ्जं प्रविष्टः । तदाऽहमपि तं सुभगम्मन्यमनु-गत्य तच्छीर्षस्थाने गर्दभशिरः स्दापयित्वा तं नृखरमकरवम् । तथाविदमेनं दृष्ट्वेतरे सर्वेऽपि नटा भयेन प्राद्रवन् । स तु तत्रैव निषद्यात्मविनोदनार्थं जगौ । अत्रान्तरे तद्गानाकर्णनेन प्रबोधिता निम्बवती प्रणयेन तमेव रासभं बहुधाऽनुनीय तस्या-

व्याशामुत्पाद्य स्वनिकटे वासयित्वा वस्त्राभरणजातैः सन्तोष्यानवरतगानवर्षेणाह्लादयति । तदवलोक्य विस्मयस्य पराङ्कोटिमापन्नो देवसकाशमहमुपासरम् । इतः परं देव एव प्रमाणम् ।

**प्रदोषः**— अस्तां नामेदम् । अवन्तीयुवानं प्रति किं वा निर्वर्तितो मत्सन्देशः ।

**प्रमोहः**— महीपते, देवस्याज्ञां शिरसा वहन्वनमखिलमन्विष्य निद्रानिमीलितनयनं तं तरुणमुपलभ्य न्यषिञ्चं कुसुमरसं तल्लोचनयोः । सविधे तस्य सा तरुण्यप्यस्वाप्सीत् । तामेवासौ द्रक्ष्यति स्वप्नावसाने ।

(ततः प्रविशति कौमुदी मकरन्दश्च ।)

**प्रदोषः**— संप्रत्यन्तरितास्तिष्ठ । अयमेव स युवा मया निर्दिष्टः ।

**प्रमोहः**— (सम्भ्रान्तः) इयमेव सा तरुणी । परं न कदापि मया दृष्टचरोऽयं तरुणः ।

**मकरन्दः**— अयि मानिनि, किमेवमधिक्षिपसि मां त्वत्प्रणयार्द्रार्द्रमानसम् ।

**कौमुदी**— (सविषादम्) न केवलं त्वमधिक्षेपार्हः किं तु शापार्होऽपि । अस्मद्दयितवसन्तजीवितं प्रति त्वय्येवास्ति मे शङ्का । अरे दुरात्मन् मकरन्दापशद, यदि प्राणिति वसन्तस्तदा न कदापि मामनाथां शरारुभीषणे कान्तारे निदान्तमिर्धरात्रे मुक्त्वा गमिष्यति (अश्रूणि मुञ्चन्ती ।) हन्त! कुटिलोऽयं कालः । एवमतिनृशंसः पापाग्रेसरस्त्वमिति स्वप्ने न विदितं मन्दभागिन्या मम । एष एवाधुना महोपकारस्त्वत्तः प्रार्थ्यते । तयैवासिधा-

रया नय मामपि वसन्तनिकटम् । नृशंसतरं किल जीवितं यदद्यापि नोत्क्रामति । हा नाथ दयित वसन्त कौमुदीयजीवित, कुत्र गतोऽस्यविगणय्य मां त्वदेकशरणाम् । यद्यन्तर्हितो भावजिज्ञासया नायमवसरः परिहासस्य । हन्त! किं करोमि । निखिलमपि बान्धवजनं तृणाय मत्वा धिक्कृत्य पितरौ विहाय लज्जामपहाय धृतिं निवार्य विनयमविगणय्य जनापवादमुलंध्य राजशासनमुत्सृज्य समयाचारं परित्यज्य शीलमविचिन्त्य कुलं विसृज्य यशो रागोन्मादेन माता च पिता च प्रियवल्लभो वसन्त एवेति दृढमाकलय्य त्वामेवानुगतामेवं विप्रलब्धुं नार्हसि । (किञ्चिद्विचिन्त्य ।) किमनेनारण्यरुदितेन । वेपते मे हृदयम् । सर्वतः कालरात्रिमिव पश्यामि । श्रुयते पिशाचानामतिभीषणः कोलाहलः । इतस्ततः पश्यामि भ्राम्यमाणमलातपुञ्जम् । तत्सर्वथा हतास्मि मन्दभागिनी । नियतमेव मकरन्दहतकेन स्मर्तव्यां गतिं नीतो वसन्तः । अन्यथा कथमेवं प्रलपन्तीं कौमुदीं नानुकम्पते ।

(इति मुर्छति ।)

**मकरन्दः**— (पठान्तेन वीजयति ।)

**कौमुदी**— (संज्ञां लब्ध्वा ।) रे महापातकिन्, पश्यामि त्वन्मुखे तादृशपापकर्मणश्चिह्नानि ।

**मकरन्दः**— (सप्रणयशोकम् )

त्वयैवाहं हतस्तन्वि, मृतवन्नष्टचेतनः ।
तथाऽपि शोभते, भद्रे, त्वन्मुखामलचन्द्रमाः ॥ ११ ॥

जीवयैनमङ्गार्तमालम्ब्य करुणां सखि ।

**कौमुदी**— किमेतेन वल्लभस्य । हा मकरन्द, देहि मे दयितम् ।

**मकरन्दः**— यदि वसन्तो लोकान्तरं गतस्तन्मे हर्षयित्वेहि ।

**कौमुदी**— (सक्रोधम्) किमात्थ रे मूर्ख, किमेवमतिनिष्करुणोसि? कथं वा व्यवसितं हन्तुं महाभागम् । यद्यहमबला किं दैवमप्यबलम् । शङ्कितपूर्वमेव त्वयैव व्यापादनं वसन्तस्य । (सास्रम्) मदुपयममपेक्ष्य किलोपयमं नीतो जगदलङ्कारमणिर्दयितवसन्तः । धिङ्मामेतादृशपापाचरणनिदानम् ।

श्मशानपूतनाकार, दूरतो याहि साम्प्रतम् ।
सनिद्रो वा विनिद्रो वा प्रियो ब्रूहि यथा हतः ॥ १२ ॥

**मकरन्दः**—

सत्यं ब्रवीमि तव शोकनिरासहेतो-
जानीहि कौमुदि मया न हतो वसन्तः ।
लोकान्तरं न च गतस्तव रागपात्रं
किं वा मुधा प्रलपसि प्रणयेन भद्रे ॥ १३ ॥

**कौमुदी**— वसन्तः स्वस्थो वर्तत इति वचनमाकाङ्क्षामि ।

**मकरन्दः**— तथा चेत्को वा मे लाभः ।

**कौमुदी**— यदितः परं कदाचिदपि मां न द्रक्ष्यसीति । अपसरामि ते जुगुप्सितात् सन्निकर्षात् । वसन्तः प्राणितु वा न वा । त्वं पुनरपि मां न पश्येः । [ इति निष्क्रान्ता ।

**मकरन्दः**— (सखेदस्मितम्)

श्रान्तोऽस्मि तामनुगतो मुहुरात्तकोपां
दौर्भाग्यभाजनमहं बहुधापि भग्नः ।
तत्सङ्गमाय किल धावति मानसं मे
सर्वङ्कषा भगवती भवितव्यतैव ॥ १४ ॥

( किञ्चिदन्तरं गत्वा भूतले निविश्य ) अत्रैव निद्रामनुभूय पुनरपि कौमुदीमन्विष्यानुनीय परीक्षिष्ये भागधेयम् ।

( इति वामभुजमुपधाय शेते )

**प्रदोषः**— [ सशोकम् ]

प्रमोह त्वं प्रमुग्धोऽसि कथमेवं स्वकर्मणि ।
विरागिणं विमुच्यैव रागिणोऽक्ष्णो रसः कृतः ॥ १५ ॥

**प्रमोहः**— अलंध्या नियतेराज्ञा ! तस्मान्मुग्धं मया प्रभो,

**प्रदोषः**— सम्प्रत्यधरीकृतमातारिश्वा जवेन परिक्रम्य कृत्स्नमरण्यमनङ्गतापतप्तां सौदामिनीमिहानय । अहं चास्य मकरन्दस्य पक्ष्माण्यनेन सुमरसेन सिञ्चामि ।

**प्रमोहः**— अधुनैव सरामि जवेनातिक्रान्तराघवशरः ।

(इति निष्क्रान्तः ।)

**प्रदोषः**— (मकरन्दस्य पक्ष्माणि कुसुमरसेन सिक्त्वा ।) प्रभावेनास्य सौदामिनीं दृष्ट्वा मदनातुरो भव ।

(नेपथ्ये ।)

विद्याधराणामधिपस्य दूतः
सौदामिनीमानयतीह वेगात् ।
अन्वीयमानां तरुणेन तेन
योऽसौ प्रमुग्धो मम तु प्रमादात् ॥ १६ ॥

(प्रविश्य ।)

**प्रमोहः**— देव, सम्प्रत्यनयोश्चेष्टितं क्षणं पश्याव: ।

**प्रदोषः**— विदूरे तिष्ठ । उच्चैर्भाषमाणयोरनयो: कण्ठरवेण प्रबुद्धो भविष्यति मकरन्द: ।

**प्रमोहः**— विचित्रोऽयं सन्दर्भ: । अधुना द्वावपि तरुणावेनां सौदामिनीं कामयिष्येते ।

(इति सहर्षं नृत्यति ।)

( ततः प्रविशति वसन्तेनानुगम्यमाना सौदामिनी )

**वसन्तः**— अयि सौदामिनि, सत्यमेव त्वामनुरक्तोऽहं मदनस्य त्रिलोकीविजयवैजयन्तिकाम् । कथमपहसेयं प्राणसमाम् । उपहासादयो न जात्वश्रुपुरस्सरमायान्ति । निरीक्षस्व मे वदनम् । कुरुष्व सदयं मानसम् । सकामो भवेयम् । हन्त ! निरनुक्रोशे कथमेवमपगतदाक्षिण्यमाचर्यते ।

**सौदामिनी**— (सरोषम् ) किमनेनासत्यशपथेन । नन्वहं सौदामिनी । जानताऽपि त्वया कथमेवमुपक्रान्तम् । यदि त्वद्वशगा लावण्यमञ्जरी कौमुदी कथं वा दिनामेनामवलेपेनैवमुपहससि । किमहं न जाने कौमुदीमयप्राणस्त्वमिति । गच्छ खल, कौमुदीवल्लभ इत्येव त्वयि मे बहुमान: ।

**वसन्तः**— विवेकशून्येन किलाालुनीतपूर्वा कौमुदी ।

**सौदामिनी**— किं वा सहसेऽन्यं कौमुद्या: पाणिग्रहीतारम् ।

**वसन्तः**— मकरन्द: खल्वधुना कौमुदीमनुरक्तस्तत्तेनैवोपयन्तव्या कौमुदी ।

**मकरन्दः**— ( प्रबुध्य ) सौदामिनीं दृष्ट्वा ।

रतिर्वा लक्ष्मीर्वा त्रिदिवरमणी वेयमबला
विधात्रा सृष्टा वा युवनयनसम्मोहमनसा ।
अहो रामा रम्या मदनबुधजैत्रप्रहरणं
मया बाला दूना बहुविधमधिक्षेपवचनैः ॥ १७ ॥

( इत्युपसृत्य ) अयि सौदामिनि, क्षमस्व मेऽपराधम् । परित्यज्य माणिक्यं गैरिकपरिग्रहायासं विचिन्त्य वारं वारमधिकं लज्जे । समक्षं सौदामिन्याः केयं कौमुदी । विवेचनाराहित्यादेव मया कौमुद्यनुसृता । भद्रे, परिष्वजस्व माम् । नो चेन्न मृष्यति मां जीवितुं वसन्तबन्धुः ।

**सौदामिनी**-- हन्त ! घोरघोरमिदम् । यदात्मविनोदनायारब्धोऽयं परिहास इति जाने । यदि युवां मर्यादाभिज्ञौ नैवमप्रियमलीकमाचारिष्यथः । मां द्विष्टो युवां । अहमपि जाने । उभाभ्यामपि सम्भूय किं वा परिहासितव्यम् । आकारेण मानुषावपि गुणेनापि यदि मानुषौ विनीतां वनितां नैवमवमन्येयाथाम् । मद्विदितेऽपि युवयोर्मयि विरागे किममुना सत्यवचनेन शपथगिराऽलीकस्तुत्या च । तत्त्वतो युवां परस्परजिगीषिणौ कौमुद्यामनुरक्तौ । सांप्रतं सौदामिनीमुपहसितुमहमहमिकयाऽपि ।

परिहासवचोजालैरबलानयनद्रयात् ।
यदश्रुपातनं नाम कैषा पौरुषधोरणी ॥ १८ ॥
धीराः सच्चरिता लोके स्वापराधेन साधवः ।
नैवं कलुषयन्त्येव कन्यकानां क्षमाम्बुधिम् ॥ १९ ॥

 



वेदान्तदीपिकानाम्नी काचन द्रामिडभाषामयी मासिकपत्रिका मद्रपुरीतः बहिरवतार्यमाणा श्रीविशिष्टाद्वैतसिद्धान्तान् सरसमुपदिशन्ती श्रीवैष्णवमतानुयायिनामत्यन्तमुपकरोति । अस्याः पत्रिकायाः संपादकः श्रीमान् दिवान्बहदूर् बिरुदधारी T. T. रङ्गाचार्यमहाशयः । स हि अभिजनः विद्यावान् धनिकः आस्तिकाग्रेसरश्चेति न खलु न विदितमेतद्देशनिवासिनाम् । विगलितवयसां पार्थिवव्यापारेभ्यः प्रायो विरक्तानां आस्तिकमणीनामसौ महाशयः नियतमादर्शो भविष्यतीति जानन्तो वयं नितरां संतुष्यामः ॥

अद्य अहोबिलमठाधिपत्यमावहन्तः संयमीन्द्राः अध्यात्मविद्यापारङ्गताः अन्तर्मुखाः त्रिभिरपि करणैः पार्थिवव्यापारेभ्यो विरक्ताः श्रीमन्निगमान्तमहादेशिकैः प्रणीतान्ग्रन्थान् सम्यक् संशोध्य मुद्रापयित्वा श्रीविशिष्टाद्वैतमतप्रचारका भूत्वा मठाधिपतिभिरेवं खलु वर्तितव्यमित्यात्मानुष्ठाने प्रदर्शयेयुरिति दृढं विश्वसिमः ॥

---

READY FOR SALE.

# Dharmakutam

## PART I.

THIS is a rare work hitherto unpublished. The author is one Tryambakaraya Makhi a minister at the Court of King Ekkoji of Tanjore. The manuscript of the book was found only in the Tanjore Palace Library. The work consists of six dissertations in Sanskrit on the six kandas of Sri Valmiki Ramayana. The object of these lectures is to convince the public that the Ramayana is not a mere chronicle of the life of Sri Rama but that it is chiefly intended to inculcate a right conception of one's Dharma. Each incident therein depicted, each portrayal of character is chiefly intended to expound some one or other of the several aspects of Dharma. The lectures are all in very simple flowing style easily understandable by all, full of excerpts from the Dharma sastras in justification of the intrepretations given of the Ramayana. The sample pages would give a clear idea that this kind of intrepreting the Ramayana, not as a mere epic detailing the story of Rama but as an allegory teaching morals and duty, was a desideratum up to now. The author who seems to have lived in the seventeenth century has performed his task in such a marvellously lucid manner that when we read the manuscript we became very eager to print and publish it at once. Since we found the lectures worth earnest study we resolved to print them in a most handy form and to publish them in parts so that the public may not have to wait till they are completely printed. The size of the book is Royal 16mo. Each part consists of two hundred pages and is priced at **Re. 1.** only.

THE MANAGER,
Bookselling Department,
SRI VANI VILAS PRESS,
*SRIRANGAM.*

## विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).
6. Annual subscription is Rs. 3 only. including postage.



कालस्यास्य प्रभावादतिविरसतया मीलितान्वेदमार्गा-
नार्याणां स्वीयवाक्यैः सपदि विघटयंस्तस्य विस्तारमिच्छन् ।
बीजानां गर्भितानामधिकरसतया तत्र वृद्धिं चिकीर्षुः
नाम्ना रामेश्वराख्यो हरिपदघटितो राजते राजराजः ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिराहृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ] राक्षसवर्ष कार्तिकमासः । [ संचि. ८.

## सुभाषितानि ।



आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १ ॥

मृत्योर्बिभेषि किं मूढ ? भीतं मुञ्चति किं यमः ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ २ ॥

स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि ।
आहारोऽपि न रोचेत किमुतान्या विभूतयः ॥ ३ ॥

धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति ।
आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥

केचिद्वदन्ति धनहीनजनो जघन्यः
केचिद्वदन्ति गुणहीनजनो जघन्यः ।
व्यासो वदत्यखिलवेदविशेषविज्ञो
नारायणस्मरणहीनजनो जघन्यः ॥ ५ ॥

॥ श्रीः ॥

# ॥ पलाण्डुप्रार्थना ॥



अयि भो भरतभूनिवासिनः, पवित्रतमे पुराणप्रथिते हिंदुभूभाग एव मे जन्माऽभूदित्यत्र नास्ति यद्यपि बलवत्प्रमाणम्। तथाप्यन्यदेश आसीदित्यत्रापि नोपलभ्यन्ते प्रमाणानीति, सिध्यति जनिरत्रैव म इत्यास्तां तावत् ॥

मदीयमशेषचरितमुपश्रुत्य, दयार्द्रहृदया वाचकवरेण्याः कालमेतावन्तं जनैर्विहितं विधीयमानं च मयि वर्तनम्, न्यायपथातीतमित्याकलयन्त्येव। न्यायपद्धतिमवलंब्य न्यायदेवतामनुस्मृत्य च यत्श्रावयामि चरित्रमत्यन्तलेशम्, तत्सावधानं श्रवणगोचरीकृत्य विचारान्ते न्यायं च मे वितरेयुरिति महती ममाशा ॥

पाठकमहाशयाः, स नोपलभ्यते यो मां नाभिजानाति। अस्ति सर्वेषां मत्परिचयः। श्रीमत्सु भवत्सु केचिन्मां स्निह्यन्ति। द्विषंति केचिन्नितान्तम्। वेदाध्ययनकर्तारः क्षेत्रनिवासिनो द्विजन्मानश्च एत एव प्रतिपक्षकोटिप्रधानभूता मे। महाभागा इमे मामपवित्रं संभावयन्ति। उपदिशंति चान्यानपवित्रोयमिति। यद्दानुभावा इमे शैशवे मां सानुरागं सानंदमासेवन्ते स्म। मद्विनाकृतं भोजनमेव न बहु मन्यन्ते स्म। हा कष्टम्, त एते कौमारसुहृदं मां सभ्रूभङ्गं सारक्ताक्षं प्रेक्षन्त इदानीम्। 'शास्त्रबहिष्कृतः परिहरणीयोयमित्युद्घोषयन्ति च क्लेशयन्ति दुर्वचनजालैरित्यहो महिमा कालस्य ॥

चिररात्राय विमृशन्नपि न स्मरामि कृतमेतेषामागः । न कमपि पश्यामि त्यागार्ह दुर्गुणं मयि । बाह्यसौष्ठवं मे स्पृहणीयं वर्तते । अनितरसुलभां पांडुतामवलोक्य विस्मयंते वामा वाराङ्गना अपि । स्वर्गाङ्गनानामपि देहकान्तिं धिक्करोति मे कान्तिः कदाचित्रिदिवे सुधर्मसभायां श्रीशचीपतौ सिंहासनमलं कुर्वति, रम्भामुखानां वारवनितानां प्राचलद्गानं । तत्र मन्निंदात्मकं गानमेकं गातुमारेभिरे अप्सरसः । तदा किल यथा दीपरागेण दीपोद्भवस्तथा मद्गानेन समन्तात्प्रादुरासीन्महती पलाण्डुवृष्टिः । तदनु विस्मयकोपसंभृतांतरङ्गा देवा, धिक् धिगित्युत्थायोपसंह्रीयतां गीतमिदमिति महान्तं कोलाहलमकार्षुः । उपसंहृतः पलाण्डुरागः । शान्ता च पलाण्डुवृष्टिः । ततो 'य इतः परं पलाण्डुरागं गायति, स पलाण्डुजन्म यायादिति देवाः सक्रोधं शेपुस्सर्वान् । परेद्युरेव मन्निष्कासनशासनं देवसभायां सर्वसंमतमासीत् । यथा शासनं निष्कासितश्चाहं मगलहस्तं देवैः परोत्कर्षाऽसहिष्णुभिः । विनापराधं विहितं दण्डमेनं को वा साध्विति ब्रूयान्मेधावी । अस्तु दुरत्यया जगदीशेच्छा ॥

यदाहं ययातिरिव स्वर्गात्परिभ्रष्टो भुवमलमकार्षं, तदा किल नित्याभिवृद्धिकामुको हृदयंगमारुणावरणेन परिवृतकलेबरस्समभवम् । केभ्यश्चिन्नरोचते मदीयलोहितावरणरूपम् । दुर्भागधेयमेतन्मे । कथमन्यथा मद्रूपसदृशमेव रमणीकपोलतलसद्रूपं प्रीणयन्ति । कथं च जानन्ति बहुसुकृतलभ्यं तदिति ते ॥

यदि ममाकृतिं दोषदूरेण चक्षुषा पश्येयुस्संतस्तदा, ते मोदकमेव स्मरेयुरित्यत्र नास्ति स्तोकोऽपि संशयो मे । हिंदुभू-

निवासिनां सर्वेषां सर्वशुभकार्येषु प्रथमं वन्दनीयस्य, भगवतश्शिवकुमारस्य प्रीतिभाजनीभूतमोदकाकारधारिणं पवित्रतमं मां तिरस्कुर्वन्ति शास्त्रिणः। न केवलं मामवज्ञैषा स्पृशति, किंतु भगवन्तं गजाननमपीति मन्यन्तां शास्त्रिधौरेयाः। मत्स्याकृतिं पटोलं, मांसखण्डपिण्डाकारं कूष्माण्डम्, पवित्रतरेषु पदार्थेषु परिगणय्य मोदकाकारं मां निर्विशंकं संगिरंते पण्डिता अशुचुरिति। कथमेतन्न्यायसरणिमवलम्बते वचनमेतेषामिति न विद्मः। अद्यापि शास्त्रिप्रकाण्डा अपक्षपातं विचार्य, निर्दोषं मामाकलयेयुः स्वीकुर्युश्चेति ज्यायानभिलाषो मे ॥

द्वैताद्वैतमतानुयायिनां समेषां प्रियोऽयं स्यादिति, कृपालुना देवदेवेन निरमायि मामकीनमन्तरङ्गसौष्ठवम्। तथा हि, अपसारिते प्रथमलोहितावरणे, भगवतः शंकरस्य स्फटिकविनिर्मितप्रतिमेव मूर्तिर्मम चकास्ति ते। यदि मामुपरि मस्तकं छुरिकया कृन्तति जनः तदा भागद्वयेपि श्रीविष्णुलक्ष्मपाञ्चजन्यं दृग्गोचरीभवति। यदि च मां शिरः पार्श्वे कृत्वा द्विधा करोति, तदा शकलयुगलेपि चक्रचिन्हं विद्योतते इति। एवं प्रत्यक्षतो दृश्यमानायामपि मयि दैवशक्त्यां धर्मनेतृभिरित्थमवज्ञासरणिमुपनीतोहमिति नितरां दुःखाकरोत्यंतरङ्गं मे। हन्त कष्टं भोः कष्टम्। य नास्त्येव जगति कार्याकार्यविचारः। अत एवेदृशीं दशामापन्नोस्मि। अयि शास्त्रिणो निक्षिप्यतां मयि दयार्द्रा दृष्टिः। येनाहं सुखी भविष्यामि ॥

भो वाचकमहोदाराः, बहवः किल व्यतीताः संवत्सराः, जनिमधिगतवतो मे। नैकवर्षेभ्यः पूर्वं श्रीविरिंचिविहितस्पर्धया

जगदपरं स्रष्टुमारेभे यदा भगवान्विश्वामित्रमुनिः, तदा खलु महात्मना सृष्टमिदं मे कलेबरमिति पुराणानि कथयंति । अयि शास्त्रिप्रवराः, वृद्धमिति वा मां मत्वा न परित्यजथेति साञ्जलिबन्धमभ्यर्थये । विश्वामित्रविनिर्मितेषु बहुषु वस्तुषु मम मद्बन्धोः श्रीयुत वार्ताक नाम्नश्च द्वयोरेव कुतोयं खरतरस्तिरस्कार इति, चिरं चिंतयन्नपि नाभिजनामि । श्रीयुत वार्ताकबन्धोर्मत्तस्सहस्रगुणोत्तमा स्थितिः । यतः पवित्रतमे मासचतुष्टय एव तिरस्कृतोऽमीभिः पण्डितंमन्यैः । इतरमासेषु देवभोज्यकोटिमपि विशति स इति । अहं तु नित्यपवित्रो द्वादशेष्वपि मासेषुबहिष्कृतः । हन्त! एतदेव न्यायपथातिक्रान्ते वर्तनमितः परं मा भवत्वित्याशासे ॥

सोढा किल चिरममीषामवज्ञास्माभिः परं कथं नाम सहामहे । षष्ठिवर्षकालमेतावन्तम् चित्रतरमाचारं प्रचारपदवीमानाययामासुः शास्त्रिवर्याः । तदित्थं । श्रीयुत बटाटे (Potato) महाशयो जनिमापामेरिकाभुवि । सर वाल्टर् राले महाभागः स्वजनिमेदिर्नी (इंग्लंड) तं निनाय । ततः श्रीयुत "बटाटे" आंग्लभूनिवासी समभवत् । बहोः कालात्पावनपावनं देशमेनं पुरुषधौरेयैरस्मदीयराजभिःसममलंचकार । स्थिरां वसतिं निजस्वभावानुसारेण चक्रे सः । परदेशादागतमेनं पवित्रं भावयन्तः अस्मदीयपंडितमूर्धन्या, उपवासदिनेष्वपि तद्ग्रहीता न दोषभाग्भवेदिति, लोकान्बोधयन्तिस्म सप्रमोदं गृण्हन्ति च तमिति । श्रीयुत साबूदाणं ( धान्यविशेष ) नामानमपि परदेशादायातं शुचिं जानन्ति । हन्त परदेशीयानां सादरं

स्वीकरणम्, स्वदेशीयानां परं सकण्ठहस्तं निष्कासनमिति नवाऽश्रुतपूर्वा न्यायसरणिरिति नितान्तं दुःख्यामः ।।

पृष्ठाः किलैवमुत्तरयन्ति शास्त्रिवर्याः 'बटाटे' महात्मा कंदवर्गकोटावन्तर्भवतीति । हन्तास्माभिः किमपराद्धम् । स इव भूदर एवोत्पत्तिमनुप्राप्स्यामः । किं च द्वे नामनी मे पलाण्डुः सुकन्द इति । तत्र द्वितीयमेव नाम कथयति कन्दवर्गघटकतां मे । सति चैवं कुतो मां न सम्मानयन्ति । पण्डिता इति न जाने । यदि विदेशीया इमे कन्दवृन्दनिविष्टा इत्यग्रासनमारोप्यन्ते चेदधमाधमो नवलकोक (शाकाविशेषः) नामापि श्रेष्ठपदमिदमाकांक्षेत । वर्तमानस्थितिं पश्यन्तो वयं सोऽपि न चिरं महनीयं स्थानमधिगच्छेदिति प्रतीमः ।।

मयि विद्यमानं दौर्गन्ध्यं महान् दोष इति उदाहरन्ति शास्त्रिणः । अपि नाम लभ्यते वस्तु दोषदूरमाप्रलयसमयमपि मार्गमाणे न पुरुषेणेह । सर्वत्र स्वल्पाधिकप्रमाणेन वर्तते एव दोषः । माधुर्यादिसद्गुणगणयुते मयि विद्यमानोऽप्यविद्यमानप्राय एव दोषः । उक्तं च कविसार्वभौमेन— एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति । य केचन दोषाः सर्वत्रापि शक्या दर्शयितुम् । एवं सृष्टिनियमप्राप्तैकदोषं मां सर्वानपहाय, किमर्थं दूषयन्ति शास्त्रिप्रभृतयः । एतन्नावगच्छामि । अथ वा पक्षपातग्रहगृहीतांतरङ्गाणां स्वभाव एवायम् । ये मां धिक्कुर्वन्ति त एव शास्त्रिमहाशया, मद् सहस्रगुणाधिकदोषेण 'तमाखु' चूर्णेनानस्येनाऽकुतोभयं तर्पयन्ति घ्राणं पवित्रवासरेष्वपि । एवंविधानामपि वचनेषु विश्वसन्तः परित्य-

जन्ति मां अन्धश्रद्धातिमुग्धा जना इति महदिदं दुर्भागधेयचेष्टितं मे । शिक्षिता विषयेऽत्र निमीलयन्त्यात्मनश्चक्षुषी, तथाप्यशिक्षिता बहवो मामनुगृह्णन्तीति सानन्दं वदामि । यद्यशिक्षितानामप्याश्रयो नाभविष्यत्, तदा नूनं नाममात्रशेषोऽहमभविष्यं । इदं परं प्रमोदस्थानं यदधीतहूणविद्या ब्राह्मणा अपि मां प्रीणयन्तीति । अत एव जीवामि सहे च पराभवं पण्डितानाम् । एतेषामप्याश्रयो मा भवत्वस्येति नक्तंदिवं प्रयतन्ते शास्त्रिप्रभृतयो लोकाः । फलाभिमुखश्च दृश्यतेऽमीषां यत्नः अतस्सर्वान्विचक्षणान् सांजलिबंधप्रणिपातं प्रार्थये न्यायपथाऽनपेतं वर्तनं मे दास्यथेति । ददातु सर्वेषां न्यायमतिं कमलावदनांभोज राजहंसो भगवान् रामचंद्र इत्याशासे ॥

लेखकः मुद्गूविठ्ठलाचार्यः । (गलगलि ।)

---*---

॥ श्रीः ॥

# ॥ चित्रकेतूपाख्यानम् ॥

( पूर्वतोऽनुवृत्तम् । )

---*---

अथ तयोर्मातापित्रोः कृच्छ्रलब्धेऽस्मिन् कुमारे अकिंचनस्य कृच्छ्राप्ते धन इव, मुग्धस्मितं मुदितवीक्षणं तदीयमाननं दर्शंदर्शम्, कलप्रलापामृतानि पायंपायम्, मूर्ध्न्यनवरतं घ्रायंघ्रायम्, स्नेहोऽन्वहमन्ववर्धत ॥

राजाऽपि 'अद्यैव मे सफलं जन्म, अद्यैव मे देवताः प्रसन्ना, साधूनामाशिषश्च अद्यैव फलिताः, अद्यैव मे पितरः

प्रीणिताः, अद्यैव अहमनृणी संवृत्तः, वंशपरम्परा च अविच्छिन्ना, पुंन्नामकान्नरकादात्मानमद्यैव अगोपायम्' इत्यादिना बहुधा आत्मानं कृतकृत्यमाप्तकामं च मन्यमानो निर्धूतशोकशंकुः सुतं स्वाङ्के आरोप्य तं सस्नेहं लालयन् 'सर्वमिदं भाग्यजातं अग्रमहिष्याः कृतद्युतेः सौभाग्यवशादुपनतम्' इति निश्चिन्वानस्तस्यां परां प्रीतिमाबबन्ध ॥

तत्सपत्न्यस्तु तेन भृशं दुःखिताः 'धिगस्मान्विनाकृतापत्यसंपदः' इत्यात्मानं शतधा गर्हयन्त्यः, 'नृपतिरयं नास्मानेषु दिवसेषु उद्वीक्षते, नास्माभिः साकं प्रियमधुरं संलपति, नास्मास्वादरं करोति । किं बहुना उक्तेन— किं अस्माकमत्र अन्तःपुर आवासोऽपि तस्य भारायते । आस्तां नामैतत् । अस्मत्समानयोगक्षेमा कृतद्युतिरपि पुत्रजननेनातीव दृप्ता भर्तुर्गाढस्नेहेन अस्मान् दास्या दासीरिव पश्यति, अत्यन्तनिकृष्टेष्वपि कार्येषु च निःशङ्कं प्रेरयितुं प्रगल्भते । ऐश्वर्योपमितकुबेरेभ्यो भुजबलोपमितमहेन्द्रेभ्योऽनुल्लंघिताज्ञेभ्यो लोकपालकल्पेभ्यो महाराजभ्यो जनिमवाप्य बन्धेन आभिजात्येन निर्दोषेण सौन्दर्येण अयातयामेन च यौवनेन सम्पन्ना वयं तदनुगुणमेव अस्य भूपतेर्महिष्यो भूत्वा अणुमात्रमपि अस्मदनुत्कृष्टाया कस्याश्चित्कृतद्युतेः कालवशेन प्रेष्याः संवृत्ताः । इतोऽपि कष्टतरं किं वा स्यादस्माकम्' इति भृशं सन्दह्यमानाः, प्ररूढद्वेषनष्टकृत्याकृत्यविवेकाः, यथाकथंचिदपि दारुणमपि कर्म कृत्वा कमप्यपकारं कर्तुमुद्युक्ताः, कठिनहृदयाः, कदाचिदेकान्ते तस्य कुमाराय गरं ददुः ॥

( क्रमशः । )

॥ श्रीः ॥

# ॥ नारदनैपुणी ॥

( पूर्वतोऽनुवृत्तम् । )

---

स चाऽर्घ्यप्रदानमाचरतो गालवमहर्षेः करपुटे किं पतनीयः ? तेन च महर्षिणैतद्राज्याधिपतिरिति विचार्य किमहं निवेदनीयः ? मयापि राजधर्ममनुसृत्य तद्वधाय किं सज्जेन भाव्यम् ?

सुभद्रा-- अबुद्धिपूर्वकः खल्वयमपराधः ? हननं किं न्याय्यम् ?

कृष्णः-- यदज्ञानात्कृतं तदेव महदागः— यमुना पावनतमा ! प्रातः कालः ! तपस्विनो ब्राह्मणाश्च दैनन्दिनकृत्यानुष्ठानाय समागच्छेयुः ! सर्वमेतदनालोच्याऽबुध्वा चाधोवर्तमानं किं युक्तं वीटीरसनिष्ठीवनम् ? न खल्वयं मनुष्यः, अपि तु देवलोकवास्तव्यः, विशिष्याधिपतिर्गन्धर्वाणाम् !— तच्च वेश्यागृहं प्रति गमनसमये ! महत् पापम् ! तेन वा कृतम् ? शिरोलिप्या प्रेरितस्तथाऽकरोत् । कः पारयति दैवमन्यथयितुम् ।

सुभद्रा-- किं न शक्यते भवताऽपि ? पूर्वज ! प्रार्थयामि ।

कृष्णः— सुभद्रे ! सर्वज्ञापि त्वं किमित्थं वदसि ? किं न जानासि राजधर्मम् ? राजैव चेत् स्वधर्मदूषकः, किं न वा कुर्युः जनाः ? लोकपरिपालनं च कथम् ? मया च प्रतिश्रुतं गालवमहर्षये । तच्च-वश्यं करणीयम् । प्रतिश्रुतानिर्वहणं हि भवति महते दोषाय ।

सुभद्रा-- पूर्वज ! अज्ञानाच्छरणागताय चित्रसेनाय कृतं मयाऽभ-

यप्रदानम्। कथं तन्निर्वहेयम्? तथाऽनुगृहाण यथा मद्वचनं च नानृतं भवेत्। न खलु निरसनीया कनीयस्याः मम प्रार्थना। मया कृतस्यापराधस्य फलं प्राप्नुयाद्धि भवन्तमपि? कृष्णानुजा प्रतिश्रुतं न निरवहत्, उक्तिविरुद्धमाचरतीति खलु जनाः अपवदेयुः? भवतैव कोऽपि मार्गो वक्तव्यः।

**कृष्णः**— सुभद्रे! किं न रक्षणीयं मद्वचनम्?

**सुभद्रा**— पूर्वज! मयाऽपि मद्वचनं किं न परिपालनीयम्? भवतैव वक्तव्यः कोऽप्युपायः।

**कृष्णः**-- किमहं करोमि? किमिति मां पृच्छसि? विजये भर्तरि किं तव दुस्साधम्? भगवन्तं त्र्यम्बकं प्रत्यक्षीकृत्य तल्लब्धपाशुपते महारथे फल्गुने स्वाधीने प्रतिश्रुतनिर्वहणं तव दुःसाधं किम्?-- किं मया कर्तुं शक्यते? सर्वमपीश्वरायत्तं भवति। सुभद्रे!-- गच्छ, कालोऽतियाति।

**सुभद्रा**-- पूर्वज! न खलु भवता मद्वचनविरुद्धमाचरितव्यम्।

**कृष्णः**-- नैव, नैव, याहि सुखेन। शिवास्सन्तु ते पन्थानः।

**सुभद्रा**— अलं तावत्, साधयामि।

**कृष्णः**— सुभद्रे! याहि!— मद्वचनात् ब्रूहि विजयं, किं स कुशलीति।

**सुभद्रा**-- तथैव।

**कृष्णः**— भव दीर्घसुमङ्गली!

(सुभद्रा प्रणम्य गच्छति।)

इति अष्टमो निःश्वासः॥

## अथ नवमो निःश्वासः ॥

( तदनु स्वगृहं प्राप्य सुभद्रा विविधाचिन्ताव्याकुला स्वयमित्थं ब्रवीति )

सुभद्रा— अद्य मम प्रबोधसमयश्शोभन इति प्रतिभाति । अवगतः खलु मया नाथस्त्वरितं प्रत्यागच्छेदिति वृत्तान्तः । कुतो नाद्याऽपि प्रासादमागच्छति? प्रायशोऽतीतः खलु मध्याह्नसमयः! वर्ततेऽल्प एवाऽवशिष्टः कालः । तदन्तर एव नाथं स्वायत्तीकृत्य कथमपि चित्रसेनः पालनीयः । प्रतिश्रुतं च निर्वहणीयम् । अहमस्वस्था, त्वरितमेव नाथं दिदृक्षे, इति चाऽभिधाय तदैव प्रहितः खलु कोऽपि दूतः! चेन्मद्वाचिकं श्रुतं स्यात् नैव विलम्बेत । कदाचित् सेवकेनाभिहितं भवेन्न वा?-- भगवन्! आपद्बान्धव! अनाथरक्षक! अपन्नमापदो रक्षितुं गतां मामेव किमित्यापन्नां करोषि? त्वरितमागतोऽपि वा नाथः कथं स्वायत्तीक्रियते? यदि सत्यमभिधीयते नैव कृष्णस्य पुरतो युध्येत । नारदवचनमनुसृत्य कपटमार्गेणैव वशयितव्यः— हन्त! कथमहं वदेयं प्राणनाथस्य पुरतोऽसत्यम्? तच्चिन्तयाऽपि क्षुभ्यति मन्मनः!— कथमपि कर्तव्यमेव । 'प्राणरक्षार्थमनृतवचनं न दोषाये'ति ह्यामनन्ति कृतधियः । विशिष्य कृष्णेनाप्यभिहितं विजये वर्तमाने किं तव कष्टमिति । यद्यत्र कोऽपि विरोधःस्यात्स किं नाऽभिहितो भवेत्कृष्णेन?— आ! इदमन्यदत्र महत्कष्टम् । न खलु चिन्तितमेतावता । भर्तरि स्वायत्तीकृतेऽपि ततः तस्य पूर्वजस्य च, यदि सम्भवेदायोधनं तदा किं क्रियते? प्राणप्रिययोर्विजयकृष्णयोः कलहकारिणी खलु भवेयम्! धिक्! न खलु तथा स्यात् । न कदाप्येतौ

परस्परविरुद्धमाचरेताम् । तदहं करोमि यन्मया कर्तव्यम्। ततः परमीश्वरायत्तम् । (अन्तः शब्दं श्रुत्वा) आ! आगत एव तत्र प्राणनाथः । कथमप्यत्रैवाऽऽगच्छेत् । किमद्य मया कर्तव्यम्? यथार्थतोऽस्वस्थयेव वर्तितव्यम्— एवं! स एव समीचीन उपायः ।

( विकृतवेषा शयनमधिष्ठाय )

तत्राऽऽगच्छति— आ! प्राणनाथ! प्राणनाथ! प्राणा मम गच्छन्ति! नाद्याऽपि समागतः प्राणनाथः! जगदीश! तथानुगृहाण मां यथा तद्दर्शनावधि वा सप्राणा वर्तेय!—

( शयने परिलुठति ।)

( अर्जुनो झटित्यागच्छति । )

**अर्जुनः**— प्रिये! सुभद्रे! सुभद्रे! किं? किमस्वस्था त्वम्?

**सुभद्रा**— हा! नाथ! नाथ! अद्यवाऽऽगतः खलु!— हा! तावतैवाऽभवं कृतार्था । सकृत् भवन्मुखदर्शनानन्तरं वा म्रिये! हा!

**अर्जुनः**— प्रिये! किमिदम्! न खलु दूयस्व, समाश्वसिहि । सहस्व कांश्चित् क्षणान् । का तवाऽस्वस्थता? त्वरितं ब्रूहि!

**सुभद्रा**— हा! नाथ! न शक्यते किमिति वक्तुम् । अद्यैव मम प्राणा गच्छेयुरिति प्रतिभाति! आः! आः! हन्त! किं नागन्तव्यं किंचित्पूर्वमेव?—

**अर्जुनः**— प्रिये! किमहं करोमि? अद्यैवाऽवगतो वृत्तान्तः । सद्य एव समागतः खलु! न दूयस्व, किन्तावदस्वास्थ्यं शरीरस्य, ब्रूहि!

**सुभद्रा**— हहह! हन्त! हा! प्राणा यान्ति! हा! यान्ति!

अर्जुनः— प्रिये! अद्यैवाऽऽनयाम्यगदङ्कारान्। सहस्वाऽर्धकलाम्।

सुभद्रा— आः!— तदन्तर एव गच्छेयुः प्राणाः। मास्तु— मास्तु,— न तैः किमपि प्रयोजनम्। प्रातरेव— तानानाय्याऽप्राक्षम्!— आः! जगदीश!— मयि कालधर्मं गते मम प्राणनाथमाद्रियस्व!— हा!— हन्त!

अर्जुनः— प्रिये! इन्दीवरतुल्याभ्यां लोचनाभ्यां धारया प्रवहन्त्यश्रूणि विलोक्य कथमहं सहेय! प्रिये! किञ्चित् क्षमस्व। ब्रूहि वृत्तान्तम्।

सुभद्रा— नाथ!— सर्वैरपि तैः— आगतैः— दर्शनस्पर्शनप्रश्नैः परीक्षिता— अभिहिता च— न खल्वयं रोगः— ग्रहपीडेति प्रतिभाति— ग्रहाराधनं विना सुखलाभो दुस्साध, इति'— हन्त! हन्त!— कीदृशं पापं कृतं वाऽमुत्र मया, येनाऽनुभवामि दुःखमसह्यमिदम्!— जगदीश! आपद्बान्धव! अनाथरक्षक! किमद्यैव सन्निहितो मम प्राणवियोगकालः?— हा!— प्राणनाथ! प्राणनाथ! कस्मै ग्रहायापराधं कीदृशमकरवं वा?— आहोस्वित् यां कामपि प्रार्थनां न निरवहं वा!— भगवन्! दुःखमीदृशमनुभवितव्यमिति वा मम शिरोलिपिः!

अर्जुनः— प्रिये! सुभद्रे! यदि तथा यः कोऽपि दोषो वर्तते परिहरणीयः, ब्रूह्यद्यैव परिहरामि।

सुभद्रा— नाथ! नैव तथा किमपि। यदि स्यात्तदेतः पूर्वमेव किं नाऽभिहितं भवेत्?— हा! हन्त! प्राणनाथ! प्राणनाथ! प्राणा मम यान्ति! निश्चिनोमि तदपहरणायाऽऽगत एवाऽन्तक इति

**अर्जुनः—** क्षमस्व ! सुभद्रे ! किञ्चित् क्षमस्व ! विजयेऽन्वर्थनामनि सन्निहिते निर्भीक एव तव प्राणानपहरेत्किं यमः ? सहस्व किञ्चित् । अनेनैकेनैव बाणेनाऽविमृश्यकारिणं तं कालमद्यैव—

**सुभद्रा—** नाथ ! नाथ ! आगच्छतु भवानत्र, अद्याऽवगतम् ।

**अर्जुनः—** किम् ? किम् ?

**सुभद्रा—** मया पूर्वं काऽपि प्रार्थना कृताऽभूत् । नाऽद्याऽपि निर्वहामि ताम् । मन्येऽत एव कष्टमीदृशमुपनतमिति— हा ! हन्त !

**अर्जुनः—** प्रिये ! किं रूपा सा प्रार्थना ? ब्रूहि, झटिति निर्वहामि !

**सुभद्रा—** नाथ ! शुष्कीभवति रसना— देहि शीतमुदकम् ।

**अर्जुनः—** इदमिदम् ! ( क्षीरमानीय ददाति ) प्रिये ! अस्तु यत्किमपि । न खलु बिभिहि । अर्धकलाभ्यन्तरस्थ निर्वहामि सर्वम् !

**सुभद्रा—** नाथ ! बालकस्याऽभिमन्योः प्रसूतिकाले प्रसववेदनामसहमाना सन्दिहाना च प्राणहानिं 'यदि लभ्यते कृच्छ्रात्तस्माद्रक्षा तदा यं कमपि प्राणभिक्षादानेनाऽऽद्रियेय' इति भगवन्तं प्रार्थितवती । अनन्तरक्षण एव सुखप्रसवो जातः । तदारभ्य कालेनैतावताऽपि न निरवहं प्रार्थनाम् । मन्ये, तदेव स्यादेतादृशस्य कष्टस्य मुख्यं कारणमिति ।

**अर्जुनः—** प्रिये ! एतावदेव खलु ? सहस्व कांश्चित् क्षणान् । प्रदेशेऽत्र प्राणभिक्षां याचमानं यं कमपि परिपाल्य त्वरितमागच्छामि ।

**सुभद्रा—** हा ! हा ! तर्हि, झटित्यागम्यतां, नाथ ! न खलु पार-

यामि सोढुं यातनाम्!-- प्राणनाथ! केचिदस्मदाराममागत्य रुदन्तोऽवर्तन्त । किमुद्दिश्य तेऽत्रागता इति प्रथमतस्तानेवाऽनुयुङ्क्ष्व ।

अर्जुनः-- प्रिये! तथैव, गच्छामि ।

सुभद्रा-- त्वरितमागन्तव्यम्! त्वरितमागन्तव्यम्! प्राणनाथ! न खलु शक्नोमि सोढुं वेदनाम्!

अर्जुनः-- अर्धकलाभ्यन्तर एवाऽऽगच्छामि । सहस्व किञ्चित् ।
(परिचुम्ब्य गच्छति ।)

सुभद्रा— (उत्थाय पश्यति) तत्रैव द्रुतं गच्छति । चित्रसेनः तस्य दाराश्च यथोक्तमनुतिष्ठेयुः । "चित्रसेन! रक्षामि त्वाम्" इति नाथस्य मुखारविन्दात् यदि निरर्गलं निर्गलेद्वाङ्मधु तदा सिद्धप्रायो मम मनोरथः । न खलु वीराग्रणीर्विजय उक्तिविरुद्धमाचरेत् । अस्तु वा त्रिपुरान्तको नाऽपि बिभियात्?-- हन्त! एतावताऽनुभूतं न खलु कष्टं प्रतिभाति । कृष्णेन गालवस्य पुरतः कृता चित्रसेनवधप्रतिज्ञा यद्यवगता भवेत् तदानीमेव मह्यं क्रुध्येन्नाथः । तत्रैव कोऽप्युपायः कर्तव्यः ।

अर्जुनः— (अन्तःस्थित एव) चित्रसेन! मा भैषीः? आगच्छतु वा त्रिपुरान्तको यथार्थनामा विजय एष रक्षामि त्वाम् । आयाहि मम पृष्ठतः ।

सुभद्रा-- सिद्धप्रायो मम मनोरथः । न खलु भयमितः परम् ।
(अर्जुनः, चित्रसेनः, रत्नावली, सन्ध्यावली चाऽऽगच्छन्ति ।)

**अर्जुनः**— प्रिये ! यथोक्तमनुष्ठितम् । चित्रसेनायाऽस्मै प्राणभिक्षां प्रादाम् । अपि स्वस्थाऽसि ?

**सुभद्रा**— प्राणनाथ ! अद्य किञ्चित्स्वस्था भवामि । न तावत् व्यथा शरीरस्य यावती पूर्वमासीत् । कृता प्रतिज्ञा परं पालनीया ।

**सन्ध्यावली**— सर्वश्लाघ्य ! वीरशिखामणे ! इतःपरमस्मद्रक्षणं भवतः कृत्यम् ।

**रत्नावली**— हे सुत्रामपुत्र ! अनुगृहाणावां माङ्गल्यदानेन ।

**अर्जुनः**— तथैव करोमि, न खल्वर्जुनो द्विर्भाषेत । अद्य सूर्यास्तमयात्प्राग्वा तव वधप्रतिज्ञा ?

**चित्रसेनः**— आम् ! दीनदयालो !

**अर्जुनः**-- कस्तथा प्रत्यजानीत ?

**चित्रसेनः**-- प्रतिज्ञाता ...

**अर्जुनः**-- न खलु बिभिहि, ब्रूहि । भवतु यः कोऽपि । का मम भीतिः ?

**चित्रसेनः**— भगवान् कृष्णः ।

**अर्जुनः**— कः ? किं कृष्णः ?

**चित्रसेनः**— आम् ।

**अर्जुनः**— कृष्णः वासुदेवः !

**चित्रसेनः**— आम्—

**अर्जुनः**— सुभद्रे !

( क्रमशः । )

लावण्यमङ्गमखिलं ललनामतल्याः
नीत्वातिविस्मयकरं नियतं विधाता ।
आधादुरोजयुगलीमपदिश्य राशी
शिष्टेन तेन धृतचूचुकनैल्यमुद्रौ ॥ १०८ ॥

किञ्च --

कचश्चेन्निश्चेता क इह तमसश्चेतसि तुलां
मुखं चेत्किं चेन्दुर्मदमहह मुञ्चेत नियतम् ।
स्तनौ चेद्याचेत क्षितिभृदपि नीचेतरपदं
पदं चेत्पञ्चेषोर्विधुतिमिषुरञ्चेदचरमः ॥ १०९ ॥

अपि च—

केकांशुर्यदि कालिका कलयतामद्धा विषास्वादनं
नेत्रश्रीर्यदि नित्यमेणनिवहाश्चर्वन्तु सर्वं तृणम् ।
वक्त्रेन्दुर्यदि तिग्महेतिदलनं वाञ्छेत्सुखं वारिजं
किं वर्ण्येत ततः परं कृशतनोरङ्गं जगन्मोहनम् ॥

( पुनर्निरूप्य ) अहो वपुरभिरूपतानुरूपरमणीयमस्या रमणी-शिरोमणेरनवद्यं वीणावाद्यवैशारद्यम् ।

अभ्रूविकारमनरालसिरालकर्ण-
मस्पन्दगात्रमनुदीतनिदाघतोयम् ।
अङ्कूरिताननविलासमपास्तकाकु-
विस्तारितानमुपवीणयते यदेषा ॥ ११० ॥

अनया भुवि तनयामण्या कस्य धरण्याखण्डलस्य विलसति कुलं । कीदृशी वा कान्दिशीकमृगेक्षणाया नामतोयोगेन धन्यतरा

विराजति पुनरक्षरानुपूर्वी । अनयोरिह परिजनयोरियं वीटीदानविनियुक्ता वधूटी चेटी अर्धासनमध्यासीनेयम् । सरसीरुहदायादमुखी पुनरपरा सखी। कयावाभिख्यया पुनरेते विख्याते। तदिदं तत्तादृशनासाभरणमुक्तामणिवृत्तान्तमप्येतासाममृतासारसहसंभवेन विस्रंभवचनगुम्भेन सावधानमवधारयामि । [कर्णं दत्वा सानुरागम् ] अहो सांप्रतमासां प्रवृत्त एवायं विस्रंभवार्तारंभः ।

**सखी**— हले चन्दकले एरावदीतिरावणीवसन्तभयवन्त दाणव्वइरिवरं पदाणलद्धं णासाहरणमुत्ताहलगभ्भिणरअणसमुग्गअंसमुद्दअमहावहारेण हठादो अवहदं अविआरिआए आरिसंविआयासं अविगणिय कहं अदिपेलवेहिं अङ्गुलीपल्लवेहिं वल्लइंपमोदेण चिरं वादेसि । अज्जदाव मुत्तादिवमज्झगदतादविजअकेदुसमीवादो तुह उवजण्णिजोइणिपडिहावदिविहायससञ्चारिजइसंणिहिदा भवे ।

**चेटी**— तदो दिट्ठिं अविलसि दंभट्टीअरिआए स कहं विअ ।

**चेटी**-- जं भयवदी पटिहावदि भट्टिदारिआए अहिमदं झडिदि घडदि ।

**नायिका**-- हञ्जे चन्दिमे इमाए कुसुमञ्जर एतं एतं सव्वं वि णासाहरणमुत्ताफलवुत्तन्दं अहं एव्व कहइस्सम् ।

**चेटी**— अहइम् ।

**राजा**— (स्वगतम्) एषा तु योषामणिर्विजयकेतुवंशभूषा अहो चन्द्रकलेति रूपधेयानुरूपमस्या नामधेयम् । तदनुरूपं चानयोः कुमुद्वतीचन्द्रकलेत्यभिधानम । अस्याश्च सुदतीमणेरुपमाता

प्रतिभावती योगिनी । सा च योगिनी मुक्ताद्वीपवासिनी विजयकेतुसमीपादाकाशयानेन सरयमायास्यति । भवतु मुक्तामणिवृत्तान्तमवशिष्टमप्यमुष्या मुखतः श्रोष्यामि । [इति दत्तकर्णस्तिष्ठति]

**नायिका**— हला कुमुज्जइ! णासाभरणमुत्तासालगब्भिणं रअणसमुग्गअंपअच्छत्तेण भयवन्तण एव्व अहिमदं अहिहिदम् । एदं समुग्गअमवाविअ एत्थं जंवूदिवेसरो कुण इदे पुरस्सणिहाण । सोच्चे अणिज्जिअसुमायुहरूवहेयो णाहो भविस्सदि ण अंगिम अज्ञसादोइयविसासादो । उल्लासेण चिरं वल्ल वाइआ । दाणिचण कोवि णरवालो आसादिअ णासामणिसमुग्गओ समागयो । ता इमादो वालुज्जाणादो घरं पविसामो ।

**चेटी**— [ वीणामादत्ते ]

**सखी**— [ हस्तावलंबं ददाति ]

**नायिका**— [ उत्थातुमिच्छति ]

**राजा**— अयमेव मे सन्निधानसमयः [इति समीपमुपसर्पति] [सर्वा राजानं दृष्ट्वा भयादुत्तिष्ठन्ति सखी चेटी च विस्मयस्तिमिते राजानमवलोकयन्त्यौ तिष्ठतः ]

**नायिका**— [लज्जावनम्रितमुखं पादाङ्गुष्ठेन लीलानलिनदलानि गणयन्ती] [ स्वगतम् ] एसो हन्त महाणुहावप्पकिदि एद्दावलो अदिक्खोणीएवरिणीविअप्पडिपडो कोवा पसूणे सुणो । किं मोहो सिमिणोपुणो किमहवा लत्थो मह्हद्दोहिणो हंसो संपदि जंवूदीवमहिवो आणीदणीसामणी ।

**विदूषकः**— [साङ्गभङ्गमुत्थाय] एत्थ वा सुत्तं मं विसज्जिय जेम-

णत्थं देवालयं किं पडिणिवुत्तो अय्यवुत्तो । [इत्यधस्तादवलोक्य] पडिणित्ताावुणि चरणप्पणााणि रण्णोण दिसन्ति । ता तत्थ एव्व फलमब्भवहरन्तो चिट्ठ। अहं वि आसणाया विणोदणाय जहच्छं एदं महुविज्झेमि । [इति वृक्षमारुह्य मधुछत्रं गृह्णन् सरघाबाधां निरूपयति] अविह अविह जंबूदीवमण्डलाहण्डलरहुणाहणरणाह मं बाहन्तं महन्तं अवहारमण्डलग्गेण विदारिअ णासाहरणमुत्ताहलरब्भिणं रयणसमुग्गयं विअ इमा ओदासीए उत्तिओ सरहाओ विविदारिअ अण्णं विमहन्तं फलं लहेहि ॥

**नायिका—** [श्रुत्वा साश्चर्यानुरागम्] [स्वगतम्] एसोएव्व आसादिअ णासामणिसमुग्गओ जंबूदीवमण्डलाहण्डलो रहुणाहणरवालो समागओ ।

**राजा—** [स्वगतम्] अहो रसविच्छेदः । यदस्य पुनरार्तस्वरमाकर्णयन्तो मदन्वेषिणः परिजना युगपदत्रैवापतन्ति । (नेपथ्ये) कलकलः ।

**नायिका—** (स्वगतम्) आगदा एव्व एदस्स रण्णो अण्णेसिणो परिजणा । ता घरं पविसामि । (इति सव्याजं विलंब्य ताभ्यां सह निष्क्रान्ता)

**राजा—** (सोत्कण्ठम्)

एणीदृशं त्वरितमेत्य मदीयमेत-
त्तामेव चित्तमनुधावति धन्यधन्यम् ।

(विचिन्त्य)

स्थाने तदस्य परदा स्मरसायकानां
सद्यो ममेवं भवितैव शरव्यभावः ॥ १११ ॥

विद्युदिव लक्षिता सा विपुलाक्षी सपदि घनवनान्तरिता ।
असमशरवर्षधारामधिकमहो दिग्भ्रमं च पोषयति ॥११२॥

[ नेपथ्ये ]

देवतातिथिपूजनैरवन्ध्या भवतु सुखाय देवस्य माध्यन्दिनी सन्ध्या ।

पादेषु पथि निलीनाः पान्थानां हन्त संप्रति छायाः ।
तत्रैव तपनदीप्त्या मार्णं कर्तुं प्रयाणवैमुख्यम् ॥ ११३ ॥

अन्यत्किमध्वगजनद्रुहमस्य ताप-
महां विभोरसहमान इवातपोऽपि ।
धात्रीतले मरुमरीचितरङ्गदंभा-
दालोक्यते बत लुठन्नखिलैरिदानीम् ॥ ११४ ॥

गाहन्ते सरयं सरांसि विपिने गन्धद्विपेन्द्राः करैः
पाथः सप्तहयांशुतप्तमसकृद्धाद्यं विधूयाभितः ।
स्वैरं तत्परिकल्पितेषु शतशः सत्रेषु भुक्त्वाधुना
नानादेशजुषः प्रवासमिलिता नन्दन्ति पादैः द्विजाः ॥

विदूषकः— [ राजानमुपसृत्य ] अह्महे एत्ताहे ससंभवं विजिंभअदेवदालयादो णिवेज्ज घण्डाणिणदजुत्तो मज्झण्णसंखसद्दो । ता देवालयं गच्छामो ।

राजा— [ विदूषकेन सह नाट्येन परिक्रम्य निष्क्रान्तः ]

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्निचित्य-
सर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षित-
वरनन्दनस्य श्रीयज्ञनारायणयज्वनः कृतिषु
रघुनाथविलासे प्रथमोऽङ्कः ॥

# द्वितीयोऽङ्कः ॥

——*——

(ततः प्रविशति वेत्रिणा राजपुरुषेणाकृष्यमाणो निद्रापरवशो विदूषकः)

**विदूषकः**— [साङ्गभङ्गमुत्थाय सजृम्भमक्षिणी निमीलिते करतलाभ्या-मुन्मृजन् ] कोव एत्ताहे पच्चूहे महसिमिणपच्चूहक्करेदि ।

**राजपुरुषः**— अय्य सारङ्ग, जवणणाम्हेयोहं वेत्तिलो अज्झक्खो रहुणाहक्खो णंपहिणा पहिदो समागदो । एदु एदु भवम् ।

**विदूषकः**— दाहिणलोणसेवलिणीरमणीतघट्टिणं सिह्मलद्दीवं पट्टि-देण इमिणा भट्टिणग्हंसदुय्यो । आमज्झण्णं तत्थ सव्वं विवण-मज्झे परिक्कमिअ तदो एरावदीरावणीवासिणो क दन्वइरिणो णिव्वेज्जासिट्ठं विविहसूववूवचित्तण्णपरमण्णमुक्खं भक्खवग्गं ज-हेच्छं भक्खिअ ततो दीवादो तदाणिं एव्व एदं जंवूदीवं णिमु-ह्जाणेण पच्चागमिअ अत्यरन्तपेरन्तं तदुवासणं जक्कदुयघडिया-दयं एव्व एत्थापासुन्तम् । [ आध्मातमुदरं प्रदर्शयन् ] ताभ क्खिवग्गो एहिं न जुण्णो । ता इमं सव्वाह्मणं सक्कावि तुएको दव्वा अब्भुवत्ति । एत्थ कथावारे कुत्थवि पडमण्डवे चवलप्प-किदि पासुत्तो सारङ्गो ण दिट्ठोत्ति रण्णो धिण्णवेहि ।

**राजपुरुषः**— रण्णो एदस्स असच्चविण्णावणस्स घसो ण सम-समयो । जं एसो किं वि मन्तयन्तो विअ चिठ्ठइ ।

**विदूषकः**— [ सानुस्मरणम् ] तं सहिय अगदंसम्मं अणुवोहिदं तुए हिओहिर एसो रहुणाहजणाहिणाहो वणसञ्चरणादो पच्छा-च्छन्तो वम्महबाणलक्खीकिदोवि आपेक्खिदो ता तज्ज्ञापुरवा-

सिणीं देवीं चिन्तियविरहसाए दिणा आसादिदा । ता अस्स वयस्सस्स वणोविणोदणत्थं चिन्तफलअविलेहणसामग्गिं संपादिअ झत्ति णिव्वट्टियसंझावन्दणो तत्तं समगामिस्सम् । [इति निष्क्रान्तौ]

॥ प्रवेशकः ॥

[ ततः प्रविशति कामयमानावस्थो राजा ]

राजा-- [ विवश इव ध्यानमन्दं परिक्रम्य दीर्घमुष्णं च निश्वसन् ]

तत्तादृशं हृदय भो तरुणीमवाप्तु-
मेवं भ्रमन्मुहुरहो यतसे कथं वा ।
व्यस्मारि किन्नु भवता विधिचोदितेऽपि
तद्दर्शने जलधिसन्तरणादियत्नः ॥ ११५ ॥

[विचिन्त्य] अहो महानेष मोहोदयः । यदसदेव हृदयं सदिव संबोधयामि । संप्रति हि--

आलोकितेऽपि बहुधा विषयेऽनुभूते
हा हन्त सोऽयमिति रोहति नावबोधः ।

किं बहुना--

एतद्विधेयमधुनेति मतिं विनैव
प्राग्वासनातिशयतः पदमादधामि ॥ ११६ ॥

यान्ती केलिवने सखीमनुसृतामेणेक्षणा वीक्षितुं
वाञ्छन्तीव करावलम्बमसकृद्व्यावृत्य पश्चान्मुखम् ।
साकूतप्रबलैरपारललितैः शङ्के कटाक्षैस्ततः
सेयं मे विजने शरण्यरहितं चेतो हठादाहरत् ॥ ११७ ॥

[ विचिन्त्य ] इदं तु पुनरनुपपत्तिदन्तुरितम् । तथाहि--

परममहदाहुरेके परमाणुमपरे च मन्वते चेतः ।
तत्सर्वदापि कथमिव तनुमध्या सा तदेतदाहरतु ॥

[ पुनर्विचिन्त्य ] मध्यमपरिमाणं चेत इति केचिदाचक्षते। तदेवेदानीमस्मासु फलितम् । अथवा--

चेतो मामकमेतदक्षिसरणेः शीघ्रं तदा निर्गतं
तन्वङ्ग्या नवयौवनादनुकूलं तत्तादृशः पुण्यतः ।
अभ्येत्य स्तनकुम्भयोर्नवनवामन्यादृशीमाकृतिं
शङ्के तत्र तदात्मना परिणमत्संमोदते सांप्रतम् ॥ ११९ ॥

[ मदनबाधां निरूप्य साञ्जलिबन्धं मन्मथमभ्यर्थयते ]

तानेव स्वदमानचाप भगवन् सञ्चोदयास्मिन् जने
ये पूर्वं प्रहितास्त्वया दृढमुरश्रेणीदृशः सायकाः ।
एवं चेदुभयोर्व्यथा न भविता यस्मादिदं वर्मितं
वक्षोजाद्रियुगेन तत्प्रतिहतेस्तेचाशिताग्रा यतः ॥ १२० ॥

[ विचिन्त्य सानुस्मरणम् ] नन्वधुनैव तन्वङ्ग्याः स्तनात्मना परिणमते चेत इत्यभिहितं यद्येवमतनुरस्त्रैरेतद्बाधेत ; तादृशं चेतः [धैर्यमवलंबमानः पुनर्विचिन्त्य ] तस्मादस्मिन्नेव जने शाताग्रानपि शरान्मुञ्चेति पञ्चेषुमभ्यर्थये । [भूयोऽपि विचार्य सविषादम्] एवमपि यदि तदाकृतिरन्तःस्फुरितात् हन्त विध्येत । सर्वदा मदहितसन्धाता हन्तासौ दंपतिलोकानियन्ता देवः ।

यत्नादुद्धृतमध्यभागमवनौ यद्यैन्दवं मण्डलं
तन्वन् केलिसरस्सुतैः प्रतिमुहुस्तत्रामृतैः पूरिते ।

एतत्सर्वमपि युवयोर्लीलाविनोदायैव कृतमित्यन्यादृशमेतत् ।

**वसन्तः**— किं वा न जानामि मकरन्द, ते प्रणयं कौमुद्याम् । सैव परिणेतव्या त्वया । यतस्त्वयैवोक्तं 'तातनिदेशो हि बहुमान्यः' इति । परित्यजामि कौमुदीं त्वत्कृते । त्वमपि विसृज सौदामिनीम् ।

**सौदामिनी**—

**एतावताऽपि कालेन परिहासपरायणाः ।**
**न केऽपि व्यर्थवचनैरेवं कण्ठमशोषयन् ॥ २० ॥**

**मकरन्दः**— 'भूयाननुराग एव कन्यकायाः' । तत्कौमुदीमिवोदुह्य सुखं निवसतु महाभागः । नेतः प्रभृति मनसाऽपि स्मरेयं कौमुदीम् । सौदामिनीविप्रलम्भकारीति ममाप्ययशो रूढम् । तत्परिमार्ष्टुमीहे । स्वनिलयं प्रतिनिवृत्तश्चिरप्रवासीव सद्य एव सौदामिनीं यथापूर्वमभजत मन्मनः ।

**वसन्तः**— (सावज्ञम्) भद्र, सूनृता न खल्वस्य वाणी ।

**मकरन्दः**— (सक्रोधम्) नेक्षस्वेमाम् । त्वन्नयनकौमुदीं कौमुदीमेवोपगच्छ । सम्प्रति पश्य त्वामेवान्वेषयन्त्यागता वराकी ।

(ततः प्रविशति पटाक्षेपेण सम्भ्रान्ता कौमुदी ।)

**कौमुदी**—

**गाढध्वान्ता रजनिरधुना चाक्षुषीं कर्षतीयं**
**वृत्तिं शब्दग्रहणचतुरां श्रोत्रयोर्वर्द्धयन्ती ।**
**कर्णाभ्यां मे नतिशतमिदं यत्प्रसादाद्वियुक्तं**
**जानामि त्वां मधुरमधुरैः कण्ठनादैरुदारैः ॥ २१ ॥**

( सास्रम् । )

चक्षुः शून्यीभवति विपिने गाढसान्द्रान्धकारे
पादो मान्दीभवति नितरां कण्टकाविद्धमूलः ।
त्वत्संपर्कं प्रति मम मनश्चञ्चलं शङ्कया च
चिन्ताक्रान्ता तृणमिव जगज्जालमालोकयामि ॥२२॥

वल्लभ, कुत इदमौदासीन्यम् । क्व गतस्ते मय्यप्रतिमः प्रणयः ।

कथमेवं विहायाशु कन्यकां भीषणे वने ।
अनाथामामिषीकृत्य शरारूणां त्वया गतम् ॥ २३ ॥

**वसन्तः**-- ( सौदामिनीदत्तचक्षुरेव ।) कथं स तिष्ठेद्यं प्रणयो विद्रावयति ।

**कौमुदी**-- ( साश्चर्यम् ) को वा प्रणयो वसन्तं कौमुदीसन्निकर्षादपसारयति ।

**वसन्तः**-- सौदामिनीमदृष्ट्वा क्षणमपि न जीवेयम् । का त्वं यदि दृश्यते सौदामिनीवदनचन्द्रमाः । को वा परित्यज्य रजतं रङ्गमपेक्षते । त्वयि द्वेष एव मामद्रावयत् ।

**कौमुदी**-- नैतद्युज्यते । यन्मन्यसे तन्न ब्रूष ।

**सौदामिनी**-- ( सखेदोपालम्भम् )

हा हा कष्टमियञ्च मे परिभवे बद्धोद्यमा दृश्यते
ज्ञातं सम्प्रति हा त्रयोऽपि मिलिता मिथ्योपहासाय मे ।
कौमुद्यन्यजनापकारिणि, भृशं भूत्वा कृतघ्ना मयि
ह्येताभ्यां सह मां कथं व्यथयसि क्रूरापहासैरलम् ॥

सल्लापः खलु तादृशः शपथवाक्स्नेहे मिथोऽन्यादृशी
द्वावाभ्यां च वियोजने द्रुतगतिः कालो मुहुर्निन्दितः ।
विद्यावाप्तिदिनप्ररूढरुचिरप्रेमा निरागस्कता
चान्योन्यं समभूत्तदेदमखिलं किं सर्वथा विस्मृतम् ॥

स्थित्वैकत्र महासनेऽतिरुचिरे नीरन्ध्रमन्योन्यतो
गानं चैकलयस्वरातिमधुरं कृत्वा विनोदाय नौ ।
एकं तन्तुगणैरुदारकुसुमं ह्यावां वयावः स्म तत्
पार्श्वाभ्यां ध्वनिनाङ्कैरपि हृदा चैक्यं प्रपन्ने इव ॥

आपाततो द्विधा भिन्नो यथैकश्चेरिभूरुहः ।
आवामाकृतितो भिन्ने तथा वृद्धिं गते उभे ॥ २७ ॥

यथैकस्मिन् फलद्वन्द्वं वर्द्धते सखि नालके ।
तथैकस्मिन् मनस्येते लम्बेते ह्यावयोस्तनू ॥ २८ ॥

सखि मदुपालम्भ एतयोः सहायपदवीमारोढुं चिरनिरूढामावयोरतिमधुरां प्रणयधारां किं वा शिथिलयसि, नेदमुचितं सौहार्दस्य । नायं कन्याधर्मः । यद्यप्येतस्य कर्मणोऽहमेकैव दुःखभागिनी तथाऽपि त्वां निन्देयुः सह मया सर्वा अप्यस्मद्वर्ग्याः ।

**कौमुदी—** (सशोकविस्मयम्) किमेवमिदमित्थमित्यजानानाऽतिनिष्ठुरं प्रलपसि । नाहं द्वेष्मि त्वाम् । अपि तु त्वयैवाहं द्विष्ये ।

**सौदामिनी—** (सास्रम् ।) न किं त्वया प्रेरितो वसन्तो मामनुसृत्य नयनवदनादिवर्णनेन ह्रियमुत्पादयितुम् । त्वदनुवर्ती खल्वयं मकरन्दः । येनाहमितः पूर्वं पादाहतिभिरप्यधिकमधिक्षिप्ता स तु मामद्य 'रतिर्वालक्ष्मीर्वे' त्यादिना स्तवीति । तदपि त्वद्विनोदना-

यैवेति स्फुटम् । प्राणव्ययेऽप्रतिहतस्नेहस्त्वयि वसन्तः । मम त्वनुरागानुनयप्रार्थितोऽप्यपि मकरन्दः कटाक्षलेशमपि न पातयति । तत्सर्वथा शोच्याऽहं कौमुदि, । तदेवन्नैर्घृण्यस्य कारणमणीयोऽपि नोपलभे ।

(इति पटान्तेन मुखामवृत्य रोदिति ।

**कौमुदी—** सखि, ते हृदयगतं नावगच्छाम्यनयाऽतिनिष्ठुरया वाचा ।

**सौदामिनी—** अयि, कथं सौदामिन्यामपि विप्रलम्भमारभसे । यदा पार्श्वतोमुखमपवर्तयामि तदा मुखमुन्नमय्य भ्रुवमुल्लास स्मितमारचय्य कृतसङ्केता मामपहसथ । भद्रे, यदि कारुण्यस्य वा सौहार्दस्य वा धर्मस्य वा लेशस्त्वयि तर्हि मैवं कृथाः । अथ वा कथमत्र स्थीयते । प्राणवियोग एवाद्य वरीयान् ।

(इति गन्तुमिच्छति ।)

**वसन्तः—** तिष्ठ तिष्ठ । सत्यमेव मत्प्रणयस्य मज्जीवितस्य मदात्मनश्च त्वमेवेश्वरी रमणीये सौदामिनि, ।

**सौदामिनी—** अतिनिपुणमुपक्रान्तम् ।

**कौमुदी--** (सदयम् ।) वल्लभ, मैवमुपहस प्रियसखीम् ।

**मकरन्दः—** यदि स्वयमेव नागच्छति सौदामिन्यागमयामि तां हठात् ।

**वसन्तः--** (मकरन्दं प्रति ।) न कदापि त्वां विश्वासघातुकं वरिष्यतीयं रमणी । न च त्वमपि मयि स्थिते शक्ष्यसि हठात्तामागमयितुम् । (सौदामिनीं प्रति ।)

सत्यं त्वय्यनुरक्तोऽस्मि मत्प्राणैरपि ते शपे ।
त्यक्त्वा याननृतीकुर्यामन्यथावादिनं जनम् ॥ २९ ॥

**मकरन्दः**— अकृत्रिमतरः खलु मे प्रणयः ।

**वसन्तः**— तथा चेन्मूर्ख, द्रक्ष्यामि तेऽनुरागम् ।

**मकरन्दः**— (सरोषम् ।) जाल्म, त्वरितमागच्छ ।

**कौमुदी**— (सम्भ्रान्ता ।) वसन्त, किमेतत् ।

**वसन्तः**— किमात्थ रे अनात्मज्ञ ।

**मकरन्दः**— गच्छ गच्छ वसन्त, कौमुदी प्रतिपालयति त्वाम् । अपि च त्वं किल शान्तः । क्व धनुर्विद्या क्व च त्वम् । धिक् धिक् ते पौरुषम् ।

**वसन्तः**— (सक्रोधम्) मूर्ख, पश्य कालदण्डमिव मे बाहुमधुनैव त्वां व्यापादयेयम् ।

**कौमुदी**— प्राणेश, किमेतत् । विरम शुष्ककलहात् । किमिदमपि ते विनोदनम् ।

**सौदामिनी**— त्वमपि विरम ।

**मकरन्दः**— रे वसन्त, किं वा न विदितं मम यदसून्विहायापि कौमुदीं न त्यक्ष्यसीति ।

**वसन्तः**— किं वा कौमुदीं प्रहरेयं तुदेयं व्यापादयेयं वा । यादृशो वा मे द्वेषो भवतु तस्याम् । क्रोधेन किमपि पापाचरणं न हि धर्मः । विशेषतस्तस्त्वबलायाम् ।

**कौमुदी**— (सशोकम्)

यद्येवं किमिहापरा मम भवेद्व्यापत्तिरन्यादृशी
कौमुद्यास्मि वसन्त एव स भवान् किं वाऽन्यथा भाषसे।
त्वामाश्रित्य गृहं विहाय पितरौ सन्त्यज्य रात्रौ वने
भ्रान्तं निष्करुण, त्वयाद्य निखिलं किं सर्वथा विस्मृतम्॥

**वसन्तः**— (कोपातिशयं नाटयन्।) न दिदृक्षामि ते वदनम्। गम्यतामस्मात् प्रदेशात्। नेतः प्रभृति वसन्तं स्मर। गतस्ता वदावयोः प्रणयः। विहाय विवेचनामेतावत् स्थितं मया। सत्यमेव सौदामिनीं दृष्ट्वा रतिरमणबाणगोचरतामवातरम्। सैव मे बहिश्चराः प्राणाः।

**कौमुदी**— (विचिन्त्य।) अयि पापाशये, मित्रच्छद्मना शत्रुभूते सौदामिनि हतके, असंशयमेवैतदखिलं त्वच्चेष्टितमेव। त्वयैव तावद्भिन्नहृदयो मे वल्लभः। रोषितश्च मयि। किं तेऽनयाऽपराद्धम्। साम्प्रतं सकामा भव। प्रतिकूले दैवे किं वा न सम्भवति। (इति रोदिति।)

**सौदामिनी**— दुर्विनीते, दूरमतिक्रामत्यपि प्रसङ्गे कथं न विरमस्यात्मविनोदनात्।

**कौमुदी**— (क्रोधमभिनीय) कर्तव्यमखिलं कृत्वा यत्किंचिदद्य प्रलपसि। अयि, वदामि त्वयैव विभिन्नहृदयो वसन्त इति।

**सौदामिनी**— वितथमवितथं वा भवतु ते वचनम्। नाहं किञ्चिदपि जाने। एतदेव मयाऽपराद्धं त्वयि। अस्मत्पश्चिमदर्शनानन्तरं मकरन्दनिकटमेत्य त्वं हि वसन्तेनार्धरात्रे गूढं पलायिष्यस इति मया रहस्यनिर्भेदः कृतः। तदाकर्ण्य मकरन्द-

स्त्वामन्वेषयन्वनमेव प्राद्रवत् । अहमपि प्रेमाधिक्यात्तमनुधावन्ती बहुधाऽनुनीयास्त्वम् । स तु मद्दौर्भाग्यान्मां न्यक्कृत्य विपिनान्तरे परित्यज्य पलायितः । एतदेव मे वृत्तम् । सम्प्रत्यपसरामि । कुशलिनी भव । दीनाऽहं ते प्रणयसखी कारुण्येन द्रष्टव्या ।

(इति जिगमिषति ।)

**कौमुदी—** केन वाऽत्र स्थापिता । सुखं गम्यताम् ।

**सौदामिनी—** (स्खलितगतिः) मनो मां नानुयाति ।

**कौमुदी—** प्रणयेन किल वसन्ते ।

**सौदामिनी—** नहि नहि— मकरन्दे ।

**वसन्तः—** अतिकातरे सौदामिनि, मा भैषीः । मत्पुरतः किं करिष्यति मकरन्दस्तव ।

**मकरन्दः—** (सरोषम् ।) मूर्ख वसन्त, किमेवं प्रलपसि । यावदहं नयामि त्वां वैवस्वतमन्दिरम् ।

**वसन्तः—**(क्रोधातिशयमभिनीय ।) किमात्थ रे मनुष्यकीट, संप्रति पश्यामि ते पौरुषम् ।

(इति परिक्रामति ।)

**मकरन्दः—** एहि पाप, समन्तादुत्खातिनी भूमिरियम् । विमर्दक्षमप्रदेशमवतरावः ।

(इत्युभौ निष्क्रान्तौ ।)

**कौमुदी—** (सशोकम् ।) अहो प्रमादः । आः पापे दुष्कृतकारिणि सौदामिनि, पूर्णास्ते मनोरथाः । पश्य फलमात्मनोऽव्यापारस्य ।

**सौदामिनी**-- (सास्रम् ।) न युक्तमत्रावस्थातुम् ।

(इति निष्क्रान्ता ।)

**कौमुदी**-- (अश्रूणि मुञ्चन्ती ।) हन्त, हन्त कर्तव्यतामूढाऽस्मि । कम्पते मे हृदयम् । का वाऽत्र प्रतिपत्तिः । अनाथाऽस्मि संवृत्ता । विफलाश्च मे मनोरथाः । हा हा विधे, कथमेवमतिनिष्करुणमारब्धम् । उक्तञ्च ।

**'रात्रिर्गमिष्यति भविष्यति सुप्रभातं**
**भास्वानुदेष्यति हसिष्यति पङ्कजश्च ।**
**इत्थं विचिन्तयति कोशगते द्विरेफे**
**हा हन्त हन्त नलिनीं गज उज्जहार ॥ ३१ ॥**

(इति पठन्ती निष्क्रान्ता ।)

**प्रदोषः**-- शठ, प्रमोह, त्वद्विजृम्भितं खल्विदम् । अन्वर्थनामा हि त्वम् । अथवा निर्दयोऽसि ।

**प्रमोहः**-- अवन्तीतरुणस्य पक्ष्मसु निषिञ्च प्रसूनरसमित्येव विद्याधराधिपनिदेशः । न किं वसन्तोऽवन्तीयुवा । तदयमेव राजनिर्दिष्ट इति मनसिकृतमिदं नान्यथा ।

**प्रदोषः**— गतमद्य न शोच्यम् । पश्योभावपि तौ रोषकलुषितनयनौ परस्परजिगीषया वीरवादान् कुर्वन्तौ परिक्रामतः । त्वमद्य सजवमपसृत्य विकीर्य प्रभूतं तमो भीषणीकृत्य रजनीं वसन्तस्य कर्णे मकरन्दवद्गर्जित्वा मकरन्दसविधे वसन्तीभूय च प्रतिभटः पुरो गच्छतीति प्रत्येकं निश्चयं जनयित्वा यथा पुनरन्योन्यं न पश्येतां तथा सुदूरं नीत्वा भ्रामय ।

## देशवृत्तान्तः ॥

---

गोदावरीतीरे कोव्वूर् जनपदे काचन गीर्वाणविद्याशाला अन्ध्रदेशीयैः कैश्चिदास्तिकवरैः सुप्रतिष्ठिता स्थलरामणीयकेन जलरामणीयकेन च प्रेक्षकाणामावर्जयति मनांसि । विद्याशालानिर्माणकृते राजकीयैः सार्धद्विसहस्रं रूपिकाः साहाय्यतया प्रत्यश्रावि । कार्यदर्शी आङ्गल्यामान्ध्रवाण्यां चाभिनन्दनीयं पाण्डित्यमावहति । प्रधानपण्डितत्वेन वाराणसीतः कश्चनाभिज्ञः शास्त्रिवर्यः अचिरान्नियुज्येतेति जानन्तो वयं नितरां संतुष्याम: ॥

बोब्बिल्यां चिरेण काचन संस्कृतपाठशाला प्राचलत् । तस्याश्चाभिवृद्धिमभिलषन् बोब्बिलिमहाराजः महता धनव्ययेन तां परिष्कर्तुमुद्योगमनुतिष्ठति । महाराजोऽयं श्री विशिष्टाद्वैतसिद्धान्तान् सरसया रीत्या आन्ध्रवाण्या स्वकीयेन आशयेन साधुत्वासाधुत्वविमर्शपूर्वकं प्रकाशयन्नत्यन्तमुपकरोति श्रीरामानुजसंप्रदायानुयायिनाम् ॥

---

# An Important Announcement.

UNDER instructions from His Holiness the Jagadguru Sri Sankaracharya of Kamakoti Peetham, Kumbakonam, it is decided to present *free of cost* to the purchasers of our edition of Brahmasutra Bhashya with Bhamati, Kalpataru and Parimala, a rare and hitherto unpublished commentary on Kalpataru called Abhoga (आभोगः). This is a very valuable commentary, evidently written after a perusal of the Parimala. It will surely be very helpful to the readers of the Panchagranthi. From the 5th part forwards we will give 3 additional formes of this Abhoga at the end of each part. In printing this Abhoga we have noted marginally the number of the pages of Kalpataru (our edition) to facilitate reference. Besides the above precious commentary a very elaborate and useful Table of Contents is being prepared for each of the four works, viz., Bhashya, Bhamati, Kalpataru and Parimala. These Tables are expected to come up to about 80 pages and these also would be sent free of cost to the purchasers of the Sri Vani Vilas Edition.

THE MANAGER,

BOOKSELLING DEPARTMENT,

**Sri Vani Vilas Press, SRIRANGAM.**

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

**R. Krishnamachariar, M.A.,**
**Vidyanidhi.**

**VOL. XX.** **No. 9.**




PRINTED AT THE SRI VANI VILAS PRESS SRIRANGAM

AND PUBLISHED AT MADRAS.



**Registered No. M. 103.**

# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only. including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयाब्जमिराहृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ] राक्षसवर्ष चापमासः । [ संचि. ९.

## सुभाषितानि ।



केनाप्यनर्थरुचिना कपटं प्रयुक्त-
मेतत्सुहृत्तनयबन्धुमयं विचित्रम् ।
कस्यात्र कः परिजनः स्वजनो जनो वा
स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ १ ॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यप्येवं कुरु भवरसास्वादने लम्पटत्वं
नोचेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ २ ॥

यदासीदज्ञानं स्मरतिमिरसंकारजनितं
तदा दृष्टं नारीमयमखिलमेतज्जगदिति ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ३ ॥

॥ श्रीः ॥

# ॥ भारतीयसंघसंस्करणम् ॥

## (पुरातनाभिमानिनामाशयविशेषाः ।)



सांप्रतं भारतेयाश्चावनतिमारूढास्तेषां संस्करणमावश्यकमित्यत्र न कोऽपि विप्रतिपत्स्यते । परं कतमया पद्व्या संचरिष्णूनां भविष्यति सुधारणमित्यत्र भिन्नभिन्नाभिप्राया भारतक्षेमाधानकांक्षिणः । केचन पाश्चात्यप्रहृतया पद्व्या संचरणीयमिति अपरे पूर्वकालीनानां सरणिरेवाश्रयणीयेत्यभिदधति । यौरोप्यपरिष्कराभिमानिनः न स्पृहयन्ति हिन्दूनामाचारविचारेभ्यः । भारतीयसमाजः अमीषामाचरणविचारणाश्च निन्द्या एव प्रतिभान्ति तेषाम् । तेभ्यः केचन पुराणमताभिमानिनः 'वयं हिंदवः इति स्मृत्वा वक्तव्यम्', इति कथयामासुश्चेत् न तेषां मानसम् विन्दति समाधानम् । ते तु भ्रुवं कुटिलीकृत्य, सनासासंकोचम्, 'किं वर्वते युष्मासु प्रतिमन्दिरमेकं वर्णं, प्रतिमस्तकमेका भाषा? यौष्माकीणपुराणानि सर्वाणि कल्पितकथावन्ति, युष्मदीयधर्मशासनानि जीर्णतां गमितानि, तानि केदारे सस्यभक्षणाय चागतं शकुन्तकुलं भीषयितुं स्थापिताश्चंचा इव । उद्वीक्ष्य चेमां तृणमयप्रतिमां भीत्वा ये पृष्ठतो धावन्ति तेषां निटिलतटे विलिखितं तथैव । ये शकुन्ताः सधार्ष्ट्यं पुरश्चागमिष्यन्ति ते सस्यं भक्षयन्त्येव । यौष्माकतत्त्वज्ञानविचारास्तु मानुषस्य मानुषतामेवाहरन्ति' । इत्यादि प्रत्युल्लसितं वचनशतमुदीरयन्तः तिरस्कारभारमेव क्षिपन्ति मुखस्योपरि प्रतिपक्षिणाम् ॥

अत्र पुरातनाभिमानिनः इत्थमुत्तरयिष्यन्ति । यथा वा—महाशयाः, एतेषामाशयविशेषाः आपातत एव रमणीयाः । यथा चेमी आरोप्यन्ते विचारस्य सरणिं तथा न तादृशी हृदयङ्गमता अवशिष्यते अमीषु । पाश्चात्यसुधारणाभिमानिनां भारतवर्षीयाणां अंतःकरणं विलुप्तम् । न तेषां दोषोऽयं परं कालस्य महिमा । वैदेशिकानां संसर्गेण अमी विचारास्तेषामन्तरङ्गे प्रादुरभूवन् । नैते तत्वतः हिन्दुधर्मस्यान्तरङ्गस्वरूपमभ्यस्यन् । कस्यचनापि वर्गस्य बहिरङ्गाचारविचाराः अस्मदीयसमाजीया इति न वयमुररीकरिष्यामः । रत्नाकरस्य तरङ्गततिमुद्वीक्षमाणानां न दृग्गोचरीभवन्ति तले विलीनानि अमूल्यरत्नानि । उपरिष्टात् दृश्यमानानि जलबिन्दूनि दर्शयित्वा अमून्येव भवदभिधीयमानानि मौक्तिकरत्नानि इति पृच्छन्तिचेद्वयं किमुत्तरयिष्यामः? तस्मिन् महासागरे असाधारणेन शेमुषीशक्तिसाहाय्येन निःशंकमन्तर्निमज्य यदि परिशोधयन्ति तदा स्वेष्टमधिगच्छेयुः ॥

हिंदुसमाजोऽयं न निःसत्वो नार्वाचीनो न गुणरहितः । नीलिमान्वितोपनेत्रधारिभिराखिलाः पदार्थाः नीलमयाः समीक्ष्यन्ते । तथैव भारतसमाजस्य आचारविचारान् पाश्चात्यसाहित्याधारेण अवलोकयताम् तदीयं स्वरूपम् न दृग्गोचरीभवति । हेयत्वं च तेषु परिस्फुरति । पौर्वात्यसुधारणानां हेयताज्ञानं पाश्चात्यानाम् स्वभावसिद्धः । एतद्विचारच्छाया स्वसाहित्ये तैः संगृहीतानाम् भारतीयसमाजिकधार्मिकविचारणासुपरि परिपतति । अतस्तेषु मलिनता दृश्यते । तथैव पाश्चात्यानाम् साहित्ये दृश्यमानाः तत्परिष्कारविचाराः समधिकमुज्वलाः चित्ताकर्षका दृश्य-

न्ते । तस्मात्केवलं पाश्चात्यसाहित्यमवलोकितवन्तो हिंदुतरुणाः स्वकीयान्तःकरणमुत्सादयामासुरित्यत्र नाश्चर्यास्पदं किंचिदपि । न संति खलु जगति दोषरहितानि वस्तूनि । तथैव निरुपयुक्त वस्त्वपि । कतिषुचन वस्तुषु दोषाः, अपरेषु गुणाः बहवः समुपलभ्यन्ते । सरलमनसा शांतरीत्या विमृशतां नेदं तिरोहितं भवति । परमभिमानतिरस्कारादिमनोविकारकबलीकृतदृष्ट्या पदार्थान् समीक्षमाणानां तदीयं स्वरूपं नावगम्यते । अभिमानेन विलोक्यमानेषु वस्तुषु गुणा दोषाश्च बिंबस्थौल्यदर्शकादर्शे समीक्ष्यमाणाः पदार्थाः इव समधिकमुज्वला महीयांसः संलक्ष्यंते । अयं खलु सृष्टेर्नियमः । नियमेनामुना निबध्यन्ते खलु हिन्दुसमाजपरिष्कारकाश्चापि । उपरि निर्दिष्टया रीत्या स्वकीयान्तःकरणमुत्सादितवन्तः समाजसंस्कारप्रियाः हिंदुसमाजे केवलं छिद्राण्येव संपश्यन्ति । भारतेयसमाजः क्षुद्रतरो दृश्यते तैः । अन्तोऽन्तःकरणविहीनानामन्यसुधारणामुग्धानामेतेषां वचनं न विन्दति निर्दुष्टताम् ॥

पाश्चात्यसंस्काराभिमानिनः अस्मदीयसमाजपुरुषस्य गात्रं न हि समग्रतया निरीक्षांचक्रिरे । पुरा कदाचन हिन्दुसमाजः वसुधायां विद्यमानेभ्यः सर्वेभ्यः समाजेभ्योऽपि संस्कृत इति विदितचरमेवेदं पुरावृत्तविदाम् । सांप्रतमहमहमिकया पुरोधावन्तः पाश्चात्यसमाजाः केवलं वनचरस्थितौ यदाकिलासुः तदानीमेव हिन्दूसमाजसंस्करणतरुः गगनतलं चुचुंब । हिन्दवः तत्तरोः मधुरफलानामुपभोगमकार्षुः । पाश्चात्यदेशं गतवन्तः । अनेके आर्यैः नैकसुधारणा अधीतवन्तः इतीतिहासतो ज्ञायते । परं

स्वाभाविकसृष्टिनियममनुसृत्य हिन्दुसमाजः आत्मीयोज्वलस्वरूपविरहितः सन् अवनतिपथमापन्नः । कालेकाले समागतानामनेकेषामरीणां प्रहारैः हिन्दुसमाजपुरुषः पञ्चत्वमुपययौ । विलीनस्तदात्मा, केवलमवशिष्टं तदीयं मृन्मयं वपुः, तदपि जीर्णतामापेदे । इदानीं पाश्चात्यसुधारणाऽभिमानिनो भारतीयाः पाश्चात्यसाहित्याधारेण अतश्चैकं ततश्चैकं वृत्तमधीत्य, तन्मतमृन्मयदेहस्य एकैकमवयवमुद्धृत्य इमे एव स्वकीयासाधारणेन तेजसा दिग्भ्रमं विरचितवतः भवदीयसमाजपुरुषस्य अवयवाः इत्यनुयुञ्जते । तस्य अस्थिमात्रावशिष्टामसंख्यकीटकाविष्टां करोटिं गृहीत्वा जगते प्रदर्श, 'पश्यत, इदमेव हिन्दुसमाजपुरुषस्य तत्वज्ञानपूर्णं मस्तिष्कम्, इति सकरास्फालनमुपहसिष्यन्ति । तथैव समाजपुरुषस्य बाहुकुल्यमुन्मूल्य 'अयं समाजपुंसः क्षत्रियवर्गः, इति उद्घोषयन्ति । एवमेव प्रत्येकप्रतीकमूलमुत्पाट्य निरीक्षमाणा निर्भर्त्सयन्ति । एतेनास्मदीये समाजे हेयता दरीदृश्यते । उपरतनरस्य मृन्मयं देहमेव वा भवतु, तत्र केवलं कीकसान्येवावशिष्यन्ताम्; तदस्थिपञ्जरं समग्रतया शान्तेन चेतसा निरीक्षमाणान् विलक्षणं तदीयसंविधानकम् कौतुकाक्रान्तान् करोतीत्यत्र नास्ति स्तोकोऽपि द्वापरः । एवमेवानेकैः कारणैः काले काले प्रादुर्भूतानामनेकसमाजानां संस्कारसंसर्गेण भारतीयसमाजपुरुषस्य तेजःपूर्णा पूर्वस्थितिरिदानीं नावशिष्टाऽपि तदीयरचनाया अनेकतत्वानि अतीव पवित्राणि जगदीयसुधारणाभ्योऽपि समुन्नतविचारवन्ति वर्तन्ते । नात्र संदेहः । पाश्चात्यपरिष्कारमुग्धानामेतदीयान्तरङ्गस्वरूपाव-

गमने मानसस्थैर्याभावाद्वा किं स्विदन्यसामाजिकसंस्काराणां बाह्यस्वरूपमोहाद्वा अस्माकीनसमाजस्य निजस्वरूपमनवगच्छन्तः बाह्यछिद्राण्येवाविष्कुर्वन्तः तिरस्कुर्वन्ति हिन्दूनां समाजम् । अत एवामीभिरारोपिता बहिरङ्गदोषाः भारतीयसमाजाय न तादृशं हीनत्वं वितरितुमीशते । सत्यमिदम्; हिन्दवः स्वतेजोविप्रमुक्ता इति। अथापि तैरन्येषां नाम यूरोपीयानाम् सुधारणामवलोक्य आत्मीयान्तरङ्गोन्नतिरासादनीयेति वचनं न हि सर्वथा ग्राह्यं भवति ॥

पाश्चात्यपरिष्काराभिमानिनामाशयमनुसृत्य यैरोपसमाजशास्त्रनियमजालेनैवास्माकसमाजम् परिष्कर्तुं नहि प्रक्रुते साध्यं पश्यामः । उदाहरणार्थं जातिभेदविचारमिदानीं गृह्णीमः । कदाचित् तेषांमाशयमनुसृत्य सकलजातयः नैसर्गिककारणैरेव उद्भूताः स्युः । पृथिव्यामनावश्यकानि वस्तूनि स्वयमेव अवनतिपथमासाद्य क्रमशः प्रणाशमुपयान्ति । आवश्यकान्येव उन्नतायां पद्व्यां संचरिष्णूनि अभिवृद्धिमापद्यन्ते । आधुनिकसृष्टिशास्त्रज्ञानां संमतोऽयमर्थः । नियममेनमनुसृत्य निरीक्षमाणा हैन्दवसमाजजातिषु तत्समाजानुपयुक्ततां नारोपयन्तीति प्रतीमः । अनावश्यकतास्ति चेत् ताः नैसर्गिककारणैर्नोत्पन्ना एव स्युः । कदाचिदुत्पन्ना अपि केषुचनदिवसेष्वेव नाम शेषतामापद्यन्ते स्म । 'डार्विन्, महाशयस्योत्क्रान्तितत्वमनुसृत्य अनावश्यकमत एव प्रक्षीणतामाप्तं मर्कटानां लांगूलमिव हिन्दूनां जातयोऽपि विलीनतामुपयान्तिस्म । पृष्ठास्थिनः अधोभागे अवशिष्टं वालपर्वाकिनसदृक्षम् जातिभेदस्य चिह्नमवशिष्टं स्यान्नवेत्यत्र विद्यते महती संशीतिः ॥

इदममायमेवांगीकरणीयं भवति, यद्भारतेयसमाजीयवि-

चारसरणिरन्या पाश्चात्यानां विचारमार्गोऽन्य इति परमास्माकीन-विचारपद्धतिर्योग्या ? आहोस्वित्तेषाम् विचारपद्याऽर्हा ? इदं नि-र्णयकोटौ परिपतति । ते हि स्वकीयविचारक्रममनुसृत्य आ-त्मीयसमाजस्थितीनामनुरूपम् समाजशास्त्रं निर्ममिरे । तदीय-समाजशास्त्रस्य नियमाः अस्मदीयसमाजाय नानुरूपा इति त एव निर्णयमभिप्रयन्ति । समाजशास्त्रस्य नियमाः ऐतिहासि-कपद्धतिना परिशोध्य निर्णेयाः । स्थानं कालञ्च सूक्ष्मरीत्या निरीक्ष्य कार्यकारणभावान् निर्णीय सिद्धान्ताः स्थापनीयाः । समग्रहिंदुसमाजीयप्रत्येकविचारस्य, पाश्चात्यसमाजशास्त्रनियमा अनर्हाः संजायन्ते । अस्मदीयसमाजं निरीक्ष्य आस्माकीन समाजशास्त्रनियमा निर्णेयाः । अन्यदीयसमाजशास्त्रस्य नियमान-वेक्ष्य आस्माकीनसमाजाचारविचारणां निर्मित्सतां कर्म न हि संपादयति सामञ्जस्यम् । यौरोपपरिष्काराभिमानिनामाशयमनु-सृत्य हिंदुषु पाश्चात्यविचारमार्गानुरूपा विचारपद्धतिरभविष्यत्, सर्वं साध्वभविष्यत् । परं वस्तुस्थितिर्न तथा विद्यते । वैचित्र्यं विश्वस्य सहजधर्मः । उत्तरभारतस्य पूर्वभागे यथाऽसंख्येयशाखो-पशाखाभिः कमनीये निम्नगे गंगायमुने प्रवहतः, तथैव पश्चिम-भागे सिंधुनदः राजपूतस्थानस्य वालुकाप्रदेशे प्रावहिष्यत्, मार-वाडमरुभूमेर्जनिरेव नाभविष्यत् । किंतु किं करणीयम् ? परमेते-नास्मदीयेन वचनेन भरतखंडे विद्यमानाः परःसहस्रं जातयः हि-न्दुसमाजोन्नतये निदानीभूता इत्यस्माकमभिप्राय इति न विदाङ्कुर्व-न्तु सचेतसः । जातिजातिषु अंतरङ्गमात्सर्यं यावद्विद्यते तावत्ताः अनर्थकरा एव । समाजावनतिबीजम् समाजव्यक्तीनां मत्सर-

भावे विद्यते । तेषामज्ञाने वर्तते न तु जातिभेदे । समाजहितकाङ्क्षिभिः तन्मात्सर्यमज्ञानमपाकर्तुं प्रयतितव्यम् । केवलं जातिभेदस्य नाम्ना तिलाञ्जलिदानेन न कोऽपि लाभो जायते । आसेतुहिमनगं व्याप्ते भरतखंडे वसाद्भिः सर्वैः का जातिरवलम्बनीया । सर्वैर्ब्राह्मणैरेव भवितव्यम्? उत शूद्रैः? आहोश्वित् क्रैस्तैः? एवं कदाभवेत्? कथंभवेत्? पूर्वं बुद्धनानकप्रभृतयो महामहापुरुषाः, भरतभुवि जनुषमासाद्य भरतरसामुद्धर्तुं प्रायस्यन् । परं सृष्टेः साहजिकधर्ममनुसृत्य नान्तं जगाम तदभिलाषः, समेषां धर्माणामन्तरङ्गस्वरूपमेकमेव । सर्वे वयमेकेनैव समुद्देशेन जगति जनिमाप्ताः । सर्वेषामस्माकं ध्येयमेकमेव । अमीभिः सुविचारैर्जनानां चित्तदर्पणे प्रतिबिंबितैर्भवितव्यम् । सत्येवं भिन्नभिन्नजातीयानां मत्सरभावः स्वयमेव विलीनाति । एतादृशविचारप्रादुर्भावस्य ज्ञानमेव निदानमित्याकलयन्ति सर्वे समकण्ठं सुशिक्षिताः । यदा किलास्मदीयसामाजिकव्यक्तिषु, ईदृशं ज्ञानमुदेति तदा किल जातिभेदोत्पत्स्यमानाः दुष्परिणामा नामशेषतां व्रजन्ति असावर्थः परिष्कारकैर्न हि विस्मर्तव्यः । जातिभेदमुन्मूल्य समाजं परिष्कर्तुमिच्छन्तः स्मारयन्ति सिंधुनदं मारवाडजनपदे वाहयितुमभिलषतः । पाश्चात्यसमाजशास्त्रतत्वयष्टिकामवलम्ब्य अस्मत्समाजीयेषु विचारक्रांतिमापिपादयिषुभिरनुस्त्रियते प्रतिप्रसंगमीदृश एव कोटिक्रमः । अस्माकं समाजस्य, तदीय समाजशास्त्रस्य तत्वानि अननुरूपाणि भवन्ति । एतावता अस्मदीयानाम् विचारा हेया इति वदन्तो नाभिनन्दनीया भवन्ति ॥

( क्रमशः । )

॥ श्रीः ॥

# ॥ नारदनैपुणी ॥

( पूर्वतोऽनुवृत्तम् । )

---

सुभद्रा—( अर्जुनस्य पादयोः प्रणम्य ) प्राणनाथ ! प्राणनाथ ! परिपालय मद्वचनम् ! परिपालय ! पूर्वोत्तरपरामर्श विनाऽज्ञानादेतेभ्यः प्राणभिक्षां प्रादाम् ।

अर्जुनः—चित्रसेन ! सदारः किञ्चित्तत्र तिष्ठ । शरणागतरक्षकोऽर्जुन आत्मप्राणदानेन वाऽवश्यं पालयेच्छरणागतान् । मा खलु भीः कार्या । किञ्चित्तत्र तिष्ठ ।

(चित्रसेनः सदारो याति ।)

अर्जुनः—सुभद्रे ! सर्वमपीदं मां वशयितुकामया त्वया कृतं साहसं खलु ?

सुभद्रा—नाथ ! न खलु मह्यं कुप्यः ! चित्रसेनदाराणां प्रार्थनां श्रुत्वा दयमानमानसाऽहं ददामि प्राणभिक्षामिति प्रत्यश्रृणवम् ! अनन्तरमेवाऽवागमम्, प्रतिज्ञाता कृष्णमूर्तिरिति । यदि सत्यमभिधीयते कार्यं दुस्साधमिति मत्वैवेत्थमभ्यधाम् । नाथ ! प्रतिश्रुतपरिपालनायैवेत्थं कर्तुमुद्यक्ताऽभवम् । यदि मदपराधं न क्षमते भवान् कोऽन्यः क्षमेत । किं मदीया वाण्यनृता भवितुमर्हति ? वीरशिखामणेः विजयस्य दारा अपि सुभद्रा प्रतिज्ञाभङ्गमकरोदित्यन्ततो भवन्तं खलु जना निन्देयुः ?

किमद्याऽपि मह्यं क्रुध्यति भवान्? विधेयया मया कृतोऽयमपराधः किं न सोढव्यः?

**अर्जुनः**— सुभद्रे! कुतो न क्षमेय? असहमानो वा किं करोमि? कस्तवाऽत्रापराधः? सर्वजगद्रक्षकस्य चेदेवं विचारः, कः प्रभुस्तमन्यथायितुम्?

**सुभद्रा**— नाथ? किमद्याऽपि म्लानवदनोऽसि?

**अर्जुनः**— भगवान् कृष्ण इत्थं मां परीक्षत इति प्रतिभाति। कतिचिद्वो दिवसेभ्यः पूर्वं सोल्लाससमावयोः क्रीडतोः क्रीडायुद्धार्थं मामाह्वयत। क्रीडार्थमपि वा नाऽहं त्वया युध्येयेत्यभ्यधाम्। तदर्थमेवाऽयमुपायः कृतो भवेत्कृष्णेन। प्रथमतश्चित्रसेनवधं प्रतिज्ञाय त्वद्वारा मया तस्याऽभयप्रदानमकारयत्। मत्कुलदैवतस्य कृष्णस्य पुरतो गाण्डीवं नमयन् कथं बाणान् प्रयुञ्जीय?

**सुभद्रा**— न खलु भवता किमपि चिन्तनीयम्। प्रथमत एव मया पृष्टः कृष्णः 'भर्तरि विजये स्थिते तव किं दुस्साधम्? नैव तव विरुद्धमाचरेयम्।' इत्यब्रवीत्।

**अर्जुनः**— तदर्थं वेत्थमकार्षीः? अनुजा खलु कृष्णस्य! कुलसम्प्रदायः।

**सुभद्रा**— प्राणनाथ,— परं भवत्कुलम्?

**अर्जुनः**— अलमलम्, न खलु समारभस्व। जानामि तव यवीयानेव विनेता' इति। चित्रसेनः प्रतीक्षते। त्वरितं गन्तव्यं तत्र। अनुजानीहि।

सुभद्रा— प्राणनाथ! सुखं विजयी समागच्छतु भवान्। न खलु चिन्ता कार्या। 'कृष्ण एव गतिर्मम' इति तदुपरि बाणान् प्रयुङ्क्ष्व। कथमपि विजयेथाः।

चित्रसेनः— अभयम्! अभयम्! वीरशिखामणे! विजय! अभयम्!

अर्जुनः— एष आगतोऽस्मि। (त्वरितं गच्छति।)

सुभद्रा— हन्त! हन्त! कीदृशं दुःखं सम्भवेद्वा! समागत एव यवीयान् इति प्रतिभाति। अहमपि गत्वा पश्यामि।

(गच्छति।)

इति नवमो निःश्वासः॥

---*---

## अथ दशमो निःश्वासः॥

---*---

भगवान् दिवसेश्वरः प्रवालक्षोदसगर्भ्यैः किरणमण्डलैरस्तगिरिकटकं भासयामास। लक्ष्मीश्च स्वाश्रयभूतानि कमलान्युज्जिहानाऽऽत्मनश्चञ्चलतां प्राकाशयत्। चक्रवाकदयिता अर्धविगलितान् विहाय तामरसाङ्कुरान् दुःखसागरमग्ना आक्रन्दितुमारेभिरे न खलु मित्राण्याश्रयन्ते निर्गलितविभवानिति बोधयन्त इव पुष्पन्धयाः निर्लक्ष्मीकाणि राजीवानि जहातिस्म। समयेऽस्मिन् चित्रसेनं हन्तुकामः कृष्णः गालवानुगतस्सत्वरमागच्छति।

**गालवः**— हे कृष्ण! आसन्नास्तमयो भगवान् सहस्रभानुः। नाऽद्यापि निर्वहसि प्रतिज्ञाम्। विजयस्तु शरणगताय चित्रसेनाय प्रतिश्रुत्याऽभयप्रदानं त्वया प्रयुज्यमानानि सर्वाण्यपि निष्फलयत्यस्त्राणि। अवधेहि, कालोऽतिक्रामति। झटिति।

**कृष्णः**— महर्षे! आगच्छतु नामाऽर्जुनः, किमहं बिभियाम्! अथवा प्रतिश्रुतमन्यथयेयम्? मास्तु भवतः काऽपि चिन्ता। नारयणास्त्रमिदं रोद्धुं किमीष्टेऽर्जुनः? प्रयोगेणाऽस्य प्रतिश्रुतमद्यैव निर्वहामि। पश्यतु भवान्! आगच्छत्।

(गालवानुगतो द्रुतं गच्छति)

(अपरतश्चित्रसेनानुगतो विजय आयाति)

**चित्रसेनः**— वीरशिखामणे! न खलु कष्टं मन्य एतावता मम परित्राणम्। मम वधायाऽऽगतप्रायमिदं नारायणास्त्रम्। अस्मादेव रक्षणीयोऽहं भवता। राजन्! विजय! अभयं, अभययम्। आगतमेव।

**अर्जुनः**— चित्रसेन! न खलु बिभिहि। पशुपतिना दत्तेन पाशुपतेन सनाथं विजयं जेतुं नाऽलं नारायणोऽपि। प्रयोगेणाऽस्य विफलयामि नारायणास्त्रमिदम्। पश्य, अनुयाहि माम्।

(चित्रसेनानुगतो याति)

(भयङ्करं महान्तं शब्दं श्रुत्वा सुभद्राऽऽगच्छति)

**सुभद्रा**— हन्त! मदागमनात्पूर्वमेव किमेतौ योद्धुं समारभेताम्? हा! एताभ्यां प्रयुज्यमानान्यस्त्राणि विनाशयन्ति लोकम्! अचि-

रादेवेमान्यस्त्राणि भुवनान्तर्गतं चराचरं सर्वमपि भस्मसात् कुर्युरिति प्रतीयते ! हन्त ! हन्त ! किं करोमि ? एकतः पतिः, अपरतः पूर्वजः । हहह ? अमराणां सान्त्ववचनमप्यनादृत्येत्थं युध्यमानावेतौ किं मम वचनं शृणुयाताम् ?

(कान्दिशीके रत्नावली, सन्ध्यावली चयातः)

रत्नावली—
सन्ध्यावली— } देवि ! देवि ! सान्त्वयत्वेतौ भवती । न चेत्सकल एवाऽयं लोको नश्येत् । झटिति, झटिति ।

(गालवानुगतः कृष्णः, चित्रसेनानुगतो विजयश्चागच्छतः)

कृष्णः— अरे अर्जुन ! अपराधिनमभयप्रदानेन किमाद्रियसे ?

अर्जुनः— अबुद्धिपूर्वकायाऽपराधाय दुर्बलं तं किं हन्यात् भवान् ?

कृष्णः— अरे ! पश्यामि नैपुणीं तव !

अर्जुनः— पश्यतु सम्यक् भवान् !

(द्वावपि स्वस्वचापान्नमयतः तावन्तरा सुभद्रा झटित्यागच्छति)

कृष्णः—
अर्जुनः— } सुभद्रे ! अपेहि ! अपेहि !

सुभद्रा— अत्याहितम् ! नाथ ! पूर्वज ! इतो न खलु गच्छेयम् । प्रथमतो मां हत्वा ततो युध्येथाम् । समरेण युवयोर्लोको यदि नश्येत्सोऽपवादः कस्य ? मां खलु निन्देयुर्जनाः । ततः प्रथमतो अहमेव म्रिये । यदि युवां न समापयतस्समरं तदाऽस्मिन् क्षणे त्यजामि प्राणान् । सत्यमिदम् ।

**कृष्णः--** }
**अर्जुनः--** } किं कर्तव्यं मया? ब्रूहि।

**सुभद्रा--** स्वस्वास्त्राणि प्रतिसंहृत्य समाधातव्यम्।

**कृष्णः--** समाधाने न कोऽपि प्रत्यवायो मम।

**अर्जुनः--** नास्ति ममापि, आत्मना प्रयुक्तस्याऽस्त्रस्य प्रतिसंहाराय ब्रूहि तव पूर्वजम्।

**कृष्णः--** तव भर्तारं ब्रूहि प्रथमतोऽस्त्रप्रतिसंहाराय।

**अर्जुनः--** स खलु प्रथमतः प्रायुङ्क्त। अतस्तेनैव प्रथमतः प्रतिसंहरणीयम्।

**सुभद्रा--** पूर्वज! तथैव करोतु भवान्! कात्र हानिर्भवतः?

**कृष्णः--** तथैव, यथा तवाशयः। प्रतिसंहृतमिदमस्त्रम्।

**अर्जुनः--** मयाऽपि प्रतिसंहृतम्।

**सुभद्रा--** इतः परं वा समाहितौ भवतम्।

**कृष्णः--** (अर्जुनं परिष्वज्य) किं तथा वदसि?-- अर्जुन! किमावामयुध्यावहि?

**अर्जुनः--** न खलु भगवन्!

**कृष्णः--** अक्रीडाव! युद्धं वाऽऽवयोः? वीरशिखामणेर्विजयस्य नैपुणीं द्रष्टुकामः साक्षाच्छङ्करोऽपि विहाय रजताद्रिं किरातवेषधारी युध्यमानः कुण्ठितसामर्थ्योऽन्तेऽर्जुनं श्लाघमान एव गतः। परं मया विलोक्य विजयसामर्थ्यं समरे नाऽनुभूतः परमानन्द इति विचार्येदमकार्षम्। नाऽन्यत्किमपि— किं? अर्जुन!

अर्जुनः— आं ! आम् !

गालवः— हे कृष्ण ! मम का गतिः ? कपटनाटकसूत्रधार इति नामधेयं तवैवाऽर्हम् ! यदि युवामेकाभिप्रायौ तदा प्रतिज्ञाया का गतिः ? तदैव नारदोऽभ्यधान्न खलु विश्वसिहि कृष्णस्य वचनमिति ।

कृष्णः— न खलु तथा महर्षे ! मद्वाणी किमनृता भवेत् ? 'चित्रसेनस्य शिरसा वैरनिर्यातनं' खलु मया प्रतिश्रुतम् । यथोक्तं करोमि । चित्रसेन ! शिरसा महर्षेः पादयोः प्रणम्य सप्रश्रयं याचस्व क्षमापणम् ।

चित्रसेनः— तपोनिधे ! अज्ञानात्कृतोऽपराधो मर्षणीयः ।

गालवः— अरे ! क्षान्तं मया । उत्तिष्ठ, इतः परमपि वाऽवहितो भव ।

चित्रसेनः— भगवन् ! यथा निदेशः ।

कृष्णः— महर्षे ! पश्यतु भवान्, रक्षिता मद्वाणी । परिपालनीयं हि सुभद्रार्जुनयोश्च भाषितम् ? तदर्थमेवेत्थमकार्षम् ।

गालवः— सम्यक् ! अति हि प्रियं नः ।

कृष्णः— तदस्तु— सुभद्रे ! यवीयानिति किञ्चिद्वा मां किं बहुमंस्थाः ? भर्तारमेव खलूत्कृष्टतयाऽचिन्तयः ?

सुभद्रा— पूर्वज ! न खलु तथा । बाल्य एव भवता कृतमुपदेशमनुसृत्य प्राणनाथमेवेश्वरभावनयाऽसेविषि । कोऽत्र दोषः ?

कृष्णः— लोकसम्प्रदायः । सर्वलोकविनाशोऽपि स्त्रीभिः । सर्वलोकस्थितिरपि ताभिरेव ।

**चित्रसेनः** (सदारः समालोच्य) देवि! सुभद्रे! विधेयस्य मम प्राणान् रक्षितवत्या उदारायास्तव कं प्रत्युपकारं करोमि? तथाप्यङ्गुलीयकमिदमङ्गीकुरुतां भवती। (अङ्गुलीयकं ददाति) देवेन्द्रेण मह्यं पारितोषिकतया दत्तमिदमपरिमितमाहात्म्यमङ्गुलीयकम्।

**कृष्णः**— आं! किमिदमङ्गुलीयकम्? एतदर्थं खलु सत्यभामाऽसकृन्मां प्रार्थितवती—सुभद्रे! किमर्थमिदं तव? विजयोऽपि सदा त्वदधीन एव खलु वर्ततेऽर्जुनः?

**सुभद्रा**— आवश्यकमिदं मम।

(अङ्गुलीयकं धत्ते)

**अर्जुनः**— सर्वमपि सनातनस्य भगवतोऽनुग्रहः।

इति दशमो निःश्वासः ॥

पि. शङ्करसुब्रह्मण्यशास्त्री।



स्वच्छन्दान्निव सामिपुष्पधनुषः शस्त्राभिघातज्वरः
[ विमृश्य तापातिशयं निरूपयन् ]
शाम्येदेष तदा कथञ्चिदथवा शान्तिं ततो न व्रजेत् ॥

अयमेव हि मे पुनरसमेषुतापातिशयो विनोदनोपायः । एतादृशोऽपि तावदनुतापविनोदनमीषदपि न तनोतीव । तदसारैरन्यैः किमिह साध्यते । तथाहि—

प्रालेयस्रोतसा किं तनुमिलनवशात्प्रादुरुष्णेन शीघ्रं
पाटीरैः कर्दमैः किं सपदि हृदि परं शुष्कचूर्णायमानैः ।
प्रत्यग्रैः किं मृणालैर्झटिति करतलस्पर्शनाम्लानिभाग्भिः
हारैस्तारैश्च किं वा श्वसितपरिचितैर्हन्त सद्यः स्फुटद्भिः ॥

अद्य तावदेतादृशो मदनशरतापकृताभिषङ्गः केनोपायेन मनो विनोदयामि । [विमृश्य] अहो दृष्ट्या गृहीतः परमार्थः ।

अधुनाचिरमन्तरा वसन्तं
विधुनानात्ववदाननानुबिम्बम् ।
कलयन् फलकेलिकामिकामं
सरयं किञ्च मनो विनोदयामि ॥

[दक्षिणाक्षिस्पन्दनमभिनीय] अहो मुहुरपि स्फुरति दक्षिणं चक्षुः । [सानुस्मरणम्] तदनेन शुभशकुनेन तस्या वनितामणेरुपमाता सरयमाकाशयानेन यावदायातीह सा प्रतिभावती भगवती । सा च योगिनी सरयमेव योजयति मामन्तरीपान्तरवर्तिन्यापि तया राजन्यावतंसकन्यामण्या । (विचिन्त्य) सवेगमिहागमिष्यति स देवी पक्षपातिकुटिलान्तरङ्गः सारङ्गः । तदि-

R. 8

दानीमहं जोषंभावमेव संभावयामि [इति तूष्णीं तिष्ठति ।]

[ततः प्रविशति गूढं संभृतचित्रसंभारो विदूषकः ]

**विदूषकः—** (विकटं परिक्रम्य यथोचितमुपविशति)

**राजा—** (स्वगतम्) घनपवनव्याधिनिरवधिनटितरदनपदोयं मंक्षु किमपि विवक्षुरिव लक्ष्यते । अपि नाम मदनवेदनामिमामेष मामकीनामाक्षिपेत् ।

**विदूषकः—** (पवनव्याधिपीडित इव चिरेण) सविकारव्वदतिसहे तुह तारिसं धिरं वम्महेण आधिरिदंविअ दीसइ । णूणं जादरूवाणि बन्धणाऐ सामअणवेअणा । ता एत्थअलं एदाए तित्थजत्ताए झत्ति तञ्जापुरं एव्व गमिस्सामो ।

**राजा—** [स्वगतम्] अयमेव तावदेतत्प्रतारणोपाय: । अस्यां मदनवेदनायां निदानं जातरूपामेव निरूपयामः [प्रकाशम्] सखे! सारङ्ग!

**पश्यालीको मम हितकृते प्राप्तमग्रावधाक्षी**
**त्पुण्ड्रेष्वासं द्रुतमिति रुषा भूधरेन्द्रस्य कन्या ।**
**तादृक्षाणामसृजदवनौ तावदद्धा परार्धं**
**बाधन्ते यत्प्रतिदिशममी बाणवारैरपारैः ॥**

**विदूषकः—** (साटोपमुत्थाय) सहे सच्चं किमेदम् ।

**राजा—** (सोपहासम्) सत्यमेवैतत् ।

**विदूषकः—** तह जूएदाणं वम्महाणं पुण्डमया कोयण्डकीडा विसखण्डं खण्डिय मं खुणिसे संभक्खेमि । सहे एत्ताहे महप्पहावेण निब्बिदं लहेहि । [इति परिक्रामति]

**राजा**— [ हस्तमाकृष्य विदूषकं यथापुरमुपवेशयति ]

**विदूषकः**— [ उपविशति ]

**राजा**— [ शीघ्रमुत्थाय उपविष्टं विदूषकमाकर्षति । ]

**विदूषकः**— (उत्थाय) एदिणा, णमुण्णमणेण अक्खरम्भाससमये उव्वज्झायकारिदणमुण्णमणं अणुह्मारिदोह्मि ।

**राजा**— (विहस्य) बालोद्यानमासाद्याशु जातरूपाया देव्या रूपरेखाञ्चितफलके विलिखन् मनो विनोदयामि ।

**विदूषकः**— जं अहिरुइदं महारायस्स (स्वगतम्) गूढं संभिद चित्तफलयलेहलणे संभारं एदं बालुज्जाणमज्झा वट्टिदस्ससे जाव दंसेमि (प्रकाशम्) एदु एदु भवम् ।

(इत्युभावपि परिक्रामतः)

**विदूषकः**— एदं बालुज्झाणदुवारम् । ता एद्ह पविसामो (उभावपि उद्यानप्रवेशं नाटयित्वा परिक्रामतः)

**विदूषकः**— इदं एव्व उज्जाणमज्झालङ्करणं चन्दयन्तसिलाकरावसिसिरन्तण्णिरन्तरदिण्णसोक्खं चउक्खं च उक्खं ता एत्थ उपविसामो । (यथोचितमुपवसतः)

**विदूषकः**— (स्वगतम) एदंसमग्गसंभिदचित्तफलअविलेहणसामजग्गि या गिदो एव्व सेपदिसेमि ।

**राजा**— (साञ्जलिबन्धं विधिमभ्यर्थयते ।)

**तस्या रूपमहं लिखामि सुदृशस्तत्तादृशं सांप्रतं**
**पाणौ साधु विधे विधेहि भगवन् सान्निध्यमस्मिन्ततः ।**

श्रेयो मे भविता तवाप्यपयशः प्रायो न भूयादिदं
सर्वोत्कृष्टगुणा घुणाक्षरनयात्तत्सृष्टिरासीदिति ॥

(विमृश्य) अयं च पुनरदसीयरूपरेखाविलेखानुरूपवर्णसंभारे संभाविते विचारः । तथाहि--

श्यामा कार्मुकमण्डलं पृथगथ श्यामं च तल्लांछनं
चाञ्चल्येन विना कृतां च तटितं किंचित् द्रुतं विद्रुमम् ।
चूर्णीकृत्य सुधारसेन सुतरामेतानि चेत्संभृता-
न्यस्या रूपकलां कथञ्चिदखिलां शक्नोमि तां लेखितुम् ॥

[भूयोऽपि विचार्य] संभाविते वा कथमपि वर्णसंभारे तादृशे वितथ एव मनोरथः । यदिदानीम् ।

स्मृता चेतसा तन्वी स्थगयति दृशावश्रुलहरी
न तन्मार्ष्टुमीष्टे कथमपि शयःस्तम्भवशतः ।
अथापि प्रोन्मार्जन् हरहर निजैः स्वेदसलिल-
प्रवाहैस्तामाशु प्रथयति च कंपं च भजते ॥

अपि च—

दृष्टिर्मानसमप्यहो मम यदा दृष्टा चकोरेक्षणा
तामेवाश्रयतस्तदाप्रभृति तद्गात्रानुषङ्गेण ते ।
संप्राप्याशु कृतार्थतां न हि पुनः स्पृष्टुं च मांवाञ्छतः
पौरस्त्येऽपि यतो न वस्तुनि मितिर्नैवानुभूते स्मृतिः ॥

[धैर्यमवलंबमानः] भवतु सखे! सारङ्ग! प्राकृतं वा वर्णसंभारं संभर ससंभ्रमम् । कथञ्चिदपि साकिलिकिञ्चितं देव्या विव्यामाकृतिं फलकान्तरे विलिखामि ।

**विदूषकः—** शंखधवलितपटस्निग्धं फलकं वर्णभेदान् कुलिकाश्च ददाति)

**राजा—** चित्रफलकलेखनसामग्री कथमचिरेण संपादिता भवता ।

**विदूषकः—** [सोत्प्रासम्] मह तारिसबह्मणत्तणाणुहावेणासुएसो संपादितो चित्तफलअलेहणसंभारो । ता तुवरेदु चित्तफलयविलेहणे जणेसरो ।

**राजा—** [प्रमाणलेखां चित्रफलकमध्ये ऋजु विलिख्य किमपि मंत्रयमाण इव तिष्ठति ।]

**विदूषकः—**सहे एत्ताहेचित्तावक्खेवेण चित्तलेहय अत्तभवं विकिं विलंवदि ।

**राजा—**[विहस्य] वयस्य किं न जानासि ।

प्रतिप्रतीकं प्रमदाशिरोमणे-
रवेक्ष्य रूपातिशयं मनोरमम् ।
विलेखनीया खलु सा विचार्यता-
मकाण्ड एव त्वरयस्यहो कथम् ॥

**विदूषकः—** [सोत्प्रासम्] दे महाराय जं दाणिं तु हता एविलोयणं होदिकिं विलेहेण सुरसरियं समुवेदोमिय दहिकोणुपेक्खस दहो

**राजा—** [सरोषम्] कथमाभासविभावयसि मे भावमन्यथाकारं मनोगताया एव सुतनोर्वितनोति रूपरेखां मातृकाम् ।

[इति तां चित्रफलके स्वकरमभ्यर्थयते ।]

नियोक्ष्य त्वां रूपं करविलिखितुं नीरजदृशो
विलिख्यैतत्सद्यो वितर भुवि मे जीवितकलाम् ।
अतो भूयः श्रेयस्तव हि भवितानन्यसुलभं
परिष्वङ्गादस्याः सफलयति भाग्ये मम शुभम् ॥

[ किञ्चिद्विलिखन् स्पर्शं श्रुतिं चाभिनीय सोद्वेगं तूलिकां भूमौ निक्षिप्य ।]

स्पन्दंते मकरन्दशीकरकराः पार्श्वे समीराङ्कुराः
संधीभूयविचूण्वते मधुलिहः सङ्गीतभङ्गीं क्वचित् ।
दत्वा किञ्च कुहापि चुञ्चुविदृतं दष्टावशिष्टं बिसं
कोकाः स्वप्रमदासु ते रतिकृते कोलाहलं कुर्वते ॥

तदिह ममैकाग्रता मनसः कथं भवतात् ।

**विदूषकः**— सरदाअमणिरन्तरविअसन्तविविहिषा अवणिहव संपुण्णे इमस्सिं लीलारण्णे उवविसिअ अरविन्दकन्दोट्ठसन्दोहमयरन्दवहणमन्दसञ्चरणफलमाहपवणपरिप्पन्दणं भसलकुलकलयलं रत्तिविरहासहचक्कवायसमवाय। ववाअसंभमाविजिंभियवलकोलाहलं वि कहं णिवारेदुकामोसि न खु पदे विरहवेदणं जाणन्दि। ता जणेमि जणेसर अत्तणे वयणे च उरत्तणं णवरतुमन्दं ससिणउण चित्तविलेहणे ।

**राजा**— वयस्य ! मे वचनेष्येवमेव न चातुर्यम् ।

तामिन्दुबन्धुवदनां मदनाङ्कमीन-
सच्छात्रनेत्रकमलामबलामतल्लीम् ।
आलोक्य कातरतया कतमामपिद्रा-
गापं यतः स्तिमितवाग्विभवामवस्थाम् ॥

[ इति प्रियतमास्मरणेन दीर्घमुष्णं च निश्वसन् अर्धनिमीलितलोचनः स्तम्भं नाटयति ।

**विदूषकः**— [ स्वगतम् ] पसङ्गन्तरसंपादणेण विह्मारयित्तए-विमूपियदमावुत्तन्तं एव्व सुमरिय दुण्णिवारं मणोविआरं समुपेदो वयस्सो । का गई । ताकेणवि णम्मवयणोवण्णासेणसे विणोदणं करेमि । (प्रकाशम्) विविहविज्जाणिवुणविबुहसमज्जा एव्व उणमुद्दणप्पदाणक्कणोवितु मए एह्मिमहसण्णिहाणे वय्यणिहवद्धा-रेसि । ता तुवत्तोवि मे सच्चं अहण्डियं पण्डिच्चम् ।

**राजा**— [ विहस्य ] वयस्य नायं दुःस्वभावः । यन्नर्मसमयेऽपि चतुरवचननिर्माणकौशलप्रदर्शनम् । भवतु । अवशिष्टं लिखामि (इति तूलिकामवष्टभ्नाति ।)

**विदूषकः**— ( चित्रफलकमुन्नमय्य प्रदर्शयन् ) वयस्स पेक्ख पेक्ख किं व एत्थलिहिदं किं व अवसिट्ठं ।

**राजा** —( विहस्य चित्रफलकमादाय । सविमर्शम् ।)

**कैश्यं केकिकलापदेश्यमलिकं चन्द्रार्धसामाजिकं**
**नेत्रं नीलसरोजमित्रमधरं बिम्बीफलैकोदरम् ।**
**बाहे वल्लिमदासहे कुचभरौ खर्वीकृतोर्वीधरौ**
**पद्मौपम्यपदं पदं तु पुरतः किं वा लिखेयं सखे ॥**

**विदूषकः**— सयं एव्व तक्कमं वदन्तोविभवन्तो किन्दि मं पुच्छादि सो एवक्कमो जो वयस्येण उवणत्थो ।

**राजा**— [ साभ्युपगमं ] तथा [ इति कबरीं विलिख्य कुटजगर्भकं विलिखितुं तत्र विशदरेखां विरचयति ]

**विदूषकः**-- सहे ! सामि फलिदो किं विअदमाएकेसपासो ।

**राजा**-- [ सस्मितम् ] वैधेय तदिदमवधेहि कुटजगर्भकम् ।

( मुखे विलिखितं लोचनमवलोक्य तद्विलसनं च स्मृत्वा )

( स्वगतम् )

**कर्णोल्लिङ्घनजांघिकीमिह दृशं कान्तामणेस्तादृशं**
**पाणिर्मे विलिखन्नयं स फलके प्रायेण जातः कृती ।**
**चेतस्त्वं च विधाय तद्विलसितं तस्मिंश्चिरं सञ्चितं**
**जीयाः क्लिश्यसि किं तदेतदथवा त्वत्स्वल्पता चेष्टितम् ॥**

**विदूषकः**-- वयस्स अण्णं णयणं कण्णं वि विलेहिदुव्विसुमरीय किं वियारेसि ।

**राजा**-- कथं मुखस्यैकस्मिन्नेव पार्श्वे श्रवणद्वयं नयनद्वयं च शक्यते लिखितुम् ।

**विदूषकः**-- ता पासत्तरेताइं वि किं वि लिहिदाइम् ।

( इति चित्रफलकं व्यत्यस्य पश्यति ।)

**राजा**— ( विहस्य ) सौधतलविविधमाणिभित्तिषु एकपार्श्वचित्रं शश्वदविपश्यन् कथमेवं पृच्छसि ।

**विदूषकः**— अवरेणविय महारायेण तुएविकिएत्तिअं एव्वलिहिदव्वम् ।

**राजा**— एवं हि नाम सारङ्ग, बुद्धिसागरं गतोऽसि । अलमियता दुर्विकल्पजल्पनप्रागल्भेन । किं बहुना– आविलेखानाविलेन भवता भवितव्यम् । इदमेव हि मे भूयसे श्रेयसे ।

**प्रमोहः**— अस्तु । ततः किम् ।

**प्रदोषः**— यदा वसन्तो गन्तुमक्षमस्तदा निद्रामुत्पाद्य (प्रसूनमेकं ददत् ।) अस्य रसेन सेचय तन्नयने । तदनन्तरं निद्राविरामे स्वस्थो भूत्वा यथापूर्वं कौमुद्यामेव पुनरुक्तरागो भविष्यति स युवा । सर्वमिदं स्वप्नमवधार्य न स्मरिष्यति च सौदामिनीम् । अयमेवात्र प्रतीकारः । सम्प्रत्यप्रमत्तो भव । अहमपि निम्बवतीपरिसरमेत्य राजबालमनायासेन गृहीत्वा तामप्यनेन स्वस्थीकृत्य निवर्ते । तदा सर्वं साधु सम्पद्येत । साधयामि ।

(इति निष्क्रान्तः ।)

**प्रमोहः**— महाराज, रजन्यमि यामशेषैव दृश्यते । तत् द्रुतमेव सर्वं निवर्तितव्यम् । एष च तावनुधावामि ।

(इति यथोक्तं कुरुते ।)

(ततः प्रविशति वसन्तः ।)

**वसन्तः**— रे वीराभिमानिन् मकरन्द, वद कुत्र वर्तसे ।

**प्रमोहः**—शठ, मूर्ख, सज्जोऽस्म्यत्रैव । तिष्ठ तिष्ठ । कुत्र पालयसे ।

**वसन्तः**— अयमहमागच्छामि ।

**प्रमोहः**— द्रुतमागच्छ । विदूरे विमर्दोचितः प्रदेशो दृश्यते ।

(शब्दमनुसरन्निष्क्रान्तो वसन्तः ।)

(ततः प्रविशति मकरन्दः ।)

**मकरन्दः**— वसन्त, कथं जोषमास्यते । कातरः खलु त्वं नरापशद, किं वा पलायितोऽसि ।

**प्रमोहः**— जाल्म मकरन्दहतक, त्वं किल युद्धाद्भीतो मां भीषयसि वाचा । त्वामद्यैव हन्यामित्यवधेहि ।

**मकरन्दः**— (सरोषविकटं परिक्रामन् ।) अयमहमागत्यासून् ते निष्कासयामि ।

(निष्क्रान्तः ।)

(पुनः प्रविशति विश्रान्तो वसन्तः ।)

**वसन्तः**— (श्रममभिनीय ।) नेतः परमनुधावामि त्वाम् । त्वं वाचैव वीर इति ज्ञातचरमेव । तत्सुदूरं मारीच इव राघवं मां नयसि । क्षणमप्येकत्र न तिष्ठसि । मत्तोऽपि द्रुततरं धावसि । तत्पलायनकर्मणि त्वं वरीयानेव । अहं त्वतीव श्रान्तोऽत्रैव किञ्चिद्विश्रम्य प्रातस्त्वां निहत्य सौदामिनीं परिणेष्ये ।

(इति निद्राति ।)

(प्रविश्य निदिद्रासुः ।)

**मकरन्दः**— आः क्वापि द्रुतो वसन्तः ।

**प्रमोहः**— अहो ते वीर्यम् । कातर, कथमत्र नागच्छसि ।

**मकरन्दः**— रे वसन्त, भीतस्त्वमिति विदितपूर्वमेव । तत्क्षणमप्यवसरं न ददासि युद्धस्य । अपसर जाल्म, । अधुनाऽहं निद्रामि । ।

**प्रमोहः**— त्वमेव भीतः । अहमत्रैव वर्ते ।

**मकरन्दः**— कथमेवं मां प्रलोभयसि । गम्यताम् । प्रत्युषसि ते बाहुवीर्यं द्रक्ष्यामि । (इति भूतले स्वपिति ।)

(ततः प्रविशति सौदामिनी ।)

**सौदामिनी**— (सविषादम्)

त्रियामा बहुयामेयं विशालं विपिनं त्विदम् ।
दोलायमानं हृदयं प्रतिकूलो विधिर्मम ॥ ३२ ॥

अवन्तीं प्रति यातव्यं यद्युदेष्यति भानुमान् ।
शयेऽस्मिन् वृक्षमूलेऽहमपनेतुं पथिश्रमम् ॥ ३३ ॥

(इति निद्राति ।)

**प्रमोहः—**

कुत्रान्या कौमुदी दीना मदनेनार्दिता भृशम् ।
पञ्चेषुरतिमूर्खोऽयमुन्मादयति कन्यकाः ॥ ३४ ॥

(ततः प्रविशति कौमुदी ।)

**कौमुदी—** (सखेदम्)

परिश्रान्ताऽस्मि खिन्नाऽस्मि हतेयं दुःखभागिनी ।
प्रत्याशैकपदे भग्ना हा प्राणा न त्यजन्ति माम् ॥ ३५ ॥

सर्वथा सुखी भवतु वसन्तः । न शक्यमितः परं गन्तुम् । इयमेवावस्थाऽनुभूयते । उक्तं हि ।

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविकलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्या करोमि ॥

(इति मोहमापन्ना भूमौ निपत्य निद्राति ।)

**प्रमोहः—** (वसन्तं स्पृष्ट्वा प्रसूनं लोचनयोर्निष्पिष्य) यथापूर्वं कौमुदीदत्तमना एव भूत्वा तामेवोपयम्यायं तरुणो विजयतां शरदां सहस्रम् । सर्वत्र भवतु मङ्गलम् ।

(इति निष्क्रान्तास्सर्वे ।)

इति वासन्तिकस्वप्ने तृतीयोऽङ्कः ॥

# चतुर्थोऽङ्कः ॥

—*—

( ततः प्रविशत्यधरकेण निम्बवती विभवतश्च परिवारः ।)

**निम्बवती**— ( सप्रणयं खरशिरस्कमधरकं प्रति ।)

आगच्छ मानद निषीद मनोज्ञतल्पे
पुष्पैश्चिते रमय मां त्वयि बद्धभावाम् ।
सद्यः प्रसाध्य रमणीयमिमं कपोलं
चुम्बामि कर्णयुगलं तव दीर्घदीर्घम् ॥ १ ॥

**अधरकः**— कहिं जअशेणा ।

क जयसेना ।

**जयसेना**— किमाज्ञापयति महाभागः ।

**अधरकः**— कळ्लूअशु मह वअणे । कहिं अत्थि विअआ ।

कण्डूयस्व मे वदनम् । कुत्रास्ते विजया ।

**विजया**— इयमस्मि ।

**अधरकः**— वळे विअए, शअवं गत्तूण मच्छिआ हत्तूण मधिअं आणेहि । वळे गोमिणि ।

अयि विजये, सजवं गत्वा मक्षिका हत्वा माध्वीकमानय। भो गोमिनि ।

**गोमिनी**— को निदेशः ।

**अधरकः**— वअणम्मि अच्चन्तळोमशे हगे त्ति मण्णे । तह

मिउळे मह शळीळे लोम्माणं शंकळणे कण्डूअणं अवेक्खइ । ता ताळिशकम्मणि पुळिवं एव्व णिउत्ताए जअशेणाए शाहाइअं कळे हि ।

वदनेऽत्यन्तरोमशोऽहमिति मन्ये । तथा मृदुलं मे शरीरं रोम्णां सङ्कलने कण्डूयनमपेक्षते । तत्तादृशकर्मणि पूर्वमेव नियुक्ताया जयसेनायास्साहाय्यं कुरु ।

**निम्बवती—** अहो वल्लभ, अपि शुश्रुषसे गानम् ।

**अधरकः—** अत्थु णाम गाणे । भक्खिचळशं अश्शाएम्ह ।

आस्तां नाम गानम् । भक्ष्यरसमास्वादयावः ।

**निम्बवती—** प्राणेश, किं वाऽऽज्ञापयामि भक्ष्यमानेतुम् ।

**अधरकः—** शुअइदुं इच्छाम्हि । कहं एव्वं वाहेशि ।

स्वप्तुमिच्छामि । कथमेवं व्यथयसि ।

**निम्बवती—** (हस्तं प्रसार्य ।) संप्रति निद्रामनुभवतु भवान् । मत्पाणिमेवोपधाय शेतामत्रभवान् । (अधरकः तथा करोति ।) चेट्यः, गम्यताम् ।

(निष्क्रान्ताश्चेट्यः ।)

वल्लभ, प्रतिक्षणं विजृम्भते रागस्त्वयि ।

(ततः प्रविशति सह प्रमोहेण प्रदोषः ।)

**प्रदोषः—** (कतिचित्पदानि गत्वा ।) प्रमोह, स्वागतम् । दृश्यतामवस्था निम्बवत्याः ।

**दुःखितोऽहमिमां दृष्ट्वा दत्तभावां खरेऽधुना ।**
**प्रसूनरसमाहात्म्यमुन्मोहयति भामिनीम् ॥ २ ॥**

अधिक्षिप्ता मयोद्याने गर्विता बालकार्थिना ।
सांत्वनानि प्रयुञ्जाना मयि क्रुद्धेऽनुरागिणी ॥ ३ ॥

ततोऽनुतापमापन्ना बालकं प्राहिणोद्द्रुतम् ।
बालकागममज्ञात्वा मयेयं पीडिता भृशम् ॥ ४ ॥

अविलम्ब्य प्रतीकारः कर्तव्योऽद्य महामते ।
( हस्तगतं प्रसूनं निष्पिष्य निम्बवतीपक्ष्माण्यनुलिप्य । )
स्वस्था भवतु भद्रेयं मुच्यतां गर्दभोऽनया ॥ ५ ॥

रासभश्च यथापूर्वं कर्तव्यो मानुषस्त्वया ।
पश्यैषा पद्मपत्राक्षी लज्जयोत्तिष्ठति ध्रुवम् ॥ ६ ॥

**निम्बवती**— ( पक्ष्माण्युन्मील्य प्रदोषं पश्यन्ती ) आर्यपुत्र, कोऽयं स्वप्नः । यो मां गर्दभानुरक्तामकरोत् ।

**प्रदोषः**— देवि, विदूरे शयानं पश्य ते प्रियवल्लभम् ।

**निम्बवती**— ( सलज्जम् )

कथमेवं प्रमुग्धाऽस्मि गर्दभाक्रान्तमानसा ।
कथं वा विप्रलब्धाऽहं लोचनाभ्यां खरं प्रति ॥ ७ ॥

**प्रदोषः**— (प्रमोहं प्रति ।)

अपनीय रासभशिरः स्थापय शीर्षं नरस्य सजवं त्वम् ।
(निम्बवतीं प्रति)
सर्वे किन्नरगानं हृष्टाः श्रुत्वाऽद्य गच्छन्तु ॥ ८ ॥

**निम्बवती**— चेद्यस्त्वरितं गीयतामस्माकं प्रभुराज्ञापयति ।

(सर्वा गायन्ति)

**प्रमोहः**— अधरक, नरो भव निद्रावसाने ।

**प्रदोषः**— देवि निम्नवति, यथाप्रमोदं रमणीयारामनिकुञ्जेषु विहृत्यागामिनि दिवस इन्द्रवर्मणः पाणिग्रहणमहोत्सवसमाजमेत्य सुखं नृत्याव: ।

( इति विना अधरकं सर्वे निष्क्रान्ताः । )

( ततः प्रविशति कनकलेखयेन्दुशर्मणा चानुगम्यमानः सपरिवारो राजा इन्द्रवर्मा ।)

**इन्द्रवर्मा**-- (सावलेपम्)

हत्वा हिंस्रमृगानतीव मृगयाव्यापारखिन्नोऽस्म्यहं
गत्वा व्याधमिहानयाहमधुना पश्यामि सर्वं वनम् ।
क्रीडाशैलमुताधिरुह्य सहसा श्रुत्वा मृगाक्रन्दनं
हर्षं प्राप्स्यति मङ्गलेयमधिकं देवी मया सादरम् ॥ ९ ॥

कनकलेखे, संप्रति विहरावः ।

**कनकलेखा**-- (स्वगतम्) अवलेपएनं मुखरयति । भवतु नीचः खल्वयम् । (प्रकाशम्) महीपते गच्छावः ।

**इन्द्रवर्मा**-- (विकटं परिक्रम्य) प्रिये, रमणीया इमा वनभूमयः । सुखस्पर्शो वाति दक्षिणानिलः । मधुरं कूजन्ति शकुन्ताः । माधवश्रियं पुष्यन्ति रक्तपल्लवावतंसितचूताशोकातरुनिवहाः । (स्खलितगतिर्भूमौ चक्षुर्निक्षिप्य ।) कथमिमे अमरतरुण्यौ ।

(ततः प्रविशतः सुप्तौ वसन्तमकरन्दौ सह कौमुदीसौदामिनीभ्याम् ।)

**इन्दुशर्मा**— (सविमर्शाश्चर्यम् ।)

**कौमुदीयं महाराज, वसन्तोऽयं महामते ।**
**मकरन्दश्च निद्राति सैषा सौदामिनी प्रभो ॥ १० ॥**

चित्रमेतद्यदिमे स्वपन्ति विपिनैकदेशे ।

**राजा**-- असंशयमेते प्रत्युषस्युत्थाय वयमत्र मृगयायै गमिष्याम इति ज्ञात्वा पूर्वमेव संमोदेन वनश्रियं दिदृक्षव आगता इति तर्कयामि । अन्यथा कथमेतत् संभवति [स्मरणमभिनीय ।] इन्दुशर्मन्, दिवसेऽस्मिन् खल्वनया परिणयं प्रति स्वाभिमतो वाच्यः । तदद्य तां पृच्छामि । कः कोऽत्र भोः ।

**अनुचरः**— आज्ञापयतु महाराजः ।

**राजा**— सत्वरमेतान् प्रबोध्यागमय तावन्मत्सकाशम् ।

**अनुचरः**-- यथाऽऽज्ञापयति देवः ।

(इति प्रणम्य निष्क्रान्तः)

(नेपथ्ये ध्वनिः)

(कौमुदीवसन्तादयः प्रबोधिताः ।)

**राजा**—कथमद्यापि न जहति युष्मान्निद्रा ।

**वसन्तः**— (राजानं दृष्ट्वा ससम्भ्रमम् ।) क्षम्यतां दासजनस्यायमपराधः ।

**राजा**-- कथं सर्वेऽपि यूयं मात्सर्यमुत्सार्य स्नेहधर्मेण सम्मोदमनुभवथ । एतदेव युज्यते ।

## देशवृत्तान्ताः ॥



उत्कलेषु ब्रह्मपुरात् (Berhampore) द्वादशक्रोशदूरे ऋषिकुल्या वीरमलङ्करोति असिक (Aska) नामकः रमणीयो जनपदः। तत्र श्रीमान् अभिजनवंशोत्पन्नः स्वयं पण्डितः हरिहरपण्डानामकः न्यायवक्ता उत्कलेषु गैर्वाणीं प्रचारयितुं अभिनन्दनीयेन समुद्यमेन कांचन संस्कृतविद्याशालां प्रतिष्ठापयामास। सा च अनुदिवसं ब्राह्मणबालकैरन्यैश्चाश्रियमाणा रमणीये संनिवेशे सुप्रतिष्ठिता विलसत्यन्यादृशेन सौभाग्येनेति ससंतोषं निवेदयामः ॥

संस्कृतरत्नाकरः जयपुरात् मार्गशीर्षादारभ्य अविच्छिन्नधारं प्रचलति। प्रकाशिताश्च लेखाः सरसाः सहृदयहृदयङ्गमा दृश्यन्ते ॥

---

# An Important  Announcement.

UNDER instructions from His Holiness the Jagadguru Sri Sankaracharya of Kamakoti Peetham, Kumbakonam, it is decided to present *free of cost* to the purchasers of our edition of Brahmasutra Bhashya with Bhamati, Kalpataru and Parimala, a rare and hitherto unpublished commentary on Kalpataru called Abhoga (आभोगः). This is a very valuable commentary, evidently written after a perusal of the Parimala. It will surely be very helpful to the readers of the Panchagranthi. From the 5th part forwards we will give 3 additional formes of this Abhoga at the end of each part. In printing this Abhoga we have noted marginally the number of the pages of Kalpataru (our edition) to facilitate reference. Besides the above precious commentary a very elaborate and useful Table of Contents is being prepared for each of the four works, viz., Bhashya, Bhamati, Kalpataru and Parimala. These Tables are expected to come up to about 80 pages and these also would be sent free of cost to the purchasers of the Sri Vani Vilas Edition.

THE MANAGER,

BOOKSELLING DEPARTMENT,

**Sri Vani Vilas Press, SRIRANGAM.**

# The Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITOR

**R. Krishnamachariar, M.A.,**

**Vidyanidhi.**

**VOL. XX.** **No. 10.**



PRINTED AT THE **SRI VANI VILAS PRESS** SRIRANGAM

AND PUBLISHED AT **MADRAS.**

ॐ



**Registered No. M. 103.**

# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager. Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ] राक्षसवर्ष पौषमासः । [ संचि. १०.

## सुभाषितानि ।



उरसि फणिपतिः शिखी ललाटे
शिरसि विधुः सुखवाहिनी जटायाम् ।
प्रियसखि कथयामि किं रहस्यं
पुरमथनस्य रहोऽपि संसदेव ॥ १ ॥

बिभ्राणे त्वयि भस्म कः समभवन्मन्दादरश्चन्दने
कः क्षौमं कलयांचकार न कृती कृत्तिं वसाने त्वयि ।
धत्तूर स्पृहयालुतां त्वयि गते तत्याज कः केतकीं
स्वातन्त्र्याज्जहिहि त्वमीश्वर गुणाल्लोकोऽस्ति तद्ग्राहकः ॥

त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः काञ्चनकुण्डलानि कुरुषे हानिर्न हेम्नः पुनः ।
मूर्ध्ना चेद्वहसे जडांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

( पूर्वतोऽनुवृत्तम् । )

———*———

अथ हिमवतः परिणयवर्णनव्याजेन भारतवर्षीयैस्त्रिकालवेदिभिरापस्तम्बबोधायनादिभिर्महर्षिभिः तत्र तत्रानुशिष्टमुद्वाहविधिरहस्यं सनिदर्शनं बोधयितुमुपक्रमते 'स मानसीम्' इत्यादिपद्यचतुष्टयेन—

स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥ १८ ॥

कालक्रमेणाथ तयोः प्रवृत्ते
स्वरूपयोग्ये सुरतप्रसङ्गे ।
मनोरमं यौवनमुद्वहन्त्याः
गर्भोऽभवद्भूधरराजपत्न्याः ॥ १९ ॥

असूत सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा-
ववेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥

अथावमानेन पितुः प्रयुक्ता
दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा
तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥

प्रथमं तावत् 'मेरुसखः' इति निर्दिशन्महाकविः— वधूवरयोरानुरूप्यनिर्णये आप्ताः सुहृद एव प्रमाणमित्याशयेन 'सुहृदः समवेतान्मन्त्रवतो वरान्प्रहिणुयात्, तानादितो द्वाभ्यामभिमन्त्रयीत' इति महर्षिभिरनुशिष्टां सरणिमनुसरन् 'स्थितिज्ञो' हिमालयः मेनां वरयितुं आप्ततमं सुहृदं महामेरुं प्रजिघाय— इत्यवगमयति भावुकान् ॥

अथ 'पितॄणां मानसीं कन्याम्' इत्यादिना 'प्रजननं वै साधु प्रतिष्ठा तन्तुं तन्वानः पितृणामनृणो भवति' इति श्रुतिप्रोक्तमुपदेशमनुसृत्य 'सत्सन्तानसमृद्धिं कामयमानः पुरुषः विवाहविधानस्यादौ नान्दीश्राद्धेन पितॄणां सौमनस्यं संपादयेत्' इति सूत्रकारैर्निर्दिष्टां रीतिमनुसरन् शैलेन्द्रः यथाविधि नान्दीश्राद्धादिकमादावन्वतिष्ठदिति बोधयन् मुनीनामपि माननीयो भवति महाकविः ॥

अनन्तरं 'स्थितिज्ञः' इति वरस्य ज्ञानसंपत्तिं सूचयन् 'मुनीनामपि माननीयाम्' इति वध्वाः शीलगुणादिकमसाधारणमतिरमणीयमुपक्षिपन्—

'शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति । शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ इत्यनुवर्णितां मैथिलीमनुस्मारयति ॥

'विधिनोपयेमे' इतीह संक्षेपतो निर्दिशन्महाकविः पाणिग्रहणविधानम् विस्तरत उपरिष्टाद्वर्णयिष्यत इति सूचयतीव ॥

पद्येऽस्मिन् कुलस्य स्थितये' इति वदन्महाकविः पाणिग्रहणं नामेदं न भोगमुद्दिश्य क्रियते इत्युपदिशन् 'प्रजायै गृहमेधिनाम्' 'अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः' इत्यन्यत्रोक्तमाशयं स्मरणपथमुपनयति ॥

'कन्याम्' इति प्रथमं निर्दिश्य 'कालक्रमेणाथ तयोः प्रवृत्ते सुरतप्रसङ्गे' इति वर्णयन्कविसार्वभौमः 'परिणयानन्तरं कञ्चन कालमतीत्य यौवनमापन्नया मेनया साकं हिमवतः शरीरसङ्गमः समजनि' इति बोधयन् ऋतुमतीविवाहबद्धपरिकरैराधुनिकैरविज्ञातोद्वाहविधिरहस्यैरत्यन्तमनभिनन्दनीयो भवतीत्यहो! वैपरीत्यं कालस्य ॥

अथ 'स्वरूपयोग्ये सुरतप्रसङ्गे' इति वदन्महाकविः— 'अविज्ञाय धर्माङ्गत्वं कामस्य, अविगणय्यानर्थावहतामकालसुरतस्य, अविदित्वा च 'निषेको नामायं पञ्चमाहुतिः परार्थो यज्ञः' इति, अनाकलय्य महर्षिभिरनेकत्रोपदिष्टं ऋतावुपेयादित्यादिकालनियमादिकम्, अविचिन्त्य अकालसुरतोत्पन्नान्यपत्यानि, अनार्यजुष्टे पथि विचरेयुरापादयेयुश्चाप्रतिष्ठां मातापित्रोः कुलस्य च इति, केवलमिन्द्रियार्थानुसेवनपरैरनवरतं यथाकाममनुसेव्यमाना कामिनीरतिः न सर्वथा स्वरूपयोग्या— इत्यपूर्वमर्थमुपदिशन् वन्दनीयो भवति लोकस्य ॥

ततस्तृतीये शास्त्रचोदितेन पथा इन्द्रियार्थानुसेवनेन कीदृशं फलमुपलभ्येत इति सदृष्टान्तमुपपादयितुमारभते 'असूता सा' इति।

मेनायामुत्पन्नो मैनाकः लावण्यनिधिभिर्नागकन्यकाभिरप्यभिलषणीयं सौभाग्यमुवाह । महात्मना समुद्रराजेन नितरां सौहार्देनोपलालितः तदा तदा देवकार्ये नियोजितः समभूत् । विशेषतः हिमवत्प्रमुखेषु सर्वेष्वपि पर्वतेषु पक्षच्छेदमनुभवत्सु क्रुद्धेन वृत्रशत्रुणा सरोषं प्रयुक्तेन कुलिशेनाप्यनासादितशरीरसंस्थानविशेषः न केनाप्यङ्गेन विकलः सुखमद्यापि विहरति रसातले इतिदं तस्य मातापित्रोः सदनुष्ठानफलमेव नान्यथा इत्यवगमयन् 'कुलस्य स्थितये' इति पूर्वप्रस्तुतमाशयं दृष्टान्तमुखेन विवृणोति ॥

एवं पुत्रजन्मना अधिगतोद्वाहफलौ तौ दम्पती भोगविमुखौ जितेन्द्रियौ वानप्रस्थाश्रमिणां रीतिमनुसृत्य केवलं व्रतानुष्ठानपरौ समभूताम् । तादृशीं मेनामनितरसाधारणीं विशुद्धिमात्मन्यावहन्तीं सस्पृहं जननीत्वेन वरयन्ती भगवती भवानी तस्याश्च सह भर्त्रा शरीरसंगमाभावेन स्वयमेव योगमहिम्ना मेनाया गर्भं प्राविक्षत् इत्याशयं 'योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे । इत्यादिना साध्ववगमयन् कालिदासः इष्टदेवतायाः गौर्याः दिव्यमपाञ्चभौतिकं वपुः न सर्वथा शुक्लशोणितसंभूतमिति बोधयतीत्यहो ! दैवज्ञता महाकवेः ॥

( क्रमशः । )

॥ श्रीः ॥

# ॥ भारतीयसंघसंस्करणम् ॥

( पूर्वतोऽनुवृत्तम् । )

———*———

पाश्चात्यसंस्काराभिमानिनामाशयमनुसृत्य अस्मदीये समाजे

कतिचन आचाराः प्रचारिता अपि समाजः संस्कारमाप्नोतीति मिथ्याग्रहिकैव । प्रमदास्वातन्त्र्यम्, विधवावपननिराकरणम्, विश्वस्ताकरपीडनम्, अहारविहारे विधिनिषेधाभावः, स्पर्शास्पर्श-नियमनिराकरणम् इत्याद्याचारा अस्मदीयसमाज एव कतिषुचन वर्गीयेषु सुप्रचाराः; अथापि न ते सुधारणामापन्नाः । परं विशेषतः तैराचारैः कुधारणामेवावलम्बन्ते । एवमेवामून्याचरणानि पाश्चात्यसमाजेपि नामोघसुखशान्ति ददुरिति यैरोपसमाजान् सूक्ष्मरीत्या निरीक्षितवंतः ऐककंठ्येनोररीकुर्युः । अस्मदीयदेशे विधवानां संख्याधिका चेत्, तेषां नीवृति अविवाहितसीमन्तिनीनां संख्याधिका वर्तते । अस्मत्समाजः यथा जातिभेदेन शकलीभूतः, तथा तेषामपि समाजः अनेकोपभेदैः संगमितः । एकवर्गीयाः अन्य वर्गीयैरैक्येन न चलन्त्येव । अपि नाम सम्मतीं ददति इग्लंडजनपदीयलार्डकुलीयाः स्वतः निकृष्टे स्वकन्यकाः दातुम् । सा रीतिस्तेषु सुप्रचारा? लार्डकुलीयाः सामान्यानां पंक्तावुपविश्य भुञ्जन्ते, ईदृशानि नैकच्छिद्राणि तेष्वपि वर्तन्ते । यत्र ग्रामः तत्रांत्यजानां वासोऽपि । समासतः समालोचिते, समाजव्यक्तीनां मनः सुसंस्कृतं भवेत्, तेषु उदात्तविचाराणामाविर्भावो भवेत्, ते सुमार्गगामिनश्च यदि स्युः, तदा समाजः संस्कारमापत्स्यते । केवलं यौरोपसमाजानुकरणेन नास्माकं समाजः परिष्कारमासादयति । प्रत्युत इतो भ्रष्टस्ततो भ्रष्टो भूत्वा त्रिशंकोरवस्थामनुभवति, जगति उपहास्यश्च जायते ॥

सर्वथा पाश्चात्यानां सुधारणाभ्यः न वयं स्पृहयामः; अस्मदीया सद्यःस्थितिरेवोन्नतमेति नास्माकमभिप्रायः । तत्सुधारणया

तत्समाजाय दीयमाना सहायसंपत् तत्सुधारणायाः महार्घता नासाधारणीति न वयं वक्ष्यामः । तथा च सा सुधारणा निकृष्टतरेति न तिरश्चिकीर्षामः किं त्वस्मदीयं सर्वस्वं विसार्य सर्वांशतः परावलम्बनं नोचितमित्याचक्ष्महे । पाश्चात्यसुधारणैव सुधारणा, नास्मासु किमपि विद्यत एव । इत्येतद्वाचो निदानमस्मदीयानामतःकरणे प्रविष्टां घातुकरणबीजस्य विषमयं फलमेव । नापरः एतादृश आत्मघातुकविचारः ॥

पाश्चात्यसुधारणम् रोचिष्यतेऽस्मभ्यमपि । परं तत्स्वीकरणक्रमः योग्यो वर्तेत । अन्यदीयानां शास्त्रम् स्वीचिकीर्षुभिः आत्मीयकरो न च्छेतव्यः । आदौ स्वप्रकृतिःखेक्षणीया तदनन्तरं तदनुगुणमाहारं स्वीकुर्यात् । पञ्चास्यस्याहारः पुष्टिकर इति करिणा यद्युररीक्रियते तर्हि पञ्चत्वमेव यास्यति । अस्मदीयेषु चानेके मोहवशीकृतान्तरङ्गाः स्वप्रकृतिनियममुलङ्घ्य प्रचलन्ति । अस्मदीयधर्मकर्मसु आचारविचारेषु दिने दिने क्रान्तिरापत्स्यते । तेनास्मदीयानामुन्नतिसमस्या अहरहः जटिला जायते । अस्मदीयपूर्वजप्रतिभाबलं म्लानतां समेति ; तस्मादेव जगन्मान्यतामुपयातानामार्याणामपत्यानि भूत्वा वयं जगच्चक्रस्य अधस्तात् निपत्य शकलीभवामः ॥

आवश्यकः खल्वाहारोऽस्माकं वपुषः । यथापि स आहारः मूलस्वरूपेणैव नास्माकं कलेवरे प्रविशति । प्रथमतः नैकसंस्कारमापद्येत । ततो रदनैश्चूर्णितो भवेत् । ततः आन्तरानेकपाचकावयवसाह्येन जीर्णीभूय शोणिततां समीयात् । तदानीमस्माकं गात्रपोषणार्हो जायते । एवमेव पाश्चात्यैः स्वीक्रियमाणा सुधारणाविचारा अपि नानासंस्कारानवाप्य रूपान्तरमुरीकृत्य अस्मत्सामाजिकतन्त्र-

स्वरूपमागच्छेयुः, तदानीं ते ग्राह्याभवन्ति । तदा तैर्हितं जायेत। पाश्चात्यसुधारणायाः कतिचन तत्वानि अस्मद्भारतप्रकृत्या जीर्यन्ते चेत् तानि सुखकराणि स्युः । यावत्तेषां विदेशीयता व्यनक्ति तावत्तेषु ग्राह्यता नायाति । पाश्चात्यसरस्वतीपोष्यपुत्रैः एतन्मर्म ध्यानफलके विलेखनीयमिति नाथामः । अस्माकं समाजदेवतायाः शरीरमनेककारणैर्धूलिधूसरितमपि तस्मिन्ननेकोज्वलरत्नानि सन्ति। अस्मदीयानां सामाजिकतन्त्राणि, सामाजिकभाषा, साहित्यम्, सामाजकल्पनाः, रुचिवैचित्र्यम् — एतान् चक्षुरुन्मूल्याप्यपश्यताम्, केवलं परानुचिकीर्षया सुधारकनेपथ्यमभिधार्य घण्टाघोषमातन्वानां तरुणानां पुरतः 'आर्यवंशजानामस्माकं परकीयगेहगतोपदंशकं दृष्ट्वा गृध्नुतां समुह्य रसनातः 'लालाजलनिष्यन्दनम् अनुचित'मिति कथयामः । नोचित ईदृशः अभिलाष आस्माकीनानाम् । पाश्चात्यविमाननिरीक्षणकृते विहायसि दृष्टिं निक्षिप्य प्रचलन्तः निश्चयेनाधःपतनमृच्छन्ति ॥

केशवभट्टः गलगलि

---

॥ श्रीः ॥

## ॥ लीलावती ॥

---*---

अशेषपण्डितमण्डलीचूडारत्नायमानायाः भरतभूमण्डलमण्डनायमानायाः सीमन्तिन्याश्चरितं प्रणेतुमयमिदानीमारम्भः । अस्ति पुनरस्माकमतिदृढो विश्वासः । यदुत्कंठन्ते श्रीमंतः केयं, कियदस्या वैदग्ध्यं, कं वा जनपदमात्मनो जनुषा मण्डयांबभूवेति । वयमपि

नेहामहे शिरीषपेलवानि सहृदयानां हृदयानि दुःशमयैव विषया-ऽनयोत्कलिकया व्याकुलीकर्तुम् । सा तु लीलावती । तस्याश्चरितं श्रीमतां पुरत उपवर्ण्य कृतार्थमात्मानमारचयितुमिच्छामः ॥

आर्याः, सुविदित एव श्रीमतां भारतवर्षस्य पश्चिमाशायाः सुविततप्राकारायमाणो महीधरः सह्यो नाम । कुलिशकरकोपभयादयं सह्याचलः पक्षप्रेम्णा न प्रविष्ट इव प्रतिभाति रत्नाकरम् । तं गिरि-वरं क्षणमारुह्य समुन्नतसानून्, धो धो इति ध्वानडंबरास्तरङ्गिणीः सुरवर्त्मचुम्बि तरुवरांश्चावलोकमानाः के हि नाभिनन्दन्ति भगवतो वाणीजानेः सृष्टिनिर्माणचातुरीम् । क्षणमेतद्वैभवाभिनन्दनमाचरता-मस्माकं तद्गिरिवरनिकट एव लब्धजन्मनां मानवरत्नानां नामानि स्मरणसरणिमुपयातानि चेद्भगवतस्तस्य कौशलस्य पुरतः एतत्सृष्टि-निर्माणकौशलमतितराम् लघुतरं प्रतिभाति । सह्यमहीधरस्य निकटे केचनेदृशा मानवमणयः लब्धजन्मानः । तेष्वेवायं पण्डितप्रकाण्डः चरितनायिकायाः पितामहः श्रीमहेश्वरभट्टभट्टारकः । महोदयो-ऽयमावासेनात्मनो भूषयामास जलविड (बिज्जलविड) ग्रामम् । करतलामलकीकृतत्रयीत्रयः प्रत्यक्षीकृतज्यौतिषतन्त्रोऽसौ शाण्डिल्यवं-शमुक्तामणिरासीत् । तदुदरादुत्पन्नः खलु भास्कराचार्यः । (शालि वाहनशक १०३०) अस्यैव नन्दिनी किल श्रीमती लीलावती ॥

बाल्य एव वैधव्ययुता बभूव लीलावतीत्यस्ति काचन कथा—

अद्वितीयः पण्डितः श्रीमान् भास्कराचार्यो ज्यौतिषशास्त्रे । तनयाजन्मकुण्डलिकयाऽवगतं तेन परिणयनादनन्तरमचिरादेव विधवा भविष्यति तनुजेति । शोधयामास खलु तदानीं वैधव्य-

व्याधिना यथा न पीड्येल्लीलावती, तथैकं शुभं मुहूर्तम्। तस्मिन्नेव मुहूर्ते करणीयं नन्दिन्या उपयमनमिति निश्चिकाय। सर्वसिद्धतां चकार च भास्कराचार्यवर्यः मुहूर्तकालो नातिक्रान्तो भवेदिति। सर्वे निधाय सलिले घटिकापात्रमालोकन्ते स्म सावधानम्। यदा निमज्जति घटिकाभाजनम्, स एवोपयमनसमयः। नरस्तु स्वकीयविद्याबुद्धिबलेन विधातृविलिखितं प्रमार्ष्टुम् प्रयतते। किं तु तत्प्रयतनं विधातुः संकल्पस्य पुरतः निष्फलतामेष्यति। नास्त्यत्र संशीतिकणिकापि ॥

तदानीं लीलावती बालिका। सा तु कुतूहलाविष्टेन मनसा घटिकाभाजननिमज्जनं निरीक्षते स्म। कन्याकर्णे मुक्ताभरणमेकं विराजितम्। घटिकाऽमत्रं निरीक्षितुम् प्रणम्रायां कन्यायां मुक्तामणिरेकोऽल्पीयान् निपपात घटिकापात्रे। स तु पानीयागमनमार्गमुपरुरोध। इदं न कोऽपि जज्ञे इदानीं निमज्जति तदानीं निमज्जतीत्याशया सर्वे निरीक्षांचक्रिरे। महीयान् गतः समयः। न तथाप्युन्ममज्ज तत्पात्रम्। परिशोधिते सति निपतितो मुक्तामणिः दृग्गोचरीभूतः। अतिक्रान्तो मुहूर्तदिष्टः। भास्कराचार्यस्तु नोल्लङ्घितुम् समर्था वयं फालपट्टलिखितमिति तदैव तदुपयमनकार्यं निर्वर्तयामास। अचिरादेव संजाता सा विधवा। तदा जनकस्तु तनयाम् स्वनिकेतनालंकृतां कृत्वा विद्याभ्यासं कारयामास। सुप्रसिद्धं तस्याः किलादूष्यम् वैदुष्यम्। गणितेन सा तरुपलाशसङ्ख्यामाचख्यौ। विद्याऽभ्यासेन एवापनीतं तदायुः। जगत्प्रसिद्धः खलु पुत्रीमुद्दिश्य भास्कराचार्यप्रणीतो लीलावतीग्रन्थः। सिद्धान्तशिरोमणिग्रन्थस्य प्रथमभागोऽयम्। भागेऽस्मिन् पुनः पुनः

'हे लीलावति' इति तनयाम् संबोधयति पण्डितः । द्वितीयभागे बीजगणिते एकस्मिन्स्थले 'हे तनये त्वत्कर्णभूषणकृते इयन्तः शौनासीरमणयः, इयन्तो मुक्तामणयः, मया क्रीताः' इति विलिखितमस्ति । उपरितनैतिह्यं यथा तथा वा भवतु । तनयाकृते विरचितोदाहरणावलोकनेन स्फुटीभवति स्त्रीशिक्षणमनर्हमिति प्रलपन्तः कूपमण्डूकास्तदानीं नासुरिति । द्वादशशतमाने मण्डयांचकार लीलावतीं धरामिति विनिवेद्य लेखिन्यै विरतिं दातुमभिलाष्यामः ॥

भट्टकेशवशर्मा । (गलगलि)

---

॥ श्रीः ॥

# ॥ गोविन्दसूरिः ॥

इह किल जगति जङ्गमाजङ्गमविभेदभिदुरे चेतनमात्रं विषयास्वादलोलुपमेव । आ जगत्स्रष्टुरा च कीटादेषा दशा परिदृश्यते । पण्डितपामरसाधारणी चेयं समवस्था । मानसी केवलेयं प्रवृत्तिरन्ततो महान्तमनिष्टमप्यनुपजनय्य न विरमति प्रायः, यतो निखिलानि करणानि मनोनुविधायीनि केवलम् । जानताऽपि भाविनोऽनर्थपरम्परोपनिपातान्, निरूपयतापि निकर्षस्य परां काष्ठाम्, आपातिकोऽपि क्षणिकोपि सुखलेशाभासः सर्वथैव नानुसन्धातुं शक्यते । यास्य प्रत्याशयैव विस्मृतनैजाधिकारम्, अविचारितयुक्तायुक्तविवेकम्, अगणितगुणदोषं ते ते स्वैरं वर्तन्ते वृत्तिषु ग्राम्यासु तासु तासु ॥

साधारण्याच्च सर्वप्रधानास्तिस्रो मूर्तीरधिकृत्य कविताकिंकिणिम एवमनुवर्णयति कामस्य कोमलमाकलितम्—

'वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखै-
वरतनुतया वामो भागः शिवस्य विवर्तते ।
तदपि परमं तत्वं गोपीजनस्य वशं वदं
मदनकदनैर्न क्लिश्यन्ते कथं न्वितरे जनाः ॥'

इति । मिश्रश्च—

'अहल्यायै जारः सुरपतिरभूदात्मतनयां
प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम् ।'

इति । अयं च परम्परया प्रणाशहेतुरिति च स्मर्यते । यथा गीतायाम्—

'सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥' इति ।

तदेवं सर्वाविष्टमूलकन्दम् विषयरसास्वादं तृणाय मत्वा जन्मप्रभृत्यादेहपातं ब्रह्मचर्येणैव यापितनिखिलकाला महामनसोऽपि संसारेऽस्मिन् समभवन्नेव । तेषु योगकलाविलासविकासितशेमुषीविशेषान् महर्षिपदव्यपदेश्यानेकद्वान्न वयमद्यतनान् बहुमन्यामहे । तपोबलविनिर्धूतकल्मषास्त एते यथाप्रतिभातं कर्तुमकर्तुमन्यथाकर्तुम् च पारयन्तः किं नाम चित्रं नैजं मानसं चलं संन्यरुन्धन्निति । कालेऽस्मिन् कलौ दोषैकधामनि सांसारिकव्यापारविसंस्थुले कुले तथा-

दृशा उपलभ्यमाना मरुस्थलोपारूढपरिपुष्टनलिनीविभ्रममाबिभ्रतीति यत्सत्यं वयममायं प्रतिपद्यामहे ॥

तादृशेषु महाभागधेयजन्मसु पावनचरितेषु पुण्यकीर्तिषु पुरुषधौरेयेषु कांश्चनात्र प्रतुष्टूषामः । प्रथमतश्च तेषु श्रीमन्तं गोविन्दगुरुम् ॥

उपनिषत्प्रस्थाने च अद्वैतविशिष्टाद्वैतद्वैतविभेदेन गमनिकात्रितयमातस्थुषि विशिष्टाद्वैतमतप्रथमप्रवर्तकस्य श्रीमतः सुगृहीतनाम्नो भगवन्नाथमुनिमिश्रस्य पौत्रो बाल्य एव निर्जितप्रतितप्रतिभटपण्डितो नानानिबन्धनिर्माणसमुपाचितविशिष्टाद्वैतसिद्धान्तः श्रीमान् यामुनाचार्यमहागुरुः श्रीरङ्गस्थलमध्युवास ॥

तस्य पौत्रः श्रीशैलपूर्णगुरुवर्यः सह जनकाभ्यां समं च सहोदरीभ्यां श्रीमतो भगवतः श्रीनिवासस्य कैङ्कर्यमेव परममुद्देश्यमाकलयन् श्रीवेङ्कटाचलमधितष्ठौ । काले च सहोदर्यौ विधिना पर्यणाययत् । ज्येष्ठा कान्तिमती श्रीभूतपुराभिजनेन हारीतगोत्रेणासूरिव्यपदेश्येन केशवसोमयाजिना पाणौ गृहीता श्रीमद्विशिष्टाद्वैतसिद्धान्तभाष्यकारं भगवद्रामानुजमुनीश्वरं प्रसूतवती पुण्यश्लोका । कनिष्ठा च भूदेवी मधुरमङ्गलाग्रहारवासिना वृत्तमणिव्यपदेश्येन कमलनयनभट्टमहाशयेन विधिवदूढा काले तमेनं गोविन्दगुरुं प्रासोष्ट । अवरजोऽप्यस्य कनिष्ठगोविन्दनामासीत् ॥

श्रीवैष्णवसमयाचारानुरोधेन जन्मनो द्वादशे दिने तप्ताभ्यां शंखचक्राभ्यां रक्षार्थं परिचिह्नितो मातुलेन नाम चाहितः । यथाकालं संस्कृतश्च वेदान् शास्त्राणि चाभ्यसितुमारेभे । स्वयमनपेक्ष

एव वसन्मात्रा बलादिव कुलोचितां गुणवतीमनुरूपां च सुरूपां च कन्यां पर्यणायि । सहैव मातृष्वस्रीयेण भगवद्रामानुजाचार्यमहाशयेन यादवप्रकाशयतिनाम्नोऽद्वैतमतबोधकाद्यतीशानादधिजगावद्वैतवेदान्तम् ॥

गङ्गायात्राप्रसङ्गेन च साकमुपाध्यायेन सह च सब्रह्मचारिभिः काशीं गच्छन्मध्येमार्गं च कुहनाप्रयोगावसरप्रतीक्षापरिपन्थिनां रहसि कदाचिदावेद्यापवाह्य च भगवद्रामानुजसूरिं स्वयमेक एवावहित्थया सुखेन यथोद्दिष्टं स्थानं प्रतिपेदे । गुरोर्यादवप्रकाशमन्त्रसिद्धिबलेन चायं गङ्गायां निमज्योन्मज्जन् हस्ततले बाणलिङ्गमध्यगच्छत् । पुनर्निमज्योन्मज्जंश्च भस्मत्रिपुण्ड्रालंकृतनिटिलोदरहस्तकण्ठपाणिभुजो रुद्राक्षमालिकावेष्टितशिरोभुजहृदयकण्ठः शिवध्यानपरः शिवनाम कीर्तयंश्च शैवशिखामणिः पर्यणंसीत् । अवसितायाश्च यात्रायां गुरोराज्ञया लिङ्गं तत्स्वग्राम एव प्रतिष्ठाप्य कालहस्तिस्थलीयानामभ्यर्थनया तद्देशीयालये परमेश्वरकैङ्कर्याण्यविकलमारचयन्ननेहसः परम्परामनेकामतिवाहयामास ॥

एवमतिपतितेषु कतिपयेषु गणरात्रेषु भगवद्रामानुजाचार्यसूचनया मातुलः श्रीशैलपूर्णगुरुवर्यः कालहस्तिस्थलं द्विस्त्रिरुपसद्यापि द्रष्टुमपि तमेनमलभमानोऽवकाशं महताऽभिनिवेशेन तुरीये पर्याये सहान्तेवासिभिराससाद शैवं पुरम् । तदागमनमार्गं चावगत्य मध्ये तत्र चीटिकामेकां प्राक्षेपयत्, यस्यां कश्चन दमिडगाथाखण्डः संविलिखितः । अस्यायमनुवादः । यथा—

'कीर्त्यर्त्वेन स्थितस्य त्रिपुरमदहतो धातुरन्यस्य चापि ।
स्वामी सैकः कपालावदलनचरिते स्पष्टमेतत्प्रतीत ॥' इति ।

स्नानार्थं गच्छन् स शैवशिरोमणिरवलोक्यापि तामौदासीन्येनातिपतन् स्नात्वा प्रत्यावृत्तस्तत्रैव तामवलोकयन् करेण सावहेलमिव समादाय चानुवाच्य च तत्र तामक्षरपङ्क्तिं दूरादपास्य तां पत्रिकां यथागतं जगाम । क्षणान्तरे चाभिषेकार्थमुदकमाहर्तुं तेनैव पथा समागतोऽपास्तां तां पुनरादायानुवाचयन्नेव सरस्तीरमाससाद । तत्र च कंचन गुरोः शिष्यं सन्निधाय 'किं प्रच्युतो भवतां कोऽप्यर्थः ?' इत्यनुयुञ्जानः 'न कोऽपि नूनमस्माकमर्थः प्रच्यवति' इति प्रत्युक्तश्चीटिकां तामपास्यालमेव व जगाम । गाथाखण्डस्य तस्य वाचनात्प्रभृत्येव तस्य मनसि डोलाखेलनरसविसरोऽङ्कुरितोऽभवत् ॥

यदा च पुनरेष बद्धनासामुखपुटो दलग्रहणाय बिल्वतरुमुन्नतं समधिरूढः, तदा च श्रीशैलपूर्णगुरुर्विविक्तस्थलान्वेषमिषेण तत्र सन्निधाय तरुमूले समासीनश्छात्रानखिलानपि प्रच्छायशीतलं तरुवरस्य समीपस्थस्य तलमधिवास्य तानुद्दिश्य द्रमिडप्रबन्धगाथार्थाननुवर्णयन्नासाञ्चक्रे । प्रसङ्गेण च काचन द्रमिडगाथाऽवतारिता । अस्या विपरिणामो यथा—

'देवान्द्रव्याणि च स्रष्टुं सृजतश्चतुराननम् ।
देवाधीशितुरन्यस्य पुष्पं पूजोचितं किमु ॥' इति ।

व्याख्याव्याजेन च श्रुतिस्मृतीतिहासपुराणप्रमाणप्रपञ्चनपुरःसरं श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रक्रियानुसारेण श्रीपतेरेव परत्वमन्येषां चतुर्मुखादीनां तत्सृष्टत्वम्, तस्यैव जगत्कारणत्वम्, तत एव ध्येयत्वम्, तादृशमेवोपास्यत्वम्, तस्यैव फलप्रदत्वम्, तदनुभव-

स्यैव फलत्वम्, सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवरूपं परमप्राप्यं फलं प्रति तत्प्रसादस्यैव प्रधानकारणत्वम्, तस्य च षडङ्गाष्टाङ्गयोगमूलकत्वम्, इत्यादि सुविशदमुपपादयति स्म श्रीशैलपूर्णगुरुवरः ॥

शैवशिरोमणिरेष प्रथमं कतिचन कालकला बधिरकल्पमासीनोऽथ च द्वित्रैरक्षरैर्यदृच्छया कर्णकुहरं प्रविष्टैः क्रमेण समुपजातशुश्रूषाविसरः क्षणान्तरे च सावधानमाकर्णयन्,

'मौनं बिभ्रतु मत्सरेण नमितास्तूर्णं त एव ध्रुवं
कालोन्निद्रकदम्बगोलवपुषः कम्पस्फरन्मौलयः ।
किंचिद्व्रीडितकुञ्चिताक्षमवशादुत्तानदत्ताननाः
प्रस्तोष्यन्त्यवधिं प्रयोगपदवीसारस्य सारस्य नः ॥'

इति प्रतिपादितायाः प्रक्रियाया निदर्शनं भवन्, समुन्मिषितपूर्ववासनः परकीयमन्त्रसिद्धिबलकृतस्यात्मनो वैकृतस्य परिचिन्तनेनानुतपन् 'निबिरीसनीलनीरदशोभाभरभासुरकेशकलापे भगवति पुरुषोत्तमे जाग्रति बुद्धिमान्द्याज्जटामौलिं पशुपतिमाराधयं किल कुसुममालाभिः' इति सापत्रपं परितपन्, 'न युज्यते न युज्यते' इति वदन्नेव सवेगं तरोस्तस्मादवतीर्य रुद्राक्षमालिकान्यवधूय भस्मान्युत्सृज्य 'दीनं मां पातुमर्हसि' इति वदन्नेव श्रीशैलपूर्णगुरुवरचरणपरिसरे निपपात ॥

वत्सलहृदयश्च करुणारसवार्षुकाभ्यां गुरुवर एनमादरादुत्थाप्य सुवर्णमुखरीवारिणि स्नापयित्वा यथा धर्मशास्त्रं दशाविपर्ययसम्भावितानां वैकल्यानां प्रायश्चित्तमनुष्ठाप्य यथाविधि च संस्कृत्य स्वयमुदवसितमानयत् ॥

**विदूषकः**— एसतुहिक्कोहामित्ति (करद्वयेनास्यमपिधाय पश्यन् तिष्ठति)

**राजा**— (कर्णं विलिख्य उरसि स्तनौ विलिखन्)

स्तनौ तस्यास्तन्व्यास्तरुणिममहावैभवजुष-
स्तदा कार्श्यं....मधिमुखं चूचुकमिषात् ।
अहं वक्षो व्याप्नोम्यहमपि रुषान्योन्यमपि ता-
विदानीं तु व्याप्तौ कियदिति न जाने विलिखितुम् ॥

[विचिन्त्य] तथापि दर्शनसमयसमुन्मिषितपरिमाणावेव स्तनौ विलिखामि । (इति स्तनौ विलिख्य विलिखितौ बाहू विलोकयन् । स्वगतम् )

एषा सा युगली बाह्वोर्या नखाहतिकौशलात् ।
अचेतनीं विपञ्चीमप्यतानीदतिरागिणीम् ॥

(विलिखन्तं पाणिं विलोकयन् । स्वगतम् )

वदनं गलमपि बाहूकरयुग्ममुरोजकुड्मलौ पाणे ।
विलिखन्नधिकश्रान्तो वियदुपमे मध्यमे समाश्वसिहि ॥

(विचिन्त्य) तथापि न कथं विलेखनीया रोमावली । (भूयो-विचार्य) प्रथममेव लिखितया सर्वत्रापि वर्णविन्यसनेन तिरोभूतया परमविलेखनादत्र लक्ष्यमाणया प्रमाणलेखयैव सेयमन्यथासिद्धा । (स्वगतम् )

गच्छन्त्याश्चरमाङ्गकं मृगदृशः कान्तं यदालोकयन्
प्रातःकालदलत्सुवर्णकदलीपत्रोपमाभाजनम् ।
तस्या व्यस्मरमाभिमुख्यमविहा तस्मिन् वने तत्क्षणं
हित्वा तादृगिहालिखामि फलके यत्नेन किं वापरम् ॥

(विचिन्त्य) भवतु । तथाप्यत्र प्रस्तुतैकपार्श्वचित्रविलेखसंविधानानुगुणं नितम्बबिंबमारभ्य पदारविन्दपर्यन्तं विलिखामः ।

(इति तथा कृत्वा लिखितं चरणद्वितयमालोक्य स्वगतम्)

एतत्तदेव चरणद्वितयं यदीय-
सौवर्णनूपुररवश्रवणावतीर्णः ।
तस्यास्तदोपवनसीम्नि तिरोहिताः
सान्निध्यसौख्यमकरोत्सदयं मुहूर्तम् ॥

सखे! सारङ्ग पश्य कथमेतदिति पृच्छति ।

**विदूषकः**— (चित्रफलकं विलोक्य भूमौ विलिखति)

**राजा**— (विलिखितं चिरं निध्याय) अष्टादशस्वपि लिपिषु न कुत्रचिदेवंविधां लिपिमवधारयामः । तथापि वयमिच्छालिपिग्रहणचातुरीमेवावलम्ब्य वाचयामः । (वाचयति) अहो वयस्यस्यापि मोहोदयः । यदेकपार्श्वचित्रानुगुणमेकमेव श्रोत्रं नेत्रं च विलिख्य तदननुगुणमेव भुजयुगलं कुचद्वितयं चरणद्वितयं च फलके विलिखितम् । यावदिदं सुष्ठु विलिखितम् पश्यामि; तावदहं जोषंभावमेव संभावयामि ।

**राजा**— (विहस्य) अयमेव पुनरेकपार्श्वचित्रविलेखनक्रमः । तदिह वैधेय न विधेहि मौनमुद्राम् ।

(चित्रमवलोक्य साश्चर्यम्)

कत्थूरीतिलयं णिडालसुसमारोहायकायज्जुइं
कुप्पासो बदसाहरेइ सहिदो भूसाहि ताएसहे ।

ता एदेहि विभूसणेहि वद किं तण्णीमणीए भवे

(विचार्य)

ताणं एव्व विभूसणाणि यदिसिद्धं तव्वसाइलम् ॥

(नासिकां निर्दिश्य) णासाभरणभूसणाइ अण्णासि आदिसइता विलिहेहि सहे णासाभरणमुत्ताहलम् ।

राजा— सारङ्ग, किमनया वैकल्प्यशङ्कोद्भावनया । अवलोकय तदिदं लोचनलोभनीयविविधभावरसभावनातिचित्रं प्रियायाश्चित्रम् । (अङ्गुल्यग्रेण तस्या दृशं निर्दिशन्)

सैषा चलेव निभृतेव शनैस्ततेव
तावत्स्पृहेव चतुरेव समन्मथेव ।
लज्जावतीव चकितेव रसालसेव
चित्तं प्रतारयति चित्रगतापि दृष्टिः ॥

(मुखं निर्दिश्य)

अनिर्वाच्यं लज्जामथितमिव शृङ्गारशवलं
समिन्धे तद्वक्त्रं शशधरमहो वञ्चकमहो ।

(स्तनौ निरूप्य)

स्तनद्वन्द्वं चित्रे लिखितमपि तन्व्या नवनवं
तदेतद्वैशाल्यं दधदिव विभाति प्रतिकलम् ॥

(पादौ निर्दिशन्)

पादौ विलोक्य सखे फलके किमन्य-
दाभ्यामियं विलिखिताप्यभिगच्छतीव ।

किं बहुना—

हा हन्त सारसनहंसकशिञ्जितं च
भूयः पुरेव परिपूरयतीव कर्णौ ॥

**विदूषकः—** (विलिखितं चित्रमुत्कर्णं राजानं चावलोक्य । स्वगतम्) एसारिण्णाए व्व योसारण्णा दाणिं विलिहिदा । णदाव जादरूवादेवी । एसोह दासो बह्मणो । इमिणा जणाहिणाहेण सम्मंपदारिदोविप्पापच्छीमबुद्धिणोत्थि आहाणयो मए एव्व फलिदो । पुरा वारखुडियणक्कपिचण्डणिग्गरिं णासाहरणसमुग्गियं आसारिय केणवि असरीरिणिवयणेण सिह्मलद्दिवं तित्थजत्ताजेणगमिउणमं तत्थवणेताए अङ्गिकिदं सङ्गिदं दिवन्दरगतकोइलवाणं ए विलासोत्तिपदारिय तेण एव्व सङ्गीतमग्गेण कच्छन्तो णूणं दिव्वं ठट्ठं एव्व पुरा पेक्खइ णराहिणाहो तन्णिबन्दणा एव्व एसा मयणवेयणा । जातरूपाणिमित्तेत्ति संवरणं एदं तदणुरूपं एव्व मये अभिहिदेवि दाणिं णासाहरणं णालिहिदं राकदाव एदं बुत्तलं जादरूवाए देवीए णिवेदइस्सम् । होदु एत्थ एव्वं दाव । (प्रकाशम्) तुह लेहणचउरत्तणामुहावेण एसा जादरूवा अण्णावि आदे विदिसइ ।

**राजा—** (स्वगतम्) अगण्यलावण्यमहिमानमालक्ष्याशु पक्ष्मलाक्ष्या यथाजातोप्येष जातरूपेति धिषणामुत्प्रेक्षते । अहो लावण्यातिशयो रमण्याः । अतः केनाप्युपायेनाहमेनमितः क्वापि निष्कासयामि (प्रकाशम्) वयस्य पश्य तावदंबरमध्यमध्यासीनो भगवानंभोरुहिणीपरिणिः । तदिह प्रवहन्तीं सह्यसुतामवगाह्य निर्वर्तितमाध्यन्दिनसन्ध्योपासनश्चित्रान्नपरमान्नसूपापूपाज्यशर्करामुलान् विविधभक्ष्यवर्गान् यथाभिमतं पश्य ।

**विदूषकः**— (स्वगतम्) एसा जादरूवादेवी अण्णावाहोदु ए-त्थकिमण्णेवत्थ वियारेण । अहं दाव पिट्ठोट्ठपेज्जन्तं मिट्ठण्णं जहेट्ठं भक्खेमि (प्रकाशम्) जह अहिरुइदं पियवयस्सस्स ।

(इति निष्क्रान्तः ।)

**राजा**— अद्यापि रयादाकाशयानमासाद्याशु कथं नायातवती प्रति-भावती । इति चिन्तामभिनीय चित्रमालोकयन् तिष्ठति ।

(ततः प्रविशत्युद्यानपालः ।)

**उद्यानपालः**— महाराय विजयी होदु । एदस्स बाउज्जाणस्स दुवारेकाविजोइणिसिसाएसहिदा आगदा । एसा तुह दंसणं अहिलसदि ।

**राजा**— (स्वगतम्) एषैव प्रतिभावतीति मे प्रतिभाति (प्रकाशम्) अयि माणवक ! तामाशु प्रवेशय ।

**माणवकः**— जं देवो आणवेदि । (इति निष्क्रान्तः ।)

**राजा**— (चित्रफलकमाच्छाद्य धैर्यमवलम्बमान इव तिष्ठति ।)

(ततः प्रविशति ताभ्यां सह माणवकः ।)

**माणवकः**— इदो महाशयो ।

**राजा**— (आयान्तीं प्रतिभावतीमालोक्य । स्वगतम्)

**स्वेच्छाचारकृते पदोर्मणिकृते संबिभ्रती पादुके**
**पाणौ वेत्रलतां च भस्मघुटिकां मायाप्रयोगोचिताम् ।**
**मौढाकर्षणमूलिकावलयितं बाहौ च लोहाङ्गदं**
**फाले भूतिसिते च वश्यविधये स्पष्टं मषीचित्रकम् ॥**

रुद्राक्षदामकृतकञ्चुकलोलशैव-
सूत्रानुबन्धशिवलिङ्गसमुद्रकेयम् ।
प्राप्ता मदीयसविधं प्रतिभावती सा
कापालिकी तनुमतीव कला चकास्ति ॥

**प्रतिभा**— (उपसृत्य । एकहस्तं विस्तार्य) चिरं जीव महाराज चिरं जीव ।

**राजा**— (सस्मितम्) अपि कुशलं तत्रभवत्याः प्रतिभावत्याः ? ।

**प्रतिभा**— (स्वगतम्) अहो सर्वसद्याधिपतेरस्य सार्वज्ञ्यम् । यदयं श्रुतपूर्वः । तथापि मम नाम जानाति । (प्रकाशम्, सस्मितम्) वत्स महाराज संप्रति तव दर्शनातिशयेन ।

**राजा**— उपविश (इति स्थलं निर्दिशति ।) वत्से योगविद्य विस्तारय कृष्णाजिनम् ।

**योग**— (कृष्णाजिनं विस्तारयति ।)

**प्रतिभा**— (नास्थेनोपविशति ।)

**राजा**— अपि नाम कुशली विजयकेतुनामा सिंहलद्वीपसुत्रामा ।

**प्रतिभा**— (आश्चर्यस्तिमिता । स्वगतम् ।) न परं मम नामधेयमेवायं जानाति । किन्तु– समस्तमपि वृत्तान्तम् । यस्मादसत्पक्षपातिनं सिंहलद्वीपाधिपालं विजयकेतुं पृच्छति (प्रकाशम्) (विचार्य) कुशली स पुरा भवति क्षोणीपरिणीरितो विजयकेतुः ! तुभ्यं दत्वा दुहितरमनुरूपायावनीन्द्र चन्द्रकलाम् ॥

**राजा**-- (स्वगतम्) हृदय समाश्वसिहि ।

या दुर्लभेति तृषितं हृदयाक्षिपं त्वां
सेयं त्वयाद्य सुलभेति विचिन्तयेथाः ।
संप्रार्थितेव बत मां स्वयमेव तस्याः
पाणौ कृता त्वरयति प्रतिभावती यत् ॥

**प्रतिभा**— (कर्णावलंबितां स्फटिकाक्षमालामवलंब्य अर्धनिमीलितलोचना जपति ।)

**योगवि**— अय्य महाराय झत्ति अण्णत्थ वेसय एणं उज्जणपालयम् ।

**राजा**— माणवक ! तावदस्य बालोद्यानस्य द्वारे स्थित्वा ममान्तरङ्गं सारङ्गमपि न प्रवेशय ।

**माणवकः**— जं अय्यो भणादि । (इति निष्क्रान्तः ।)

**योगवि**— अय्य सकलकलाकुशल रहुणाहणरवाल एसामह भयवदि पडिहावदि महाणुहावा । तहहि एसा हिमवन्दसिहरे सन्ददासिसिरे सहस्ससंवच्छले पज्जन्तं कावालियं वदं अवलं विअ पुराहि पुराहियादिं आराहिदवदी भयवदी । तदो भयवं विणदभयणासणो ईसाणो पसण्णो भविअ सेयदिमाणुसेसु आयासयाणादिसु कोसलं परिसज्ज ।

**राजा**— अये योगविद्ये तर्हि किमनेन पादुकादिवहनेन ।

**योगवि**— अय्य महाराय भवन्तेण सम्मं आसङ्किदम् । इमाओ जेहच्छ सञ्चरणकम्मणमणिपादुयायो विविहमायापयोयाणुऊणणेत्तलयंभसिदघुडियं विअट्ठजणाघट्ठणमूलीआकलिदल्लोहरेयूलंसआलवसीकरणकारणं णिरंजणं अण्णायो तारिसीयो महोसयो

वि पसिद्धाणवाविदे सिद्धाभयवदी एसी सत्तणेण दत्तवत्ता। एसा ते सुयणुग्गहं कुणिदुं एदाइ दाव णिजदेहे वदेहि।

**राजा**— सत्यमेवैतत्। महानुभावा खल्वियं प्रतिभावती। ततस्ततः।

**योग**— (वक्तुमिच्छति।)

**प्रति**— (श्रुतिमभिनीय सोद्वेगम्) हन्त चिरन्तनाभ्यासो न जानाति समयविशेषम्। (इति जपमुपसंहरति।)

**योग**—

**रूवं एदमहो हसेइ मयणं रन्धेय अन्देविहो**
**पण्डिच्चादिसयो कलासु धिसणं बाहेइधीरं इमम्।**
**गव्वं दिव्वमहीहरस्सइणमो गंभिज्जमंभोणिहिं**
**पच्चक्खाइइ अन्धुणो इचरविं बाहामहस्संपहा॥**

ता एदारिसं महाणुहावं तुमं पेक्खत्तिए एदाये अण्णत्थमणप्पवुत्तिणं होइ। तहविसे चिरन्तणम्भासेनमणो एत्थवि अज्जजवपरायणो होज्ज। किं अण्णत्थदत्तव्वं।

**राजा**— अथ किम्।

**प्रतिभावती**—

**सर्वानप्यवनीभृतो विदलयन् सर्वंसहामेकरो**
**धीरो यो वहतीति तद्धृतिकृतो दिश्या गजेन्द्रा भिया॥**
**लोकालोकशिलातलार्पितमहाजैत्राङ्कनं घर्षण-**
**व्याजेनादधते कपोलफलके दानांबुजंबालिते॥**

**वसन्तः**— (सभयसंभ्रमम् ।)

सम्भ्रान्तोऽहं महाराज न जाने वक्तुमुत्तरम् ।
कथं वा केन वैवाहमिहानीतः प्रभोऽधुना ॥ ११ ॥

स्वप्नो वा किमियं माया किमु वा चित्तविभ्रमः ।
( किञ्चिद्विचिन्त्य हृदयेनावधार्य )
सत्यं भणामि भो राजन् कौमुदीं रमणीमहम् ॥१२॥

आश्वास्य मत्प्राणसमां जनकाज्ञातिदुःखिताम् ।
अर्धरात्रे गृहाद्गूढमनयं विपिनं त्विदम् ॥ १३ ॥

**इन्दुशर्मा**— (सरोषम् ।) विरम विरम महीपाल, चित्रवधार्हः खल्वयं कन्यारत्नतस्करः । दण्ड्यतामविलम्बेन । अहो मकरन्द, त्वद्वल्लभां मे प्रियकुमारीं हृत्वा यत्र कुत्रापि स्वयं गान्धर्वेणोपयन्तुं किलारब्धमनेन वसन्तहतकेन । तद्दिष्ट्या वर्धसे ।

**मकरन्दः**— अहो ! इन्दुशर्मन्, अयमञ्जलिस्त्वां प्रत्यर्थये कौमुदीम् । पूर्वेद्युः सौदामिन्या विज्ञप्तोऽहं कौमुदीवसन्तपलायनं कौमुदीविभ्रमाक्षिप्तहृदय एव मामेव प्रणयेनानुगतां त्रिलोकसुन्दरीं सौदामिनीं न्यक्कृत्य कान्तारमिममागतोऽभवम् । इदं तु न ज्ञायते । केन वा कारणेन पुनरपि सौदामिनीमभजन्मदनुरागः । सम्प्रति तु ।

सौदामिनीप्रणयचोरितमानसोऽहं
सौदामिनी हि वनिताकुलरत्नभूषा ।
सैवाद्य मे शरणमेवमनङ्गतापः
सौदामिनीस्फुरणचञ्चल एव रागः ॥ १४ ॥

वसन्त एव कौमुद्यां प्रणयी साऽपि तं प्रति ।
मनसाऽपि स्मरेयं त्वत्कन्यकां न कदाचन ॥ १५ ॥

**राजा—** (सविस्मयम् ।) अहो! सम्यग्भणितम् । रे इन्दुशर्मन्, प्रशस्ता नातिभाति ते मतिः । तद्वरीयान् वरस्ते वसन्त एव। मकरन्दश्च सौदामिनीदत्तराग एव वर्तते । तदिदमेव साधु। अस्मिन्नेव दिवसेऽनयोः कौमुदीवसन्तयोः सौदामिनीमकरन्दयोश्चास्मदुत्सवसमाज एव पाणिग्रहणमङ्गलोत्सवो निर्वर्तनीयः। प्रिये कनकलेखे, परिणयवेलाप्यासन्ना । तत् सर्वेऽपि क्षिप्रं प्रासादमेव गच्छन्तु । (इति निष्क्रान्तः सपरिवारो राजा ।)

**मकरन्दः—** (सवितर्कम्) सत्यमेवायं स्वप्नोऽथवा कोऽपि विप्रलम्भ एवेति मन्ये ।

**कौमुदी—** सर्वमेतद्भूतमसम्बद्धम् ।

**सौदामिनी** सर्वथा स्वप्नएवैषः ।

विहाय कौमुदीं रम्यां प्रसादमकरोन्मयि ।
वल्लभो मकरन्दोऽयं कथं वैतस्य सम्भवः ॥ १६ ॥

**मकरन्दः—** (कौमुदीं प्रति ।)

कथं वा मन्यसे सुभ्रु स्वप्नोऽयमिति चिन्तये ।
किं वा स्मरसि राज्ञोऽत्र निदेशं नगरं प्रति ॥ १७ ॥

**कौमुदी—** अथ किम् । न केवलं राजा । तमनु मे जनकश्च तत्राभूत् ।

**सौदामिनी—** कनकलेखाऽपि ।

**वसन्तः—** प्रासादमागच्छतेति किल राजनिदेशः ।

**मकरन्दः**-- तथा चेत् सर्वेऽपि वयं जागृमः । तत्साम्प्रतं राजादेशानुरोधेन प्रासादमङ्गलमण्डपमेव सत्वरं भजामः ।

(इति निष्क्रान्तः ।)

**अधरकः**-- (प्रबुध्य ।) कहं शुहिआ धण्णआई शव्वोहम्मि ट्ठावूण अह्मइन्दणेप्पच्छं पि धळिअ भाणुमइं एक्कपदम्मि मोइअ णिउञ्जं णं पविट्ठेण मए शुविज्जइ । (सत्वरमुत्थाय) पिए भाणुमइ, (इत्यादि व्याहरन्निकुञ्जाद्बहिरागत्य धान्यकादीनपश्यत् ।) वळे धण्णआ महामए, अज्ज ळाअशा, अळे वशुवाळिदा, शहे धणआ, (इति सर्वतोऽन्विष्य ।) कहं गदा इमे वळाआ । (विचिन्त्य ।) अपुळिवे एशे शिविणए । शव्वाह वि अश्शुदचळे इळ एशे । ता अवन्तिं वेअ गदुअ धण्णआह वुत्तं णिहिळं पि अख्खाऊण अहिणेदव्वे पअळणे पत्थावणाळुव्वेण पआशेमि । णामेण अहळआशियिणए त्ति होदु शा ।

(इति निष्क्रामति ।)

कथं सुहृदो धान्यकादीन्सरोरोधसि स्थापयित्वाऽश्मकेन्द्रनैपथ्यामपि धृत्वा भानुमतीमेकनदे मुक्त्वा निकुञ्जमेतं प्रविष्टेन मया सुप्यते । प्रिये भानुमति, भो भो धान्यक महामते, हे राजस, रे वसुपालित, सखे धनक, कथं गता इमे वराकाः । अपूर्वोऽयं स्वप्नः । सर्वस्याप्यश्रुतचरः किलैषः । तदवन्तीमेव गत्वा धान्यकाय वृत्तं निखिलमप्याख्यायाभिनेतव्ये प्रकरणे प्रस्तावनारूपेण प्रकाशयामि । नाम्ना अधरकस्वप्न इति च भवतु सा ।

(ततः प्रविशन्ति धान्यकः, वसुपालितः राजसः साधकश्च ।)

**धान्यकः**— कहं पेशिदे दूए अहळअणिएअणम् । अवि णाम घेळं पडिणिउट्टे अहळए ।

कथं प्रेषितो दूतोऽधरकनिकेतनम् । अपि नाम गृहं प्रतिनिवृत्तोऽधरकः ।

**साधकः**— (सविषादम् ।) ण किं पि मुणिज्जइ । शच्चे वेअळाशहीकिडे शे ।

न किमपि ज्ञायते । सत्यमेव रासभीकृतोऽयम् ।

**वसुपालितः**— जइ ण आआमिज्ज अहळए अम्हाण लूवआहिणए अशक्किए वेअ । अवणिवाह वि अशन्दुट्ठी ।

यदि नागच्छेदधरकोऽस्माकं रूपकाभिनयोऽशक्य एव । अवनिपस्याप्यसन्तुष्टिः ।

**धान्यकः**— णं विण अह्मइंन्दवेशे ण काह वि जुज्जइ ।

एनं विनाऽश्मकेन्द्रवेषो न कस्यापि युज्यते ।

**वसुपालितः**— पच्चुप्पण्णमई इल शे ।

प्रत्युत्पन्नमतिः किल सः ।

**धान्यकः**— कळअण्ठाह विअ शे वाहाळे ।

कलकण्ठस्येव खलु तद्व्याहारः ।

(प्रविश्य ससम्भ्रमम् )

**धनकः**— अळे भाआळे देअजत्तं णिव्वट्टिअ पच्छागच्छइ ळाआ । पाणिग्गअणमङ्गळप्पाडिशळबद्धहत्था तळुणा तळुणिओ अ ।

( नेपथ्ये मङ्गलध्वनिः । )

शू! णाडअप्पओअवट्टा वि णळवळशण्णिहिम्मि अज्ज ण पत्थोदव्वा ।

भ्रातरः, देवयात्रां निर्वर्त्य प्रत्यागच्छति राजा । पाणिग्रहणमङ्गलप्रतिसंरबद्धहस्तौ तरुणौ तरुण्यौ च । हन्त! नाटकप्रयोगवार्ताऽपि नरपतिसन्निधावद्य न प्रस्तोतव्या ।

**वसुपालितः**— ( सखेदम् । ) शहे अहळआ ळामणिज्जअणिहे, हदा अम्भे तुह अशण्णिहाणेण ।

सखेऽधरक, रामणीयकनिधे, हता वयं त्वदसन्निधानेन ।

( प्रविश्य पटाक्षेपेण । )

**अधरकः**— ( सहर्षसम्भ्रमम् ।) वळे शुहिआ, कहं एत्थ ठिज्जइ । कुदो एशे आळश्शे ।

सुहृदः कथमत्र स्थीयते । कुतइदमालस्यम् ।

**धान्यकः**— ( सम्मोदातिशयं नाटयन् । ) अहळआ, अज्ज वेज किदत्था म्ह । एशे वेअ अम्हाण भग्गपळिणामे ।

अधरक, अद्यैव कृतार्थाः स्मः । अयमेवास्माकं भाग्यपरिणामः ।

**अधरकः**— शुहिआ, अच्चब्भुअं मे वुत्तं वाहळम्हि वो ।

सुहृदोऽत्यद्भुतं वृत्तं मे । व्याहरामि वः ।

**धान्यकादयः**— अच्चळिअश्शवणकुउक्किल्ला अम्भे ।

आश्चर्यश्रवणकुतुकिनो वयम् ।

[ नेपथ्ये मङ्गलगीतवाद्यानि श्रूयन्ते । ]

**अधरकः**— शंव्वइ ण किं पि कहेज्ज । अट्ठाणमण्डवं आअदे ळाआ शव्वे वि अम्भे पअळणाणुशाळेण जहूइदणेप्पच्छशामग्गिळीओ शण्णाहिअ उव्वाहमण्डवं उवगदुअ पडिक्खिअ ओशळं अपुळिवे एशे णाडअप्पओए त्ति जह शामाइआ वइश्शन्दि तह अप्पमत्तेहिं अम्भेहिं भव्वे । ता द्रुददळे ओशळम्ह ।

सम्प्रति न किञ्चिदपि कथयेयम् । आस्थानमण्डपमागतो राजा । सर्वेऽपि वयं प्रकरणानुसारेण यथोचितनेपथ्यसामग्रीस्सन्नाह्योद्वाहमण्टपमुपगत्य प्रतीक्ष्यावसरं अपूर्वोऽयन्नाटकप्रयोग इति यथा सामाजिका वक्ष्यन्ति तथा अप्रमत्तैरस्माभिर्भाव्यम् । तत् द्रुततरमपसरामः ॥

[ इति निष्क्रान्ताः सर्वे ]

इति वासन्तिकस्वप्ने चतुर्थोऽङ्कः ॥



# पञ्चमोऽङ्कः ॥



( ततः प्रविशतः प्रासादपर्यङ्कतलस्थौ राजा कनकलेखा च ।
सभामण्टपासीनः प्रमोदः नागरिकमुख्याः परिवारश्च । )

**कनकलेखा**— आर्यपुत्र, विचित्रमेतद्वधूवराणामनुरागाविष्टचेतसां कथितम् ।

**राजा**—

अद्भुतं भणितं तेषामपि नैव कृतं भवेत् ।
न प्रत्येमि कदाऽप्येताः कल्पनागुम्भिताः कथाः ॥१॥

कामुकानां तथोन्मत्तजनानां मतिवृत्तयः ।
अन्तराहेतुसामग्रीं कल्पयन्ति नवं नवम् ॥ २ ॥

कामुकः कविरुन्मत्तः कल्पनामयमूर्तयः ।
पिशाचलोकाः सर्वेऽपि स्फुरन्त्युन्मत्तचक्षुषोः ॥ ३ ॥

रागोन्मत्तमना विवेकविधुरः पञ्चेषुणा वञ्चितः
कामी पश्यति कुत्सितां स्त्रियमहो! कामस्य हि प्रेयसीम् ।
आवेशात्कवनोद्भवादृगमला विज्ञानरूपा कवेः
यात्यायाति नभोऽवनेश्च नभसो भूमिं भ्रमन्ती सुखात् ॥

कविमतिरतिचतुरा सा कालेनैतावताऽपि यन्नैव ।
सृष्ट्वा किमपि च तत्तद्वासभुवं नाम चास्य सन्धत्ते ॥

सन्ति चमत्कृतयस्ताः कविधिषणायाश्च कल्प्यते धुरि यैः ।
हर्षभयादौ तत्तत्कारणकार्याङ्गकर्तृसामग्री ॥ ६ ॥

**कनकलेखा--** राजन्, सर्वेषामेकवाक्यतो निशावृत्तमाकर्ण्य तत्सर्वमत्यद्भुतमपि सत्यमेवेति प्रतीयते ।

**राजा--** संप्रति पश्येत एवाभिवर्तन्ते ते वधूवराः ।

[ ततः प्रविशति वसन्तः मकरन्दः कौमुदी सौदामिनी च ]

**राजा--** ( सस्मितम् । ) मङ्गलपरम्परया नित्यसम्मोदोदर्कं वर्ततां राजमन्दिरम् ।

**राजा--** अस्मिन् महोत्सवे हर्षानुरोधेनात्मानं परिजनञ्च विनोदयितुं किमपि रूपकं दिदृक्षुरस्मि । कुत्रास्ते प्रमोदः । कुतश्चास्मत्सभासूत्रधारः ।

**प्रमोदः--** [ उदञ्जलिः ] देव महाराज वीराग्रेसरमणे, सज्ज एष दासः ।

**राजा--** क्षपामेनां क्षपयितुं किमप्यस्ति वा विनोदनम् । नृत्तं रूपकमथवा गीतम् । यथा तथा वा मोदेन कालयापनं कर्तुमीहे ।

**प्रमोदः--** अत्र प्रतीक्षन्तेऽवसरं बहवो राजानं विनोदयितुम् । अनेकानि च विनोदनानि । यदि रोचते देवायाऽखिलमपि व्यक्तीभविष्यत्यनेन पत्रकेण । [ इति लेखं ददाति ]

**राजा--** [ गृहीत्वा वाचयन् ]. प्रथमतो 'राज्ञः सन्निधौ वीणापाणिः सौविदल्लः कश्चिद्भीमेन जरासन्धस्य निधनं गातुमिच्छति ।' सांप्रतं न रोचते मे गानाकर्णनम् । उक्तपूर्वैव कथाप्येषा प्रसङ्गतः कनकलेखायै ।

[ पुनरपि वाचयन् ] ततः 'रौहिणेयस्य सूतवधचरितं नाटकरूपेण प्रयोक्ष्यते ।' [ स्मरणमभिनीय ] एतदपि काश्मीरविजयानन्तरं भागीरथीरोधसि दृष्टचरमेव ।

## संवादवृत्तान्ताः ॥

---

अनन्तपुरजिल्लान्तर्गते पामिडिग्रामे पिनाकिन्यास्तीरे काचन वेद-शास्त्रपाटशाला वैदिकाग्रेसरैः सुप्रतिष्ठिता विलसति। विद्यार्थिनां वेदे काव्यनाटकादिषु च सम्यग्विनयनं परिशोधकेनाभिनन्दितमिति च श्रुणुमः ॥

दक्षिणकर्णाटकजिल्लान्तर्गते कोल्नाड जनपदे काचन संस्कृतपाट-शाला महता धनव्ययेन प्रचाल्यमाना रमणीये निकेतने प्रतिष्ठिता समा-वर्जयति मानस सहृदयानाम्। अस्याः पाठशालायाः संनिवेशरामणीय-कादिक भाविनीमभ्युदयपरम्परामनुमापयतीति परिशोधका मन्यन्ते ॥

---

# An Important Announcement.

UNDER instructions from His Holiness the Jagadguru Sri Sankaracharya of Kamakoti Peetham, Kumbakonam, it is decided to present *free of cost* to the purchasers of our edition of Brahmasutra Bhashya with Bhamati, Kalpataru and Parimala, a rare and hitherto unpublished commentary on Kalpataru called Abhoga (आभोगः). This is a very valuable commentary, evidently written after a perusal of the Parimala. It will surely be very helpful to the readers of the Panchagranthi. From the 5th part forwards we will give 3 additional formes of this Abhoga at the end of each part. In printing this Abhoga we have noted marginally the number of the pages of Kalpataru (our edition) to facilitate reference. Besides the above precious commentary a very elaborate and useful Table of Contents is being prepared for each of the four works, viz., Bhashya, Bhamati, Kalpataru and Parimala. These Tables are expected to come up to about 80 pages and these also would be sent free of cost to the purchasers of the Sri Vani Vilas Edition.

THE MANAGER,

BOOKSELLING DEPARTMENT,

**Sri Vani Vilas Press, SRIRANGAM.**

## विषयाः ।

| | |
|---|---|
| सुभाषितानि— | Gems from Sanskrit Authors— |
| कुमारसंभवविमर्शः— | Kumarasambhava—A critical study. |
| वसन्तकोकिलः–रामाचार्यः गलगलि । | Vasantakokiia.—-by Ramacharya Galagali. |
| धीमान् जामाता–मुद्दूविठ्ठलाचार्यः गलगली । | The Son-in-law the Wiseacre.—by Muthu Vittalacharya Galagali. |
| रघुनाथविलासम्— | Raghunatha Vilasa.—A Drama by Yagnyanarana Dikshita. |
| वासन्तिकस्वप्नम्— | Vasantikasvapnam.—An adaptation of Shakespeare's Midsummer Nights Dream. |
| देशवृत्तान्ताः । | Literary News. |

# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only, including postage.



कान्तं कारणकारणमादिमनादिं कालघनाभासं
कालिन्दीगतकालियशिरसि सुनृत्यन्तं मुहुरत्यन्तम् ।
कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं
कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिराहृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ] राक्षसवर्ष माघमासः । [ संचि. ११.

## सुभाषितानि ।



निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः ।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ १ ॥

अन्तर्मलिनदेहेन बहिराह्लादकारिणा ।
महाकालफलेनेव के खलेन न वञ्चिताः ॥ २ ॥

न यत्नकोटिशतकैरपि दुष्टः सुधीर्भवेत् ।
किं मर्दितोऽपि कस्तूर्या लशुनो याति सौरभम् ॥ ३ ॥

दह्यमानाः सुतीव्रेण नीचाः परयशोग्निना ।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ ४ ॥

आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य च ।
सोढुं तयोर्मुखाक्षेपमलमेकैव सा क्षमा ॥ ५ ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

( पूर्वतोऽनुवृत्तम् । )

सा भूधराणामधिपेन तस्यां
समाधिमत्यामुदपादि भव्या ।
सम्यक् प्रयोगादपरिक्षतायां
नीताविवोत्साहगुणेन सम्पत् ॥ २२ ॥

'भूधराणामधिपेन' इत्यनेन पूर्वोक्तं शैलाधिपत्यापादकं यज्ञाङ्गयोनित्वं यज्ञाङ्गभागभाक्त्वं च हिमवतः स्मृतिपथमारोपयन्महाकविः यज्ञकरणव्यापृताद्दक्षप्रजापतेरपि अत्यन्तमुत्कर्षं तस्यावगमयन् 'समाधिमत्याम्' इति मातुर्मेनाया नियमाचरणं निर्दिशन् दाक्षायण्या विसृष्टात् शरीरात् हैमवत्या पवित्रतरं वपुरासादितमिति मधुरमुपदिशन् अतिरमणीयेनोपमानेन हिमवता समासादिता सर्वजनमहनीया स्पृहणीया च संपदियमेवेति सूचयन् 'अनन्तररत्नप्रभवस्य' इत्यादिना निर्दिष्टमाशयं सम्यग्द्रढयति ॥

प्रसन्नदिक् पांसुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥

सर्वलोकक्षेमायावनावाविर्भवतां तेजोवतां जन्मसमये 'जगुः कलं च गन्धर्वा ननृतुश्चाप्सरो गणाः । देवदुन्दुभयो नेदुः पुष्प-

वृष्टिश्च खाच्च्युता' इति प्राचेतसेन महर्षिणा प्रदर्शितां सरणिमनुसरन् महाकविरस्मिन्पद्ये समाविष्कृतमाशयं— रघुवंशेऽपि 'दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे; बभूव सर्वं शुभशंसि लक्षणं भवो हि लोकाभ्युदयाय तादृशाम्' इति, 'विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव । आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि, सन्तानकमयी वृष्टिर्भवने तस्य पेतुषी' इति चानुवर्णयन्नादिकविमसकृदनुस्मारयति ॥

तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ॥ २४ ॥

पद्यमिदमनुध्यायतामस्माकं 'रघुवंशप्रदीपेन तेनाप्रतिमतेजसा । रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् । शय्यागतेन रामेण माता शातोदरी बभौ । सैकताम्भोजबलिना जाह्नवीव शरत्कृशा' इत्यन्यत्रोक्ताः अस्यैव महाकवेः सूक्तयः स्मरणपदवीमास्कन्दन्ति ॥

दिने दिने सा परिवर्धमाना
लब्धोदया चान्द्रमसीव रेखा ।
पुपोष लावण्यमयान्विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ॥ २५ ॥

देवतेयं स्वयमेवानुदिवसं परिवर्धमाना लावण्यमधिकाधिकमात्मन्युवाह इति वदन्महाकविरिहानुरूपेणोपमानेन हैमवत्या भाविनीं चन्द्रचूडशरीरावस्थितिं ध्वनयतीव ॥

रघुवंशे तु 'पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिनेदिने । पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः' इति वर्णयन् देवताप्रसादादधिगतजन्मनो रघोरुदयः प्रयत्नसापेक्ष आसीदिति भावुकानवगमयतीव ॥

तां पार्वतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव ।
उमेति मात्रा तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम ॥ २६ ॥

लोकोपकारायावतीर्णानां शुद्धसत्वमयानामोजस्विनां नामकरणे औचित्यानुचिन्तनमावश्यकमाकलयन्कविसार्वभौमः यथेह 'पार्वती' 'उमा' इति नाम्नोः आभिजात्यतपश्चरणमूलत्वमुपवर्णयति तथैवान्यत्रापि 'राम इत्यभिरामेण वपुषा तस्य चोदितः । नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ।' इति, 'श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः । अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम्' इति च वर्णयन् महाकविभिरनुसरणीयां सरणिमनुशिक्षयतीव ॥

महीभृतः पुत्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ २७ ॥

अत्र हिमवतः पार्वत्यामसाधारणः प्रेमातिशयः समभूदिति निरूपणव्याजेन कालिदासः सतीष्वपि बह्वीषु देवतासु तस्यामेवात्मनो निरतिशया भक्तिः प्रीतिश्चासीदित्यवगमयति व्यङ्ग्यसरण्या ॥

प्रभामहत्या शिखयेव दीप-
त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी
तया स पूतश्च विभूषितश्च ॥ २८ ॥

अत्र प्रथमं पार्वतीं दीपशिखयोपमयन्महाकविः तथां दीपस्य केवलमलङ्करणमेव संपाद्यते इत्याकलय्य, अनन्तरमेना त्रिमार्गया सदृशयन्, तयापि त्रिदिवस्य केवलं पवित्रीकरणमेवानुपश्यन्, तावताप्यसंतुष्टः, पवित्रीकरणमलङ्करणं चैव एकया संस्कारवत्या गिरा मनीषिणः संभवति किल इत्यनुचिन्तयन् भवानीं तया सहोपमिमीते— इत्यहो! संकल्पचातुरी महाकवेः ।

पुत्रीत्वमापन्नया देव्या भवान्या सान्वयो हिमालयः पवित्रीकृतः विभूषितश्चाभवत् इति वर्णयन्कविः (मनीषी) काव्येऽस्मिन्वाग्विषयीकृतायास्तस्या एव देवतायाः महिमानुसंकीर्तनेन स्वयमपि पूतश्च विभूषितश्चेति साध्ववबोधयति ॥

(क्रमशः ।)

॥ श्रीः ॥

## ॥ वसन्तकोकिलः ॥

—✻—

अयि कोकिल, भवान्वसन्तकालीयः कोकिलो महालोकगण्यः । यदा किल फलकुसुमावलिभिस्तरुभिस्तरुलताकलापो निबिडितो भवति, पुष्पपरागसौरभभरेण सुवासितः शीतलो मलयानिलो मन्दं मन्दं वहति, वसुमतीयमानंदातिशयेन सुरलोकमुपहसति तदैतस्मिन्परमरमणीये समये भवानाविर्भवन् स्वीयं रसिकताप्रकटनमुप-

क्रमते । परं तु प्रबलतरशिशिरतया यदा विशीर्णशरीरो वेपते नितान्तं सर्वजीवराशिः, महीरुहनिवहोऽपि पलाशवैपुल्यविरहेणाकुलतामयते, किं च सकलसृष्टिर्मृतकोटिनिविष्टा दृष्टिपथमाटीकते तदैतादृशदयनीयदशायां कोकिलमहाराज, कुत्र वा विलीय स्थास्यसि? तथा प्रावृषि दीनदुर्गतानां दीपायितप्रभाकरकुटीरानात्मसात्कुरुते भयंकरापारसरिन्निकरो यदा करुणांकुरोषरः, धाराधरस्य मुसलधारावर्षणेन न केवलं काकचटकादीनां पतत्रिणामपि तु मनुष्यप्राणिनामपि समुन्मिषति महान्कोलाहलः तदा रसिकशिरोमणे पिक, भवतः परान्नपुष्टं शान्तागारसोदरं शरीरं कुत्र वा गौप्येन गोपायसि? । आं सत्यं वसन्तकोकिलो भवान् न हि शीतवर्षाकालिकः ॥

कोकिल, एवंवादिनि मयि मागाः कोपलेशमपि । त्वादृशा बहवः सन्ति वसन्तकोकिलाः किलास्मास्वपि मानुषेषु । एकदा धनधान्यसमृद्धस्य देवदत्तस्य गृहकुञ्जे बहुला नरकोकिलाः सममिलन् दूरतो बादरायणसंबन्धमाप्तत्वं संपाद्य । तेषामादरातिथ्यं वितन्वतोर्दंपत्योरासीन्महीयानायासः । तेषु कोऽपि देवदत्तदयिताभागिनेयजामातुः सोदरः । अस्य खलु सद्योघृतपूर्णरौप्यभाजनमन्तरा कवलमेव न विशति गलान्तरे । अयमपरःकोऽपि देवदत्तसुहृदः पितृव्यतनयस्नुषामातुलश्यालकः । अमुष्य नितरामावश्यकमुष्णमेकं प्रतिदिनं पक्वान्नम् । कदाचिदनवधानतया शैत्यमापन्ने परिवेषितपक्वान्ने कोपदहनज्वालाजटालः सद्यो दहतीव परिजनमयम् । अमीषां निजसदने मध्याह्ने क्वचित्प्रसङ्गे कदन्नकवले दुष्करेऽपि सम्भासादयितुम्, देवदत्तमन्दिरे स्वकाभीष्टाहारे किंचिदपि व्यत्यासः शिरःशूलमुपजनयत्यतिमात्रमसह्यः । आत्मनः सुखमये समये कोकिला

अमी सुस्वरेण यजमाने कुर्वन्ति निरवकाशं स्तुतिवर्षम् । तदपि कियत्पर्यन्तम्! सम्मुखे सति यजमाने । विमुखे च तस्मिन् तत्क्षणमेव मन्देतरनिन्दां रचयन्तो विन्दन्ते महदानन्दसंदोहम् । उपनयनविवाहादिशुभप्रसङ्गेऽपि देवदत्तप्रासाद ईदृक्षकोकिलकुलतिलककुलकलकूजनाकुलः प्रतिध्वनति । गायन्ति केचन, अभ्यववहरन्ति परे, हसन्ति चान्ये, मिथश्चेष्टादिकमनुतिष्ठन्ति चेतरे । एवं संगतो नरकोकिलनिचयः स्वल्पेतरप्रमोदभरितो देवदत्तनिलयमंतराल एव धारयतीव । उपवनमाविशतो देवदत्तस्य पुरतो विनयातिशयेन धावन्त इमे तत्सम्मुखमापततो मक्षिकादीनपि निवारयन्ति करवारिजैः ॥

परं तु जातुचिदेकस्यां तमस्विन्यां देवदत्तस्य तनये दुर्दैवविपाकेन ग्रन्थिकसन्निपातादुपरितनलोकमुत्पतति कठोरकुलिशाघातेनेवालघुक्लेशेन विदीर्णहृदये तस्मिन्यजमाने बहुवारं दूतैराकारितेष्वपि तेषु मर्त्यपिकेषु केचन मूर्धबाधाव्याजेन, परे मातुलसुतजननजातसुखमिषेण, अन्ये पूर्वतननिशीथिन्यां जातजागरणापदेशेन, केऽपि नाभ्यागच्छन् । उचितमेवेदं ! इदानीं यद्देवदत्तस्य विपद्रूपवर्षाकालः । न खलु सुखमयवसन्तः । कष्टप्रचुरेऽस्मिन्दिष्टे वसन्तकोकिलाः कथमात्मानमाविष्कुर्युः ? ॥

हे बान्धव वसन्तकोकिल, तवायं नापराधः । तदिह तव तन्मधुरं कूजनमारभस्व । अस्मिन्नशोकपादपशाखायामुपविश्य शोणारविन्दे चञ्चरीक इव प्रज्वलिताङ्गारतुलिताशोकपाटलदलसमुदये पिधायात्मनः कालकलेवरं समुदञ्चितपञ्चमस्वरप्रपञ्चः । 'कु. ऊ, गायनमाचर सत्वरम् । सखे, तदतीव मे रञ्जयति मानसं । स्वयं कृष्णस्य ते, परपिण्डपुष्टस्य विष्वक्कुपूयमेव नयनविषयीभवनं तद-

नुसृत्य 'कु, इति गायनमुचितमेव । नाहं ब्रवीमि तवेदमाग इति । तर्हि मयि कोपमपास्य 'कु-ऊ. इति गायतु भवान् पश्यामि । वसुधातले कस्यचन मनोहरवस्तुनो दर्शने त्वयि द्वेषहिंसासूयादिकुत्सितमनोविकारो यदा समुदेति, तदैकस्मिन्नभ्रंलिहभूमीरुहशाखायां निषण्णः प्रोच्चस्वरेण . 'कु, इति वदन्नात्मनः कथमपि समाहितिमातनुहि । सायंतनप्रशांतमये समये मंथरं वहतः शीकरकरम्बितशिशिरसमीरणसंसर्गेण, मधुरगन्धतुन्दिलपुष्पस्तबकभूषिता लता नागवनिता इव यदा दोलायन्ति, तासां सुवासनिवासकुसुमविसराणां विसृमररुचिरसौरभभरभरितं भवति सर्वं वातावरणं यदा, तदा खलु निरुपमरामणीयकमिदमालोक्य लावण्यजलमरुभूमे कोकिल, त्वं द्वेषप्रचुरं 'कु,' गायनमाचर सखे । अनेकचम्पककलिकावलिर्युगपदेव विकसिता परितः प्रसरन्निजातुलामलपरिमलबहुलतया स्वयमेव मुग्धीभूय प्रणयातिरेकेण प्रकटितमहदौत्सुक्याद्यदा परस्परपरिरम्भोत्सवे नितान्तं समुत्सहन्ते तदा भवान् 'कु—ऊ, स्वरेण मुखरीकरोतु निखिलहरिदन्तरालम् । यदा च बकुलतरोर्निबिडतममनोज्ञश्यामलपेशलदलानां सुषमागरिमा नयनयुगलीमाह्लादयति निश्शेषरसिककुलावतंसानां कवीनाम्, तस्यैव पादपस्य कुसुमश्रीर्नवयौवनवती युवतीव लावण्यलक्ष्मीबलेन चलन्ती धुन्वती हसन्ती विहरति स्वच्छन्दम्, किं च तस्य प्रत्नप्रफुल्लप्राज्यपुष्पवृन्दस्य मन्देतरसुगन्धः कन्दलयत्यानन्दसन्दोहम्, तदा तदवनीरुहमारुह्य तन्मृदुलपल्लवतल्लजस्पर्शेन शिशिरितमाचय्य स्वीयशरीरं तदीयप्रसूनानां स्वर्गीयसुवासभवनपवनेन पावनमातनुहि निजतनुमतनुं परान्नेन । तदनु तस्मिन्परिमलसमाकृष्टषट्चरणमंजुगुंजारवसंजनितशर्मपुंजे बकुलकुंजे श्रुतिसुखकरं 'कु-ऊ, स्वरमाविष्कुरु ॥

( क्रमशः । )

॥ श्रीः ॥

# ॥ धीमान् जामाता ॥

पुरा किल पांड्यदेशे पद्मपुरनाम्नि नगरे पुण्डरीकाभिधो द्विजन्मा निवसति स्म। स हि प्रचलिततद्देशपद्धत्या जठरपूरणौपयिकं शिक्षणं बह्वध्यगच्छत्। संस्कृतसरस्वत्यामपि कालं कियन्तमुषित्वा गुरुनिकटे, नातिप्रचुरां प्रज्ञामाप। सापि भ्रान्तिभूयिष्ठैव। कांश्चित्संस्कृतप्रबन्धान्रसनाग्रवर्तिनश्चाकरोत्। स खलु पुण्डरीको मेदिन्यामात्मानमद्वितीयपण्डितं मन्यते स्म। सामान्यसल्लापमपि न प्रमाणाधारप्रदर्शनमंतरा विदधाति स्म। कविकुलतिलकस्य शूद्रककवेरतुलकल्पनाप्रकल्पितशकार इवापेक्षिते समये ईप्सितं प्रस्तुतमप्रस्तुतं वा वक्तुं न किंचिदपि संकुचति स्म। विवाहोपि तस्य केवलेन दैवबलेनाभवत्। श्वशुरसद्म पद्मपुरतो नात्यासन्नस्थिते चंपाऽभिधे पत्तनेऽवर्तत॥

एकदा तस्य पुण्डरीकस्य चेतसि श्वशुरगृहं गत्वा पाणिगृहीतीमवलोकयितुमुदियाय गरीयसी रणरणिका। द्रागुष्णीषादिकं धृत्वा प्रतस्थे च चंपाम्। गच्छतस्तस्य मध्येपदवि निपतितम् गतजीवितम् खरकलेवरं लोचनपथमुपययौ। सदयं तदवलोक्य विचारयितुमारेभे। 'राम! राम! कीदृशी दशास्य गर्दभस्य पूर्वमहमिवाऽयमपि सजीवः सचेष्ट एव वसुधायां लोकानामुपकुर्वन्नुवास। अहह! अस्य न कोपि बन्धुर्नाम भूतधान्याम्। नास्ति चास्य मृदं दातुं कोपि। यद्यहमनाथगर्दभबन्धोः कुणपस्य करवाणि;

ध्रुवं तदाऽश्वमेधफलमवाप्नोमि । यथाह भगवान्स्मृतिकारः 'अनाथप्रेतसंस्कारमश्वमेधफलं भवेदिति । सत्येवं किमर्थं मुधा कालं कर्बुरमयमेनं यापयामि । प्रयत्नोपि न महानत्र भविष्यतीति भाति। उपलभ्यन्ते हि विनैवायासमस्मिन्कानने बहूनीन्धनानि । तनुमेनामपनयाम्यरण्यानीम्, यदि समाप्तप्रायमेव कर्मेति विचिन्त्य परिघटितपरिकरः पुण्डरीको रासभविग्रहं गहनं नेतुं प्रयतते स्म । प्रथममेव मानवदुर्वहं वपुश्चक्रीवतस्तत्रापि मृतिमापन्नं कथं नाम मन्दमतिनाऽनेन शक्येत वोढुं? सोपि द्वित्रिवारं वनमपनेतुं च तन्महान्तं प्रयत्नमतनोत् । अथापि नाल्पमात्रमपि स्वस्थानाच्चचाल कलेवरं तत् । अपि नाम सुकृतं लीलया लभ्यते स्तोकं शारीरं श्रममपेक्षत एव; को हि सुखं सुखसाधनं वा क्लेशमन्तरा प्रभवेदिहावाप्तुं पूरुषः,; इति विचार्य पुनरप्यात्मनो बलमेकीकृत्य बालेयकायमपक्रष्टुं प्रावर्तत । एषापि चेष्टा कष्टायैवाऽभवत् । तदनु स कर्तव्यं किमपि नाज्ञासीत् । किं पुनःपुनस्समायातीदृशः पवित्रतमस्समयः । अश्वमेधफलं नाम न साधारणनरसुकरम्; किं तु निखिलावनिकामिनीकान्तमौलिमालालालितचरणारविन्दस्य, प्रतापप्रेमावनतसमस्तसामन्तमण्डलस्यैकच्छत्राधिपते राज्ञ एव सुसाधं भवेत् । अधुना तु विना वित्तव्यये कतिपयैः काष्ठखण्डैरगतिकस्य खरस्य केवलेन तनुसंस्करणने तादृशमनितरप्राप्यं फलं नातिकायक्लेशमन्तराऽभ्येतीति मतिरस्य । अर्थान्नैतच्चित्रं यत्कर्तव्यमौढ्यमाप पुण्डरीक इति प्रतीमः ॥

कुशाग्रबुद्धेः पण्डितस्यास्याशु स्मरणसरणिमुपागमत् 'सर्वस्य गात्रस्य शिरःप्रधानम्' इत्यार्षं वचनम् । तत आत्मनोऽसा-

मान्यां पाण्डितीमनुपमां च समुचितसमयोत्पन्नां मतिं बहु प्रशशंस । द्राक्कञ्चुकदरीतः ( ध्वाकेट ) छुरिकामुपादाय रासभस्य शिरः कायादपहृत्य च बध्वा चोत्तरीयचेलाञ्चले ज्वलनेन संस्कर्तुं विपिनं विवेश । मस्तकमिति तन्नातिलघुभूतमभवत् । किं च परिपतद्रुधिरधारं तादृशे देशे नेयमासीत्, नास्ति यत्र मानवानामागमनसंभावनापि । एतदप्यशक्यमाकलयन्तथाविधमेव द्वितीयं प्रमाणं सस्मार सः 'सर्वेन्द्रियाणां नयनं प्रधानम्' इति । सत्वरं मस्तकं तत्क्षोण्यां निक्षिप्य पुनश्छुरिकया पृथक्कृत्य मूर्ध्नो नयनयुगलं गृहीत्वा च पुरः प्राचलत् । प्रचलन्नचिरेण निर्मानुषं स्थलमद्राक्षीत् । तत्र हि मन्त्रपूर्वं रासभाक्षियुगमनलेन संस्कृत्य लीलयाऽश्वमेधफलं लेभे धिषणावधूतधिषणः पुण्डरीकः ॥

रहःपण्डितवृत्तान्तेनाऽमुना वारुणीदिगंगनामनोविनोदयितुमिव मन्दं मन्दमदृश्यतामाप भगवान्प्रभाकरः । अविलम्बेन विकर्तनकथितमाकर्ण्योदन्तमनुपममतिसंपदमेनं स्वयमेवाऽवलोकयितुं प्रस्थिताया अरुणारुणागणितमणिगणमण्डितविग्रहायाः प्रचेतसः प्रमदाया देहप्रभेव विद्रुमपाटला सन्ध्या समदृश्यत । क्षणेन कुत इयं सुषमेति द्रष्टुं सरभसमहमहमिकया तारागणो गगनाङ्गणमगमत् । न चिराय व्रीडावशादुडुनिकुरंबे स्थित्वा लोकाविलक्षणं विचक्षणमेनं वीक्षितुमक्षमायाः निजनिकेतनं गतायाः वरुणवरवर्णिन्याः कमनीयकायकान्तिरिवाचाक्षुषतामबिन्दत सन्ध्या । सहचरीसन्ध्यासन्निधानवैधुर्यदुःखितां यामिनीकामिनीं समाश्वासयितुमम्बरतलममृतदीधितिरध्यतिष्ठत् । समयेऽस्मिन्नस्मदीयचरित्रनायकः पण्डितप्रवरः पुण्डरीकः प्रत्यासन्नां चम्पां प्रसमीक्ष्य मार्गक्रमणखिन्नोपि संतुष्टान्तरङ्गः तत्रैवो-

पविश्य चिन्तयाञ्चकार एवं किल धर्मशास्त्रमुद्घोषयति प्रेतसंस्कारकर्त्रा यावद्दशदिनमशुचिना भवितव्यमिति । अशुचिश्चाहं कथं ममायं वेषो युज्यते इति सपदि दीर्घालोचनविदूरो, निर्णीतकरणीयोपहृतोष्णीषकञ्चुक उन्मुक्तशिखो विपर्यासधृतोत्तरीयश्शोकाकुलानां मृतप्रियबान्धवानामाकल्पेन श्वशुरालयमगमत् । गृहाङ्गणं विशतोऽस्य महात्मनः प्रथमं श्वश्रूर्नयनसरणिमाससाद । सा तु तदा निशासमय न कोऽप्यायास्यतीत्यित्यनावृतबहिर्द्वाराभ्यञ्जनस्नानं तद्देशपद्धत्या रचयति । प्रायो मद्रपुरीप्रान्तनिवासिन्यस्सीमन्तिन्यो विवस्त्रा एवाभिषुण्वते । तथाविधामप्यद्यापि वार्धकाननुग्रहीतविग्रहां श्वश्रूमवलोक्य पुरो गत्वा साष्टाङ्गपातं प्रणनाम पुण्डरीकः यथोपदिशति शास्त्रं 'दृष्टमात्रं नमस्कुर्यात् श्वश्रूं श्वशुरमेव च,' इति । अयमप्यप्रमादमपालयच्च शास्त्राज्ञाम् । को नाम धीमान्समायाते शास्त्रनिदेशपालनावसरे कालं स्थलं विचारयन्नातिष्ठेत? अस्तु । जामातुमर्यादातिगं कर्मैतदवलोक्य नितरामकुप्यत् तस्मै श्वश्रूदेवी । अथापि पदे पदे लेखनार्हां कृतिं जामातृवरस्य पश्यन्त्यास्तस्याश्चेतसि क्रोधो न चिरमवसत् । एवं पुण्डरीको माधवीं (श्वश्रूनाम) नमस्कृत्य गेहचत्वरे राशीकृत्यावस्थापितां तृणराजिमधिरुह्य न्यषीदत् । मुहुर्मुहुश्शुश्रावाक्षरमुखानां मुखतः किलायं श्लोकं 'उच्चैस्स्थानेषु पूज्यन्त,' इति । अत एवात्युच्चतमं सन्मानमवाप्तुं स्थानमेनं साधु मेने महाभागो मतिमाञ्जामातृदेवः ॥

अस्य हि पुण्डरीकस्य श्यालकास्त्रय आसन् ते तु कालेऽस्मिन्न्यायमन्दिरे परिसमाप्य कर्तव्यं कर्म, विहृत्य च पाश्चात्यक्रीडनकैरागारमाययुः । माधवी तूच्चस्थानाऽवस्थितं जामातरं तेभ्यः

प्रादर्शयत् । 'नमो नमः ! नमो नमः ! भोः कदाऽऽगमनम् ? अपि नाम कुशलं सर्वेषाम् ? आगम्यताम्, अलंक्रियतामिदमासनम्, कुतस्तत्रोपाविशथ ? इत्यवदन्पुण्डरीकं ते । आसीदर्हन्तीसमुचिता मर्यादा ममेति जानानो जामाता तृणालित अवतीर्य दूर एव म्लानमुखोऽतिष्ठत् । किं दूरे एव स्थीयते श्रीमद्भिः ? मण्डयन्त्वासनमेतदित्यभाषन्त ते प्रिया भ्रातरः । सांप्रतमशौचसन्निपातो वर्तते मे इति सदुःखनिश्वासं मन्दं मन्दं सकष्टं चाचष्ट महाशयः । श्रुत्वा तु गिरमस्य सचकितं समुत्थाय पुनः पुनर्विधीयमानो दुःखनियोगो दुःखिनां महते शोकाय भवतीति तमविचार्य ते मातरमपृच्छन् । प्राकृतलोचना सापि कथं जानातु । पृष्टा सा नाहमेतत्किंचिदपि वेद्मि । परमद्य जामातुर्मस्तिष्कं न स्थाने विद्यत एतन्नितान्तमवैमीत्यकथयत् । पुनस्समागत्य जामातरमाशौचनिमित्तं विचारयामासुस्ते । पुण्डरीकोऽपि पथि प्रवृत्तं वृत्तान्तमत्यक्तलेशं जगाद । तदुपश्रुत्य महता प्रयासेनान्तर्नियमिताट्टहासाः पण्डितपरीक्षायामुत्तीर्णं प्रथमागतं तं नास्त्यशौचापाते संसर्गः कोऽपि श्रीमतां रासभेन सममित्यादिभिर्बोधप्रदैर्वचनैरबोधयन् । यदभूत्संसर्गोऽस्माकं खरेण स संयोग एवेत्युच्चैर्भाषमाणमुपदेशेऽदत्तश्रवणं दूरावस्थितं जामातरं हस्ते गृहीत्वा समयोपवेशयामासुश्श्यालाः ॥

ततः प्रावर्तन्त जामातृग्रहकृते मिष्टान्नभोजनालापा श्वश्रूप्रभृतिप्रमदावर्गस्य । शालकाश्चामी विनोदेन कालकलां निनीषवः क्रीडामृगं भगिनीपतिमभ्यव्यवहार्येषु किमीप्सितं तत्रभवतां भवतामित्यपृच्छन् । सोऽपि नाभिलषितमिह किंचिद्विद्यते । अथापि ये नाम भोज्यास्ते समेऽप्येरण्डतैलसंकलिता एवोत्कृष्टतां भजन्त इति

मतिरस्माकं यथाह श्रीमान्भिषगाचार्यो धन्वन्तरिः 'एरण्डतैलं वातघ्नम्', इत्युत्तरयति स्म तान् । अत्रान्तरे पर्यवसितः पाकस्सन्नद्धतां स्नानायेति कोप्यागत्यासूचयत् । शालका अप्यलिंदभूमौ स्नानासनं सुरभितैलमुष्णोदकपूर्णं पात्रं च प्रस्थापितमवलोक्य मङ्गलस्नानाय व्यजिज्ञपन्सहजाधवम् । स हि सुदैवात्सूर्यचन्द्रबलाबलमविचिन्त्यैव समुत्थाय किंकरीकरकलिततैलमर्दनसुखमनुभूय च स्नानपीठमलमकार्षीत् ॥

एवं खलु शास्त्रं रोरवीति 'प्रवाहाभिमुखं स्नानम्', इति कथमत्र भवेदिति क्षणमामुकलीकृतेक्षणः परिचिन्तयन्न चिरेण समुद्भूतप्रतिभो जामातृमहात्मा जलपूरितं पात्रमधोमुखं प्राक्षिपद्वसुधायाम् । ततो भाजनगतं सर्वं जलं निम्नप्रदेशाभिमुखं प्रवहति । तत्र च दण्डपातं निपत्य शास्त्रविहितं स्नानं निरवर्तयत्पुण्डरीकः । नवनवां पण्डितबालिशस्य चित्रतरां कृतिमवलोकयन्तस्समुद्भूतविस्मया अपि किञ्चिदधिगततत्स्वभावाः किमप्यवदन्तस्ते बन्धवोऽन्यजलमानाय्य पंकांकितकलेवरं भगिनीकान्तम् स्नपयामासुः ॥

एवमेव यथाकथंचिदभ्यव्यवहारविधिरप्यपूर्यत तैः । तदनु दुर्गतदुर्लभै राज्ञा रविवर्मणा विलिखितैर्मनोहरैः शृङ्गाररसदीपकैस्तैस्तैश्चित्रैरलंकृतमन्यैश्च घ्राणतर्पकैर्वस्तुभिस्समुद्भासितम्, रसिकनरहृदयावर्जनचतुरैः पुरुषप्रमाणैर्दर्पणैर्भासुरं केलीगृहं सुखस्वापाय दर्शयामासुः पुण्डरीकाय ते । सोपि प्रविश्य शयनागारमरसिककुलचक्रवर्तिचूडामणिर्विहायसं वीक्षमाणः किमपि चिन्तयन्नशेत । क्षणेन लावण्यावरीणमाररमणी, तरुणिमनि निहितवामेतरचरणाऽनतिमुक्तकौमारा, तस्य पाणिगृहीती क्रीडामन्दिरमागत्य

निबध्य चार्गलेन कपाटं कर्णाभ्यर्णविनोदिकंकणरवेण पाणिना मुहुर्मुहुस्स्रस्तांशुकेनाऽऽवृण्वती दक्षिणं स्तनम्, वेपथुभरोद्गतस्वेदोदबिंदुभूषितवदननलिना शनैश्शनैरुपेत्य पत्युरन्तिकमवनतमुखी तस्थौ । सोपि रहस्सल्लापाय समागतां तां मन्वानः पर्यंकादुत्थाय, जायां परिगृह्य पाणौ कुशलप्रश्नेन संभाव्य च समं तया शयनमारुरोह ॥

आरुहन्त्यां तस्यां दुर्दैवतया पत्न्या, अलंघ्यतया च भवितव्यतायास्सुन्दरवस्तुस्थित्यसहतया कालहतकस्य, सत्यतया च विधिविलिखितदुर्लिपेस्तादृशरमणीमणिसमागमसुखाभाजनतया च दग्धहृदयस्य तस्य, विचित्रतया च विरिञ्चिसृष्टेर्दुरत्ययतय च क्रूरकालस्य, क्षणैकचित्रतया च जगच्चक्रस्य, 'भार्या रूपवती शत्रुः', इति दारुणं पद्यैकदेशं हृदयमदयं प्रविशतस्य । तत आशु गृहिण्या नताननलिनमुन्नमय्य विस्फार्य च चक्षुषी विगलितपक्ष्मपातं चिरमैक्षत । निश्चुनुते स्म रूपवतीति पत्नीमविवेकिजनमूर्धन्यः पुण्डरीकः । स्मृतिपथोपयातस्मृतिवचन इयं नारी मेऽरीयति यदि न नाशयिष्यामि सौन्दर्यमस्या इति विचिन्त्य हृदयावधारितविधेयो निकटेऽविच्छेदज्वालं प्रज्वलन्तीं दीपवर्तिकां तदा तदा पुरस्कर्तुं दग्धां च छेत्तुं विन्यस्ताम्, लोहशलाकामंगुलिपरिमितामुपादायोरुभ्यां भार्यां विगृह्य वामपाणिना वेपमानाया मुखचन्द्रमसं दृढतरं गृहीत्वा, किमप्यजानन्त्या भावयन्त्या कमपि क्रीडाप्रकारम्, निमीलितलोचनायास्तस्या दक्षिणाक्षिण दक्षिणकरेणायोमयशलाकामनुकम्पागन्धविधुरो यावद्धलं प्रावेशयन्मतिमाञ्जामाता । दुःखवेदनामसहमानां हा! मातः, हा! पितः

हा! भ्रातः, हा! हतास्मि परित्रायध्वं परित्रायध्वमविलम्बने नूनं हनिष्यति मामयमिति व्याहरन्तीमुन्मुक्तार्तनादं प्ररुदन्तीमविरलपतद्रुधिरधारासिक्तगात्रां कामिनीमापादमस्तकं विस्मृतनिमेषाभ्यां चक्षुर्भ्यां प्रेक्ष्य अयि प्रेयसि, गृहाधिदेवते, आर्ये, जाये, नेदानीं त्वं रूपवती नातःपरमाक्रमसे शत्रुपदं मे हन्ताऽधुना मम प्रियतमा सखी, पतिपरायणा पाणिगृहीती, चासीति सप्रमोदं सान्त्वयति प्रियाम् । इतश्च जामातृविलसितं शंसं शंसं स्मारं स्मारं निपत्योदरस्य परिहसंतः कथमेवंविधाय वैधेयाग्रेसरायास्मजामदा इति निन्दतश्च जननीमवस्थितास्ते सहोदरा भगिन्या दैन्याक्रन्दितमुपश्रुत्य द्राक् क्रीडागृहद्वारमधावन् । आह्वयंश्चोच्चैस्सद्वारघातं जामातरं द्वारोद्घाटनाय । अथापि तत्रादत्तकर्णोऽनुपसंहृतकर्तव्यः पुण्डरीकः प्रमोददायिदारवदनांबुजमवलोकयति यावत् दृग्गोचरीबभूव तावदस्य तस्या अवशिष्टमन्यन्नयनम् । समीक्ष्य तत् 'एकाक्षी कुलनाशिनी', इति ज्यौतिषं सूत्रं मृत्युमिव कमत्रस्य स्मृतवान् । झटिति प्रथमाक्षिदशामेव व्यतरद्द्वीतीयनयनायापि । अनवरतं रुदतीं हा! अम्ब, हा! तातेति प्रलपन्तीं सहजामाकर्ण्य पुनः पुण्डरीकं मातापित्रादिशपथपूर्वमुच्चैराह्वयन्तस्ताडयन्तश्च मुष्टिना कपाटं द्वारमोचनाय महान्तं कोलाहलमकार्षुः । तथाप्यविन्यस्तश्रुतिमनुद्घाटितद्वारतमवेक्ष्य तेपरशुना कपाटं पाटयित्वा, मन्दिराभ्यन्तरमागत्य पृथिव्यां पतितां गतचेतनाम्, शोणशोणितधाराभिषक्तसकलावयवाम्, श्वासानुमेयप्राणामयथावस्थितदुकूलाम्, प्रनष्टनयनामन्तकस्याप्यनुकम्पाभाजनं, कपिकरकलितमणीमिव भग्नां भगिनीं ददर्शुः ॥

( क्रमशः । )

अपि च—

प...धर्ममहो विदार्य जनकादासादितं सावधू-
रत्नं कश्चन कालमेव सहितेत्यालोच्य किं राघवः ।
मायः सोऽहमिहावतीर्य कुतुकी भूमौ यदीयाकृति-
र्धर्मे शैवमये कुलागतमवन् कीर्तिं बिभर्ति ध्रुवाम् ॥

रतिनाथनिभः सोऽयं रघुनाथजनाधिपः ।
अवनेरपरः साक्षादवने द्विभुजो हरिः ॥

राजा— [लज्जावनम्रितमुखो हारतरलं परामृशति]

प्रति— तदेतादृशस्य महाभागस्य समीपे मयापि जोषंभाव एव संभावनीयः । यतः

लघुना वचनायुक्त्या रघुनाथमहीपतेः ।
अशेषसद्गुणान् वक्तुमशेषं नावनावहम् ॥

अयि सरले! तदिह भवत्याः का कथा व्यवहारस्य । भवतु तथापि वत्सायास्तस्या नियोगमशून्यं विधास्यामि ।

योग— जं अहिरुइदं भयवदीए ।

प्रति—

जाने तं भूमिजाने तव पितरमहं प्रत्यहं यत्करोद्य-
न्नानादानांबुधाराततिभिरतितरामंबुधिर्जृंभमाणः ।
आलिङ्गन् भङ्गसङ्गैः सकलमनुकलं द्वीपमंभोदुरापं
संवर्तारम्भनृत्तार्भटिपटिमविधां नैकथा स्मारयन्माम् ॥

राजा— [स्वगतम्] एषा. पुनरन्यवर्णनव्याजेन कल्पान्तोप्यालोकित इति सूचयति [प्रकाशम्] ततस्ततः ।

प्रति—

चिनचेत्त्वयाच्युतधरासितद्युतिः
सहितो बलेन स विलंघ्य सागरम् ।
विमतैः पुरा विजयकेतुमावृतं
दययैव तत्क्षणमरक्षदक्षतम् ॥

स विजयकेतुरच्युतभूतलवलद्विषमुपेत्य तदा हर्षुलचित्तवृत्तिः प्रत्यज्ञास्त कृतज्ञावतंसः । तनूभुवं तव वसुधासुधारुचेरयेण संप्रति रघुनाथभूभुजे । ददामि माधववरदानसंभवां सुतामिमां निर्जितसुराङ्गनामिव इति । अधुना तु विधिना तुभ्यमकाण्ड एव रत्नकरण्डकमुपहरता रत्नाकरमयत्नादेव समुत्तार्य तत्तादृशं सुदृशं दर्शयता तत्तातस्य विजयकेतोरानुकूल्यमाचरितम् । ततः प्रभृति—

हृदि हिमजलैस्तन्व्याः सिक्ते हिताय सखीजनैः
न वहसि वसन् रत्याः पत्युर्नरेन्द्रशरज्वरम् ।
किमिदमुचितं दीनत्राणेन कीर्तिधरस्य ते
निबिडविपदस्तस्याश्चित्ते निगूहनकौशलम् ॥

हा हन्त हर्म्यशिखरे हरिणेक्षणा सा
नीहारहारधवला नितरां कृशाङ्गी ।
इन्धे गवाक्षगतिरेककलावशिष्टा
चान्द्रीव मूर्तिरधुना चलितुं न शक्ता ॥

अतिपाण्डुतामवयवा वधूमणे-
तदहं तथापि बत हस्तयोर्द्वयी ।

न जहाति पाटलरुचिं न चाहृतैः
बिसकङ्कणैरिव भृशं नियन्त्रिता ॥

तस्या विलासतलिमप्रसवैः सदृश्यो
लग्ना मृदा वपुषि हन्त लसन्ति रेखाः ।
त्वद्रूपधेयविभवस्तवमत्सरेण
पुष्पेषुणेव कृतभूरिशरक्षतानि ॥

पुरा नीत्वा कार्श्यं पुनरनुशयात्पूरयतु तव
प्रसूनास्त्रेणैषा बत समुचितैः कारणगणैः ।
प्रवालैरंभोजैः प्रसवविसरैर्मौक्तिकसरै-
र्मृणालै रंभाणां मृदुभिरपि काण्डैरुपगतैः ॥

[ दीर्घमुष्णं च निश्वस्य अश्रूणि मुञ्चति सगद्गदम् आकाशे लक्ष्यं बध्वा ]
हा वत्से चन्द्रकले प्रतिभावतीबहिश्चरणप्राणायिते पञ्चशरसञ्जी-विनि विजयकेतुकुलपताके कथमेतादृशीमतिदीनदशामनुभवसि ।

योग— [ वल्कलाञ्चलेनाश्रुवृष्टिं परिमार्ष्टि ]

राजा— [ स्वगतम् ] अहो वत्सलता भगवत्याः ।

प्रति— [ सगद्गदम् ] किं बहुना

क्षामक्षामतनुर्व्यलोक्यत पुरा भीमामवस्थां गतां
तन्वाना निजमङ्गुलीयकमियं तन्वी महत्कङ्कणम् ।
शान्तं पापमितः करोति तादिदं सा किं च बाहाङ्गदं
तन्मत्वा रघुनाथभूप कृपया तस्याः प्रसीदाधुना ॥

योग— [ जनान्तिकम् ] भयवदि पडिहावदि एसोपाडिहादि आरो-विदधिरोविय जणेसरो ।

**प्रति**— वत्से सम्यगुपलक्षितं भवत्या । संप्रति हि—

प्रविष्टे वृत्तान्ते श्रवणसरणौ पद्ममित्रेक्षणायाः
स्फुरत्यङ्गे सद्यः पुलकपटली भूतलाखण्डलस्य ।
कदुष्णो निश्वासो मृदुरपगतान् घर्मबिन्दून् विधत्ते
तथाप्यस्य प्रायः स्थितिरियमहो धैर्यमेवाश्रितेव ॥

वत्स महाराज, मुक्त्वा द्वीपमध्यावस्थितमद्यैव विजयकेतुमासाद्यैनं वृत्तान्तमावेद्य च सद्य एव तस्मादिमं सिह्मलद्वीपमानयन्ती तदनुज्ञया मूर्तिमतीमिव कामकलां चन्द्रकलामुपायेन पुनरनुरूपाय तुभ्यमहमुपहरिष्यामि ।

**राजा**— (स्वगतम्) केनापि कपटोपायेन मणिपादुकादिकमिदमवाप्य मुक्ताद्वीपं गतवत्यां प्रतिभावत्यां गत्वा च स्वेच्छाचारेण सिह्मलद्वीपं पुनरपि तादृशं सुदृशमवलोकयामि । भवत्वेवं तावत् [प्रकाशम्] भगवति प्रतिभावति न जानासि कमितःकरणीयं मया किमत्र वक्तव्यमास्ते । कदापि किंचिदभिधास्ये । पुररिपुवरदानमहिम्नैवाकाशयानादिषु सिद्धेषु किमनेन केवलदेहभारसंपादकेन मणिपादुकादिवहनेन ।

**प्रति**— [स्वगतम् ।] सकलमपि मम महिमानमेष जानाति रघुनाथभूपः । [प्रकाशम्] पश्य तथैवास्तु । [इति पादुके भूमौ निधाय आकाशयानेन सशिष्या निष्क्रान्ता]

**राजा**— [ऊर्ध्वमवलोक्य साश्चर्यम्]

उद्यानोऽपि पयोमुचः शरदिजालुद्भ्रान्तमभ्रान्तरे
बन्धूकद्युतिबन्धुवेगविगलद्बद्धं जटामण्डलम् ।

अस्याः व्योमचरः शकुन्तनिवहो हा हन्त देहान्तरा-
द्वारं बारमुदीक्ष्य भैरवरवं हीरं दिशां गाहते ॥

( ततः प्रविशति विदूषकः )

**विदूषकः**— वयस्स मज्झणमारहिय एसोह दासोह उज्जाणपालओ माणवयो दुवारो मं णिरोहिअ दाणिं एव्वसज्झासमये एत्थ पवेसिदवन्तो । [ इति यथोचितमुपविशति ]

**राजा**— ( समन्तादवलोक्य । साश्चर्यम् ) निखिलदिगन्तरनिरन्तर-समसमयगिलदशेषविहगपारिषदविरतमुखरविरुतस्य खरकिरणवि-योगकृतमुद्रणपयोजीविद्रवदलिपटलबिलनिलयविकचकुवलयनिच-यकवचितसरसः सरसदिवसावसानस्यन्दमानमन्दमारुतहिन्दोलि-तमल्लिकावल्लिसन्दोहविरचितवनदेवनदेवताडोलाविहरणसाक्षिणो लीलावनस्य सखे पश्य स्पृहणीयं रामणीयकम् । संप्रति हि नगरेषु

हर्म्याणां चटुलान् गवाक्षविवरेष्वाधायचञ्चूपुटान्
पश्यन्ति स्ववधूभिरु....गणाः प्राचीं दिशं पङ्क्तिशः ।
नीत्वा भावि वियोगभातिविसरन्निश्वासकोष्णं विसं
श्लिष्यन्ति प्रमदाः शुचारथपदाशीघ्रं पतत्रैस्ततैः ॥

किं च—

पर्यावर्तितकन्धरं मुकुलिते पक्षे विधायाननं
स्वैरं पञ्जरमंजिकासु निभृतं छेकाः शुकाः शेरते ।
शय्यागारचतुष्किकासु वलते चन्द्राननाछोटना-
दुन्निद्रं च कपोतपोतककुलं हुङ्कारमंकूरयत् ॥

[ अङ्गुल्यग्रेणाग्रतो निर्दिशन् ] सखे ! पश्य पश्य । उदयमयते-रथचरणरथचयं हरणनिवारणचणकिरणप्रचारो विचारोन्मुखनि-खिलपथिककुलगर्भगृहप्रवेशनिदेशिकमौहूर्तिको विलासिजन-नयनसुधावर्तिकोपमाननिबिडालोकधवलितनिखिललोकालोकावका-शः पाकासुहृदाशारमणीधृतमणिकुण्डलरमणीयनिजमण्डलो भग-वानेष रजनीपरिणिः । [ ऊर्ध्वमवलोक्य सोद्वेगम् ] सखे विप्रयो-गिजनं मां बहुविधं ते बाधन्ते चन्द्रपादाः ।

**विदूषकः—** [ सोपहासम् ] एदे किन्ति मं ण बाहन्ति ! जं अहं विविप्पजोई होमि !

**राजा—** [ विहस्य ] अनुक्षणमधिकदाधिककलमान्नकबलभक्षणोद्वे-गी न कथं त्वमपूर्वो योगी । [ भूयोऽप्यूर्ध्वमवलोक्य सासूयम् ।] अरे दोषाकरविरहिजनविषादपरिणते कदाचिदपि ते हरेण शि-रसा चिरेण श्लाघित इति भूयानहङ्कारो न भूयात् । यदत्र नि-न्दनीयमस्ति निमित्तम् । तथा हि

सख्या त्वया वनभुवि स्वदमानचापं
सज्जं हितेतरकृते सन्निधे निगूढम् ।
कौटिल्यमेत्य स भवान् कथयन्पुरारे-
र्विश्वासपातकमहो व्यतनीत्तदानीम् ॥

अतनुं विधिनाप्यशासनीयं
भसितत्वं नयता भवेन सद्यः ।
परथा कथमस्य बालमित्रं
सुलभोऽपि त्वमाशिक्षितः सुधांशो ॥

निमज्जनोन्मज्जनकैतवेन निषेवसे यत्पयसा निदानम् ।
हालाहलादानधिया किमौर्वज्वालाशरा वा पथिकज्वराय ॥

सन्ध्यानर्तनसत्वरभ्रमिकृतोन्मर्दात्कपर्दान्तरात्
देवस्य स्मरदेहघस्मरमहाकीले निटालानिले ।
श्यामाधीश भवान् प्रमादवशतो यत्प्रच्युतो न स्वतः
तत्तादृग्विधदुर्विधेर्विरहिणां शङ्के फलं केवलम् ॥

[स्वगतम्] उपायेन देवीपक्षपातिनमेतं तञ्जापुरमेव प्रस्थापयामि । [प्रकाशम्] सखे सारङ्ग तञ्जापुरीमासाद्य सद्य एव देव्यै मामकीयामिमामावेदय मदनवेदनाम् । अहमपि निर्वर्त्य तीर्थयात्राशेषं तत्र सवेगमागमिष्यामि ।

**विदूषकः** — [स्वगतम्] अहो एसो पुणोवि मं पदारेदुं इच्छदि । जादरूवाणिबन्धणा मयणवेयणत्ति । एदिणा अहं पदारिदोविअ भावियज्झन्ति तञ्जापुरीं गमिऊणएदं अण्णणिबन्धयणं मयणवेयणे रण्णो जादरूवाए देवीए णिवेदइस्सम् । [प्रकाशम्] जं अहिरुइदं महारायस्स ।

**राजा**— अहमिदानीमविनीतरजनीरमणदुष्प्रवेशं गर्भगृहं प्रविशामि । त्वं च तञ्जापुरीं प्रतिक्षणमदागमनप्रतीक्षणसञ्जातादरकञ्जाननाविघटितसौधगवाक्षाररप्रपञ्चामञ्जसा पुनरासादय ।

[इत्युभावपि परिक्रम्य निष्क्रान्तौ]

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्निचित्य-
सर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षित-
वरनन्दनस्य श्रीयज्ञनारायणयज्वनः कृतिषु
रघुनाथविलासे द्वितीयोऽङ्कः ॥

# तृतीयोऽङ्कः ॥

[ ततः प्रविशति कञ्चुकी । ]

**कञ्चुकी**— [ दीर्घं निश्वस्य ]

शुद्धान्तादवनीविभोरवसरान् सोऽहं बहिः शंसितुं
यातायातशतेन हन्त पदयोरेतां क्षितिं तक्ष्णुवन् ।
स्वैराहारविहारबन्धुमिळनस्वप्नादिना वर्जितः
पश्याम्यत्र परानुवर्तनपरः पारं चिरादायुषः ॥ १ ॥

किं च—

यातायातं मम पुनरिदं याममात्रेण क्लृप्तं
शक्तं वेगादवधिमवनेश्चक्रवालं च नेतुम् ।
आर्तैनैकोऽप्यवति निखिलैः स्वाद्रियन्ते पराया:
कष्टो हन्त ! क्षितिपतिगृहे कञ्चुकित्वाधिकारः ॥ २ ॥

आदिष्टोऽस्मि यथेष्टसञ्चरणकारणमणिपादुकाभ्यां सिंहलद्वीपं प्रस्थितवता रघुनाथभूभृता । अद्य तावदिमं गर्भगृहप्रतिहारमासाद्य न कोऽपि भवता प्रवेश्यतामिति तदस्य नियोगमशून्यं विधास्यामि । [ इति निष्क्रान्तः ]

## [ शुद्धविष्कम्भः ]

[ ततः प्रविशति मणिपादुकाञ्चितपादो वेत्रहस्तो राजा । ]

**राजा**— [ समन्तादवलोक्य ]

(पुनरपि वाचयन् ।) अनन्तरं 'सर्वेऽपि कविशिखामणयो दारिद्र्यमागताः स्मर्तव्यां गतिमीयुः । गैर्वाण्यपि क्षीणदशामापन्ना इत्यादि सरस्वतीरोदनं नाम नाटकमभिनेतव्यम् ।' आह्लादप्रतिबन्धीदं न युज्यते मङ्गलमहोत्सवसमाजस्य ।

(पुनरपि वाचयन् ।) अथ 'दुःखाकरमप्याह्लादकारि दीर्घमप्यनायतं भानुमत्यश्मकेन्द्रयोः प्रणयमाविष्कुर्वत् प्रकरणमपूर्वं प्रयोक्तुमवनिपस्य पुरत इमे सज्जाः ।

**कथं वाऽस्मिन् प्रकरणे सङ्करः शोकहर्षयोः ।**
**परस्परविरुद्धं तत् कथं वा सरसं भवेत् ॥ ७ ॥**

**प्रमोदः**— महाराज, मया दृष्टचरमेतत् प्रकरणम् । तस्मिन् अस्मकेन्द्र इति कश्चिदवनिपो भानुमतीमनुरक्तोऽवसाने प्रणयाधिक्यादात्मानं व्यापादितवान् । सत्यमेव तदा शोकमसहमानेनाश्रुपूर्णवदनेन मया स्थितम् । तथाऽपि तादृशानन्दबाष्पपूरो न कस्मिन्नपि प्रकरणान्तरे जायते ।

**राजा**— क इमे नर्तकाः ।

**प्रमोदः**— अस्मन्नगरस्थाः स्थूलबुद्धयस्तन्तुवायप्रभृतयः । राजानमाह्लादयितुं प्रथमारम्भोऽयमेतेषाम् ।

**राजा**— अवश्यं द्रक्ष्यामः प्रकरणमेतत् ।

**प्रमोदः**— महाराज, न कदाऽपि देवदर्शनयोग्यमेतत् । सभासदो नन्दयितुमेषां मन्दमतीनामुद्योगाभिनिवेशमन्तरा न किमपि विद्यतेऽस्मिन् नाटके ।

**राजा**— प्रणयारब्धं न किञ्चिदपि परित्याज्यम् । तत् सर्वथा

द्रक्ष्याम्येव । प्रवेशय तान् । भामिन्यः, स्थीयतां स्वे स्वे आसने ।

**प्रमोदः**— इदं क्रियते ।

(इति निष्क्रान्तः)

**कनकलेखा**— नोत्सहे द्रष्टुमेतत् करुणं प्रकरणम् ।

**राजा**— कान्ते कनकलेखे, सर्वत्रापि प्रकरणं न शोकभूयिष्ठम् ।

**कनकलेखा**— आनन्दनं न किञ्चिदप्यस्मिन्निति श्रुतमार्यपुत्रेणैव ।

**राजा**—

**दीनानुकम्पनं नाम व्रतं राज्ञो वरं प्रिये ।**
**प्रभुधर्मश्च भृत्यानां प्रसादश्शाश्वतो मतः ॥ ८ ॥**

अपरञ्च । सरसं विरसं वा भवतु प्रकरणम् । निपुणा वा न वेमे नटाः । प्रथमप्रवेश एवायमेतेषामस्मदाराधनोद्यतानाम् । तत् सर्वथा न परित्याज्या इमे भृत्याः । अपि च शृङ्गारैकरसमित्येवोक्तमेतत् । (प्रविश्य ।)

**प्रमोदः**—(अञ्जलिं बध्वा ।) अमी सज्जा निदेशं प्रतीक्षन्ते नटाः । कृतानि च नैपथ्यविधानानि ।

**राजा**— (नेपथ्याभिमुखमवलोक्य ।) प्रस्तूयतां भोः ।

(प्रविश्य सूत्रधारः ।)

**सूत्रधारः**—

**सभासदाराधनमानसा वयं**
**नवप्रयोगा न च तीक्ष्णबुद्धयः ।**

तथाऽपि हर्षेण नृपस्य सन्निधौ
प्रमादमाकाङ्क्ष्य समागता वयम् ॥ ९ ॥

(नाट्यन्ते प्रविशन्ति भानुमत्यश्मकेन्द्रो भित्तिश्चन्द्रिका केसरी च ।)

**सूत्रधारः**-- आर्यमिश्राः, किं पात्रदर्शनेन विस्मिता यूयम् । अस्तु तावद्विस्मयो यावद्वस्तुस्थितेरुपरि प्रकाशनम् । अयमेवाश्मकेन्द्रः । इयमेव रमणीया भानुमती । यस्या रन्ध्रेण नायकौ जल्पतस्सैवेयं भित्तिः । कण्टकावृततनुर्दीपाङ्कितपाणिस्सारमेयानुगम्यमानः पुरुषो ज्योत्स्नेत्यवधार्यताम् । यतो भानुमत्यश्मकेन्द्रौ चन्द्रिकायामेवान्योन्यं दृष्ट्वा विपिनान्तर्गतदेवदारुमेव सङ्केतीकृत्य गतौ । सङ्केतानुसारेण भानुमती पादपमेत्य कान्तमपश्यन्त्यविज्ञायावनौ स्खलितमुत्तरीयमप्यन्वियेष वल्लभम् । तदा द्विरदस्य कस्यचिद्रक्तं पीत्वा धावन् पथि तत्संव्यानमालोच्य तदसृग्रञ्जितमकरोदयं केसरी । यदा चाश्मकेन्द्रः संकेतमहीरुहमुपेत्य प्रेयसीमपश्यन् पञ्चास्यपदविन्यासान् रक्तरञ्जितं प्राणप्रियाया दुकूलञ्च साक्षात्कुर्वन् सर्वथा कवलितेयमनाथा मामेव प्रलपन्ती कालेन सिंहरूपिणेति विलपन् प्रेमविदीर्णहृदयः सद्य एवासिनाऽऽत्मानं निहत्य पञ्चतामयासीत् । तत्सर्वमपि रूपकेऽस्मिन् व्यक्तीभविष्यति ।

[इति भित्तिवर्जमन्ये निष्क्रान्ताः ।

[सर्वे सामाजिकाः स्मयन्ते ।)

(ततः प्रविशत्यश्मकेन्द्रः ।)

**राजा**-- भित्तिसविधमुपसर्पत्ययं तरुणः ।

**अश्मकेन्द्रः**--

तमः समीकृता भान्ति निम्नोन्नतभुवोऽप्यमी ।
चक्षुरन्धीकृतं सद्यः सर्वतो भीषणा निशा ॥ १० ॥

अहो रमणीयभित्ते, भानुमतीपितुर्निकेतनस्य मामकीनस्य च मध्यस्थाऽसि । अपि जानीषे कुत्रास्ते मिलासिनीति । बिभेमि च तरुण्या विप्रलब्ध इति । रे कुड्य, दर्शय ते रन्ध्रम् ।

[ भित्तिर्हस्तं प्रसारयति । ]

नमस्ते कुड्य, ( विवरे चक्षुः पातयन् । ) न दृश्यते भानुमती । हा हन्त हन्त ! वञ्चितोऽस्मि । तथा हि ।

किं पित्रा ननु शिक्षिता किमथवा साङ्केतिकं विस्मृतं
किं सुप्ता किमु मूर्च्छिता किमु गता किन्नागता लज्जया ।
मद्दौर्भाग्यवशाद्विभिन्नहृदया किं वाऽथवा रोषिता
निद्रा नैति निशा न याति तरुणी नायाति का यातना ॥

( रोषावेगं नाटयन् । ) रे रे कुड्यहतक, शपामि त्वां यत् त्वयैवाहं विप्रलब्धः ।

**राजा**-- ( सहासम् । ) सजीवेयं भित्तिः । कथं प्रतिशापं न ददाति ।

**अश्मकेन्द्रः**-- महाराज, नाटकं खल्विदम् । तत्त्वतो न शप्तमिदं कुड्यम् । भानुमत्या मे विप्रलम्भश्च न सत्यः । साप्ययैवागमिष्यति । रन्ध्रेणैवानेन द्रक्ष्यामि वसुपालितमथवा भानुमतीम् ।

**सर्वे**-- ( उच्चैर्हसन्ति । )

( ततः प्रविशति भानुमती । )

**भानुमती--**

**राकारम्यशशाङ्कसन्निभमुखं सञ्चिन्त्य दूये मुहू-**
**रे रे कुड्य, कुतोऽस्ति मे प्रियसखो नाम्नाऽश्मकेन्द्रो ह्ययम् ।**

**अश्मकेन्द्रः**— ( आकर्ण्य )

**नादः कर्णमुपैति भित्तिविवरात्तत्किं प्रियाभाषितं**
[ इति रन्ध्रमुपसृत्य ]
**कान्ते भानुमति प्रिये, तव रतिर्नास्तीति शङ्केऽधुना ॥**

**भानुमती**— मत्प्रणयैकनिधे, कथमेवमभिधीयते ।

**अश्मकेन्द्रः**— देहि मे चुम्बनं विवरमार्गेण ।

**भानुमती**-- भित्तिमेव चुम्बामि न तेऽधरमणिम् ।

**अश्मकेन्द्रः**-- यदि ते सत्यमेव मयि प्रणयस्तद्धारामे देवदारुपादपस्य मूले त्वामेव प्रतीक्षमाणेन मया सङ्गच्छस्व ।

**भानुमती**-- प्राणानुत्सृज्याप्यविलम्बं सङ्केतमहीरुहस्याधस्ताद्दयितं प्रतिपालयामि ।

(इत्युभौ निष्क्रान्तौ ।)

**भित्तिः**-- कृतं कर्तव्यं मया कुड्यरूपिणा । सम्प्रत्यपसरामि ।

(इति निष्क्रान्ता ।)

**राजा**— (सस्मितम् ।)

प्रातिवेश्यनिकेतनमध्ययवनिकायमाना भित्तिरनश्यत् ।

**मकरन्दः**— तिष्ठता च सजीवेन परवार्ताश्रवणकुतूहलेन कुड्येन किं वा प्रयोजनम् ।

**कनकलेखा**— चित्रमेतत्संविधानम् ।

**राजा**— उत्कर्षापकर्षौ भावाश्रयावेव ।

**कनकलेखा**— क्व भावानुभावौ । क्व चेमे नटाः । भावस्त्वार्यपुत्रस्यैव ।

**राजा**— सत्यं मन एव कारणम् । यदि मन्यामहे निपुणानेतान् तदा समर्था एव ते । अस्तु नामेदम् । दृश्यताम् । उदारमृगौ द्वौ प्रविशतो नरकेसरिणौ ।

(ततः प्रविशति केसरी, चन्द्रिका च ।)

**केसरी**— अहो भामिन्यो मूषकदर्शनेऽप्यतिकातराः, मा भैष्ट सिंहनैपथ्यधारिणं मां दृष्ट्वा । गर्जति मयि न पलायध्वम् । तत्त्वतो युष्माकमहं दासो धनकः । न मामसूत सिंही ।

**राजा**— [सस्मितम् ।] साधु साधु । आत्मज्ञानवानयं हरिः ।

**मकरन्दः**— महीपते, दृष्टपूर्वेषु वरिष्ठोऽयं मृगेन्द्रः ।

**वसन्तः**— ननु प्रतापे सृगालोऽयम् ।

**राजा**— सत्यम् । मेधया ताम्रचूडोऽयम् । भवतु ज्योत्स्नां शृणुमः ।

**ज्योत्स्ना**— आदर्शमयमिदं दीपभाजनं सविषाणेन्दुबिम्बमिति जानन्तु ।

**मकरन्दः**— शिरसा खल्वनेन धर्तव्यानि विषाणानि ।

**राजा**— मण्डले किलान्तर्हितानि तानि ।

**ज्योत्स्ना**— सविषाणशशाङ्कमण्डलायमानमेतन्मुकुरदीपभाजनम् ।

अहं तु मण्डलमध्यस्थनराकारकलङ्कायमानो वर्ते ।

**राजा**— हन्त, असम्बद्धमेतत् । आदर्शपेटकमध्ये किलानेन विबुधेन स्थातव्यम् । अन्यथा कथमेष तुहिनकिरणलाञ्छनं भवेत् ।

**ज्योत्स्ना**— [स्वगतम्] निसर्गपट्वी खलु महाराजस्य मतिः । तथैव कुर्याम् ।

(इति दीपभाजनमुद्धाट्य मुखं प्रवेशयति ।)

**सर्वे**— [सहस्ततालं हसन्ति ।]

**मकरन्दः**— (सोच्चैर्हासम् ।) अयं दीपशिखार्धदग्धनासिको रुदन् कथं कथञ्चित्प्रवेशितं वदनं बहिराकर्षति ।

**कनकलेखा**— खिन्नाऽस्मि ज्योत्स्नापात्रदर्शनेन । किं वा नापसरेदयं यवनिकान्तरम् ।

**राजा**— इदमप्यस्माकं विनोदनस्थानमेव । तिष्ठत्वयम् । पश्य प्रविशन्तीं भानुमतीम् ।

[ प्रविश्य ]

**भानुमती**— [ परिक्रम्य समन्तादवलोक्य । ]

अयमेव स देवदारुः । कथमद्यापि नागतः प्राणवल्लभः ।

**सिंहः**— हा ! हा ! ( इति भीषणं गर्जति । )

[ भानुमती भीता धावति ]

**मकरन्दः**— सम्यगगर्जत् केसरी ।

**राजा**— साधु भानुमति, द्रुततरं पलायस्व ।

**भानुमती**-- दिष्ट्या व्यक्तं भान्ति शीतकिरणगभस्तयः ।

[ इति निष्क्रान्ता । ]

**सिंहः**— ( स्खलितं तस्याः संव्यानं दृष्ट्वा निष्क्रान्तः । )

**राजा**— ( सस्मितम् । ) मूषकोऽभवत्सिंहः ।

**मकरन्दः**— ततः प्रविशत्यश्मकेन्द्रः ।

( प्रविश्य )

**अश्मकेन्द्रः**—

सर्वतो भासमानोऽयमोषधीशो विराजते ।
नमोऽस्तु भवते चन्द्र, प्रियान्वेषणसाधक ॥ १३ ॥

वनं सर्वमिदं व्यक्तं पाण्डरैः शशिरश्मिभिः ।
पञ्चेषुरतिधूर्तोऽयमुन्मोहयति मानसम् ॥ १४ ॥

( इति कतिचित्पदानि गत्वा । भूमौ दत्तदृष्टिः । )

कथमेतत् वल्लभादुकूलं रक्तमसृणं दृश्यते । कथं पञ्चास्यपदान्यपि । हा हतोऽस्मि मन्दभाग्यः । हन्त विधे, सम्प्रति सकामो भव । ( सास्रम् । )

त्यक्त्वा गृहं प्रियसमागमलालसैषा
कान्तारमेत्य हरिणा कबलीकृतासीत् ।
सञ्जीवनौषधिरियं त्रिदिवं गता चेत्
किन्नाम दग्धहृदयेन मयेह लब्धम् ॥ १५ ॥

**राजा**-- अतिकरुणमेतत् प्रकरणम् ।

**कनकलेखा**— अवस्थामस्य दृष्ट्वा द्रवति मे हृदयम् ।

---

आस्तिकाग्रेसरः दरभङ्गदेशाधिपः प्राचीनवर्णाश्रमधर्मरक्षणे बद्धश्रद्धः सह परिवारेण प्रस्थाय दक्षिणदेशे रामेश्वरादिदिव्यदेशयात्रां परिसमाप्य दर्शनार्थमागतानां विदुषां पाण्डित्यमनुमोदमानः शान्तात्मा स्वदेशं प्रतिनिवृत्तः हिन्दुविद्यार्थिनां उपकाराय कांचन विश्वविद्याशालां वाराणस्यां सहान्यैरभिज्ञशिखामणिभिः राजभिः प्रतिष्ठापयामास ।

वाराणसीविश्वविद्याशालायां हिन्दुमतग्रन्थाः शिक्षणीयाः सर्वेषां विद्यार्थिनामिति कश्चन नियमः अङ्गीकृतः इति श्रूयते ।

हिन्दुमतस्था हि भिन्नभिन्नं सिद्धान्तमनुसरन्ति तेषामैकमत्येन मतविषयग्रन्थानुशिक्षणं न सर्वथा सुशकं मन्यन्ते भारतवर्षीयमततत्वविदः ।

---

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.
2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.
3. The last form of every issue is devoted to publishing rare and useful works.
4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.
5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, 1/3 Ormes Road, Kilpauk, Post, Madras (W).
6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ८. ] राक्षसवर्ष फाल्गुनमासः । [ संचि. १२.

## सुभाषितानि ॥



लङ्कापतेः संकुचितं यशो यत्
यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवादिकवेः प्रभावो
न कोपनीयाः कवयः क्षितीन्द्रैः ॥ १ ॥

कुण्ठत्वमायाति गुणः कवीनां
साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमङ्गनानां
केशेषु कृष्णागरुधूपवासः ॥ २ ॥

स्वप्रज्ञया कुञ्चिकयेव कश्चित्
सारस्वतं वक्रिमभङ्गिभाजम् ।
कवीश्वरः कोऽपि पदार्थकोश-
मुद्घाट्य विश्वाभरणं करोति ॥ ३ ॥

॥ श्रीः ॥

# ॥ कुमारसंभवविमर्शः ॥

( पूर्वतोऽनुवृत्तम् । )

---

मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां
क्रीडारसान्निर्विशतीव बाल्यम् ॥ २९ ॥

देव्या नित्ययौवनया भवान्या अनास्वादितबालक्रीडारसया शैशवं साम्प्रतमङ्गीकृतम् ; मुहुर्मुहुस्तदनुगुणः क्रीडारसश्चानुभूतः इति वर्णयन्महाकविः बालक्रीडासमासक्तं नन्दनन्दनमनुस्मारयति । सूचयति च मन्दाकिनी पार्वत्याः पूर्वजा सोदरी समभूदिति । अत्रेदं रहस्यम्— इह निर्दिष्टा भवान्या मूर्तिर्महाकविनानवरतमनुध्यानविषयीकृता साक्षात्कृता चेति कविहृदयविदो विश्वसन्ति । पद्यस्यास्यार्थमेकाग्रेण मनसानुचिन्तयतामस्माकमपि स्मेरानना काचन दिव्या बालिका वाग्विषयातीतेन सौन्दर्येण समुपेता प्रसादोन्मुखी दर्शनपथमवतरति ।

तां हंसमालाः शरदीव गङ्गां
महौषधिं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥

प्रथमे वयसि विराजमानां तां गुरुभिरुपदिष्टा विद्याः स्वयमेवाध्यगच्छन्निति वर्णयन्कालिदासः प्रथमं ताः शरदि गङ्गामुपगच्छ

न्तीभिः हंसमालाभिरुपमयन्, तासां गङ्गायाश्च संबन्धः कादाचित्कः इत्याकलय्य, दिवसेष्वनभिव्यक्तप्रसराभिर्महौषधीनां कान्तिभिः सदृशयन् केनचिदुपाधिना तिरोहितस्वरूपाः विद्याः तदपगमे स्वयमेव निरर्गलं प्रकाशन्ते इत्युपदिशन्, विद्यास्वरूपेयं गौरी तदधिगमार्थं न कमपि परिश्रममपेक्षते इति बोधयन् तस्याः प्रसादेनात्मनाप्यनायासेनैव सर्वा विद्याः समधिगताः इति सूचयतीव ॥

यथा प्राणिनां मूर्च्छावस्थायां चैतन्यस्य तिरोधानं तदपगमे च पुनराविष्करणम्, यथा च दिवसे ज्योतिर्लतानां ज्योतिषां तिरोधानं दिवसापगमे पुनः प्रज्वलनम्— तथैव गौर्याः शैशवे विद्यानां तिरोधानं तदपगमे च प्रकाशनं समभूदित्युद्गृणन्महाकविः 'स्थिरोपदेशां प्राक्तनजन्मविद्याः' इत्यादिना 'भावस्थिराणि जननान्तरसौहृदानि' इत्यन्यत्रोक्तमाशयं स्मरणपथमुपनयति ॥

**असंभृतं मण्डनमङ्गयष्टे-**
**रनासवाख्यं करणं मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं**
**बाल्यात्परं साथ वयः प्रपेदे ॥ ३१ ॥**

मदजनकमस्याः निरतिशयं लावण्यं विषयविमुखं वशिनामुत्तमं योगिनामग्रिमं शूलिनमपि मदनस्य दासकोटिष्वपातयदिति बोधयन्महाकविः 'तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमाद-

---

*तदपोहितुमर्हसि प्रिये
प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमः
तुहिनाद्रेरिव नक्तमोषधिः ॥ रघु— viii 54

धानाम् । जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराचचक्षे' इत्युपरि विस्तरतो निरूपयिष्यति ।

पद्यमिदमनुशीलयतामस्माकं 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' 'मधु नवमनास्वादितरसम्' इत्यस्यैव महाकवेः सूक्तयः स्मरणपदवीमास्कन्दन्ति ॥

उन्मीलितं तूलिकयेव चित्रं
सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नवयौवनेन ॥ ३२ ॥

यौवनारम्भे च अङ्गेभ्यः सर्वतः किरणनिकुरुम्बामृतरसं किरन्त्याः भवान्या वपुषि लोकोत्तरं लावण्यमाविर्भूतमनुवर्णयितुमुपक्रममाणः कविः प्रथमं तस्याः वपुः तूलिकयोन्मीलितेन चित्रेण सदृशयन् करतलस्पर्शक्लेशितानां प्रतिकृतीनां कान्तिर्न सर्वथा लोकोत्तरा भवेदिति विचिन्त्य, बालातपेनापाद्यमानां काञ्चिदपूर्वां शोभामावहता सद्यो विकसता पद्मेन उपमयन् तादृश्याश्च पद्मश्रियः अनित्यतामाकलयन् तावताप्यसंतुष्टः 'चतुरश्रशोभि' इत्यनेन तस्या वपुर्निरुपममिति साध्ववगमयति भावुकान् ॥

( क्रमशः । )

॥ श्रीः ॥

# ॥ ❀सिताकण्टकांकिततिलभाषितं ॥

मकरसंक्रमे पाठकप्रवराः सप्रेमास्मान् 'स्वीकुरुत शर्करातिलान्, सल्लपत मधुरम्', इति भाषमाणाः चिरप्रवृद्धमपि द्वेषमस्मिन्वासरे विस्मृत्य सममेव समेभ्यो मित्राऽमित्रेभ्यस्सानुरागं प्रफुल्लितमुखपंकजाः प्रयच्छंत्येव । अथवा सर्वेऽवलोकयन्तु कौशल्यं कान्ताया उत सहजाया इति धिया दर्शयन्ति निखिलेभ्यो नः । यदा च 'किं भगिन्याः कृतिरियमाहोस्वित् भार्यायाः ? कियदनल्पीयो वयः तिलाश्च कियत्कमनीयत्वमाप्ताः शर्कराकण्टका अप्यावर्जयन्ति हृदयमवलोकयितॄणाम्, धवलिमाप्येषामधरयति क्षीरसुषमाम्, पश्यत, आँ,' इति च नुतिवचनं सम्मतिवचश्च विशति कर्णकुहरम्, तदा सानन्दं चोरेक्षणेनावेक्ष्य दयितावदनांबुजं स्मेराननाः सुकृतसुकरकुशलकान्ताकरपीडनमस्माकं सुभागधेयेन संवृत्तमिति जानानाश्चेतोभुवि स्रवंत्यां प्रमोदसरस्वत्यां प्लवमानाः कतिपयशर्करातिलान् लपने एकैकं प्रक्षिपंतो महद्दंभं बिभ्रति । परं शर्करापुलकांकिततिलकर्मणि सत्यः परिश्रमः कस्य, स्वार्थपराङ्मुखता चात्र कस्य राजति, कोयं प्रशंसास्पदं भवति ? किमेतत्किंचदपि विचारयंति वाचकवरेण्याः ? विरलाः खलु तादृशाः पुरुषधौरेया ये हि निष्पक्षपातं वस्तुस्थितिं विमृशंति । सत्योयं लोकप्रवादो 'जगन्न तत्वं पश्यति, इति । तत्र भवतां सहजाया

❀ लेखोयमाह्लादात् तत्संपादकानुमतिना संगृहीत इति तत्पत्राधिपं नारायणहरिआपटे महाशयं बहुमानयामः ।

जायाया वा अथवा इतरासां सीमंतिनीनां वा सितातिला धवला भवत्त्विति वयं (स तिलाः) किल स्वयंभूकल्पितं सहजमपि कवचं दानधुरीणाग्रगण्यः कर्ण इव परिमुञ्चामः; लुठामश्च निर्धूम-पावकप्रतप्तपात्रे, दुस्सहमत्युष्णं शर्करारसबिंदुपातं कंटकभारं च सहामहेतराम् । अथापि परिणामे न वयं श्रीमतां प्रशंसाया भाजनी-भवामः । परं सर्वमपि श्रेयोऽस्मद्दुःखदात्रीभ्यः प्रमदाभ्यः प्रदास्यथ; साधु! साधु! साधीयसी खलु श्रीमतां न्यायसरणिः । गरीयान् सत्या-नुरागः ।

एवं हि महती मिथ्याप्रथा प्रथिता सर्वत्र स्त्रियो नाम कोमलप्रकृतयो बलविधुरा मृदुहृदयाश्चेति । परमस्मद्विषयेऽन्तककिंकर्य एवामू इति प्रतीमः । सितातिलनिर्माणविधौ शर्करापाककणपाते पाणौ किंचित्तप्तभाजनस्पर्शे च हा! इति दुःखशब्दमुदीरयन्त्य एताः किं प्रक्षिपन्ति मद्वेदनायां कृपाकटाक्षं? । मधुरसुंदरतिलसृष्टौ स्नुषाया अथवा सुताया हस्तं किंचदंगारस्पृष्टं चेदाशु जननी अथवा श्वश्रूः 'अयि शनैः, इत्युच्चैरुद्धुष्य कर्मण्यस्मिन्नतीव जाग-रूकया भवत्या भवितव्यम् । (करं विलोक्य) हा! कियान्लोहितः संवृत्तः कथमस्मिन्क्षणात्पिटकः प्रादुरभूत् मा संत्वस्माकमीदृश-क्लेशदायिनस्तिलहतका इति कर्कशस्वरेण व्याहरति । अहह! सैव कुसुमसुकुमारकोमलमानसा नारी अस्मासु पाण्डुतापादनाय कंबलांतर्विन्यस्यास्मान्घर्षयति तदा तस्याः कोमलकोमला मतिः दया च क गच्छतीति भगवान् श्रीश एव जानीते ॥

वाचकमहाशयाः, भवतां किंचित्कृत्तायां कृत्यां कीदृशी भवति वेदना हा! हतोस्मि दुस्सहेयं यातनेत्याक्रन्दतोऽतिकरुणं

रोदितुं प्रवर्तध्वे। झटिति लिम्पन्तु तैलेन च्छिन्नमङ्गं फूत्कुर्वन्तु चेति महान्कोलाहलो बन्धुवर्गस्य भवतां प्रादुर्भवति। यदाऽस्माकं निष्कृपं सर्वामपि त्वचं च्छिन्दन्ति बलान्मृदुहृदयाः प्रमदाः तदा कीदृशं भवति दुःखं न एतद्विमृशन्त्वात्मानुभवेन भवन्त एव। ईदृशक्लेशकर्शिता वयं किं कान्ताकरकमलकल्पितशर्करापुलकाङ्कित-तिलाशनसमये स्मर्यामहे?। आस्तां तावत्। केवलेन कवचविसर्जनेन न कार्यं निर्वहति नः। नरशरीरे कुत्रचित्त्वचि च्छिन्नायां तत्स्थाने शान्तये तैललेपो विधीयते। अस्माकं तु च्छिन्ने चर्मणि प्रपातस्तप्तावपने। वक्ष्यत्येव पाठका यदि वः ईदृशस्तापो भवति किं तर्हि तूष्णीं स्थीयते? इति। अयि भोः कृतमतयः किं कुर्मः यदास्मान्वीतिहोत्रविहिताऽमत्रे विन्यस्येतस्ततः पाणिपद्मेन नोदयन्ति वनिताः तदा खलु वयं 'तुड़ तुड़, इति मन्दं दुःखध्वनिमुद्गिरन्त उत्पत्य पलायितुं प्रयतामहे। परं पतामो बहवो वैश्वानरवदन एव। भर्जनं भाण्डावस्थाने गात्राणाम्, पलायने तनूनपाति पातः। हा! कष्टं भो कष्टम्!। पाककर्मण्यनवधानेन हस्ते किञ्चिद्धिरण्यरेतसा स्पृष्टे 'हा हा' इति ध्वनिना भवनाभ्यन्तरमापूरयन्त्यः सीमन्तिन्यो यावदिष्टसिद्धिस्तावदस्मद्भर्जनव्यापाराद्विरमन्ति। हा! कीदृशी निष्ठुरता। अपि नामेदं शोभते कोमलान्तःकरणानां वरवर्णिनीनाम्।

अस्मदीयमिदं चरितमनुवाच्य पुरुषपाठका अनुकम्पन्त एवास्मासु, प्रमदास्तु भर्जयित्वाप्यस्मान्न मनःशान्तिं विन्दन्ति। भर्जितेषु नो गात्रेषु काचरसकल्पं शर्करापाकं बिन्दुपातं प्रक्षिपन्ति प्रतीपदर्शिन्यः। तत्रापीदमेकं समाधानपदं यद्युगपन्न विकिरंति शर्करापाकं कामिन्य इति। ये नामोपरि वर्तन्ते तैःप्रथमं सितापाकवेदनानुभवित-

ठ्या भवति । भो, विषयेऽस्मिन्परं न्यायप्रिया वनिताः,— सर्वेषां निर्विशेषमेव शर्करापातक्लेशो भवत्विति मत्वा उपरितनानधोऽधस्थितानूर्ध्वं च नयन्ति तेन हि कालविलम्बेऽपि वा समैःसम एवानुग्रहस्तासामाप्यतेऽस्माभिः । एवं शर्करापाकप्रक्षेपरूपं कर्म चिरं चलति वामलोचनानाम् । तेनाप्यस्माकं सहिष्णुतागुणेन वा दृढीभूतपाकान्तर्हिततया वा गात्राणामुत्तरोत्तरं न तावद्दुःखं भवति । यदा नः कलेवरेषु पाकदृढिमा वर्धयितुमुपक्रमते तदा मृदुमानसानां महिलानां महानानन्दो जायते । प्रमोदभराक्रान्ताः पाणिना वीजयन्त्यस्मान् । अस्मद्गात्रघनीभूतपाकमेव सिताकण्टक इति नाम्ना कथयन्ति कुरङ्गनयनाः । पदे पदे नितम्बिनीनां करतलस्पर्शेन मिथः संघट्टनेन च नो घनीभूतशर्करावरणं संवसति तस्य शर्करापुलकागलन्तीत्यभिदधाति वधूट्यः । तेन च तासां मुखपङ्कजं म्लायतितराम् । निष्कण्टकांश्चास्मान् लोकाय दर्शयितुं नितान्तं त्रपन्ते ॥

एवं परिष्कृता वयं चित्रतरशर्कराम्बरभूषिताः सिताकण्टकाङ्कितिला इति व्यवह्रियमाणाः तद्वासरे समेषां करकञ्जमलंकुर्मः । हरिणीदृशोऽपि नासाभूषणभूषितनासिकां पदे पदे इतस्ततःस्पन्दयन्त्यः आत्मीयचातुरीनिदर्शकानस्मान् यथा न प्रच्यवन्ति कण्टका आस्माकीनाः तथा प्रतिगृह्य पाणिना गृहाद्गृहमाहिण्डन्ति । इत्थं खल्वभिलाषस्तासाम् 'अनया हि सितापुलकाङ्कितातिला हृदयावर्जनचणा विरचिताः कण्टका अप्येषां रञ्जयन्ति सौन्दर्येणात्मनः प्रेक्षकाणां चेतः प्रशस्यतमा पाण्डुताप्येतेषां रजतप्रभां तिरस्करोतीति भणतु लोक इति । यथा समीहितं विहितायां नुतौ कयाचिद्दिन एव विधृतानि [ स्वीयान्यन्यदीयानि ] वा आभरणानि हस्ताभ्यां भ्रामयन्त्यः

'कीदृशं पाटवमत्रेति प्रतिब्रुवाणा यदा प्रकटयन्ति लघीयसं विनयमात्मनीनं तदा जन्मन्यस्मिन्विधेयं विहितमित्याकलयन्ति कामिन्यः । लोकोपि कियान्मुग्धोस्ति अनया कियन्तस्तिलाश्चर्मणो विसर्जिताः । कियन्तास्तिलाः कृपाकणानभिज्ञयाऽमुया दुस्सहदहनदग्धभाण्डे मरणयातनासहोदरां भर्जनवेदनामनुप्रापिताः । दयागन्धविधुरया एतया तप्ततैलतुलेन शर्करापाकेन कियन्तास्तिलाः स्नपिताः । एतत्किंचिदपि विचारयति ?। चन्द्रमुख्यः परं सर्वमिदमवगच्छन्ति कीदृश्या दारुणमया पद्धत्या विरचिता इमे इति । जानन्त्योपि ताः कथं स्वकृतंदुष्कृतं सङ्गिरन्ताम् । निखिलानां नो वक्त्राणि शर्करापाकप्रतिबद्धानीति ताभिर्विहितं सर्वमप्यागो गुप्तमेव तिष्ठति । अत एव तासामकुतोभयं पाण्डितीमात्मीयां प्रकटयितुं समायाति । किं कर्तव्यमेणाक्षीणां दैवमनुकूलमिदानीं जागर्ति । अन्येषामनिवार्यदुःखं दत्वाऽशेषा अपि योषा वैदुष्यं नैजं प्रथयन्तु चेत्प्रथयन्तु जनोऽपि वस्तुस्थितिमविचार्यैव वामलोचनानामेव चातुरीं बहु आचक्षाणो मूर्धानमान्दोलयति चेदान्दोलयतु, नास्मद्गुणानां कोऽप्युपयोगो न भवति चेन्मा जायताम्, अनुपमास्माकीनस्वार्थपराङ्मुखतायाः प्रशंसां न करोति चेल्लोको मा विदधातु । अबलाभिरपि बलादनुष्ठितं नो दुःखं न्यायापेतमिति कोऽपि नाकलयति चेन्मा भावयतु । परं सर्वकर्मसाक्षिणः पक्षपातशून्यस्य भगवतो लक्ष्मीकान्तस्य मन्दिरे वयमनितरसुलभं स्वार्थत्यागफलायितमासनं सत्यमासादयिष्यामः । नास्त्यत्र संशयकणिकापि । अकार्यापीयमात्मस्तुतिर्भवभूतिनेव करणीयाभवत् । काले कृतात्मश्लाघा न दोषायभवतीत्यत्रास्मदीयलेखको न चिराय लेखनीं गृहीष्यतीत्यस्तु । अयि परदुःखप्रमोदिन्यः प्रम-

दास्ताः प्रशंसन्तः पुरुषाश्च एवमेवास्मान् क्लेशयथ भक्षयथ च पुलकिततिलान् । न तन्मनसि धारयामः । परं यथा वयं परेषां सुखाय विधिविहितमपि वर्मामुंचामसधैर्यम् । असहामहि भर्जनवेदनाम् । अतितिक्षामहि लोहरसघोरशर्करापातम् । तथा किं यूयं परेषां हिताय भूयमानं क्लेशं मर्षयथ ? । अपि नामास्मात् स्वार्थमोचनकलामभ्यस्यथ ? अधीयताम् । अयमेव गुणोऽस्मत् स्वीकुरुथ येन भव्यं भवेद्भवतां संसारोऽपि सुखावहस्स्यात् । यथा वयं नारकक्लेशतुल्यं कष्टमनुभूय लोकस्य वक्त्रं मधुरयामस्तथा भवन्ततोऽपि अल्पं वा दुःखं विषह्य प्रियमित्रबान्धवानां वदनानि मधुरीकर्तुं प्रयतन्ताम् । हंत इदानीमस्मान्मुखे प्रक्षिपत प्रब्रूत च ‘ सिताकण्टकाङ्किततिलान्स्वीकुरुथ मधुरमधुरं सच्छपथेति ॥

मुद्दु विठ्ठलाचार्यः । ( गलगलि )

॥ श्रीः ॥

## ॥ वसन्तकोकिलः ॥

( पूर्वतोऽनुवृत्तम् । )

हिमकरावदातरुचिररुचिः, पेलवनवमल्लिका भगवतो भास्वतः प्रखररश्मिराशिषु ह्रासीभूतेषु, यदा शिशिरसंध्यासिक्ता निभृतं संकोचेनात्मनो वदनं दर्शयितुमुद्युङ्क्ते, समन्ततश्चानल्पविमलकुमुदच्छदसमुदयो मन्दं मन्दं स्फुटति, उपमापथातीततात्कालिकशोभाविलोकनद्विगुणितलालसा झंकारमुखरितदिङ्मुखा मधुकराः सुधामधुरिमाधरमधरितसुरवधूबिम्बाधरं मधुरसमास्वादयितुं परितः परा-

पतन्ति, तदा संदृश्य दर्शनीयमिदं हे कृष्णमुख कोकिल, 'कु-ऊ, ध्वनिमुद्धाऽस्य निजमनस्समुत्पन्नामसूयाज्वलनप्रज्वलित-ज्वालामुपशमय ॥

श्रीमतां जनानां गृहांगणगतदाडिमानोकहस्कंधे समुपविष्टः सदःशाखिपुष्परूपिणीसु नातिचिरादेव मन्दं तरुणिमपदं दत्त-पदासु मुग्धासु लताचाञ्चल्यस्य गन्धराजप्रस्फुटताया वकुलरूपो-च्छ्वासस्य मल्लिकानैर्मल्यस्यचेतरगुणानां वैकत्र समावेशमभिवीक्ष्य स्वकोच्चतरपंचमस्वरेण तत्प्राङ्गणप्रदेशं वेपयन् रमणीगणमुपाहूय प्रत्यक्षं 'भवतीनां रूपं सुखं पवित्रताचसर्वमिदं 'कु, इति स्फुटं ब्रूहि ॥

अमुना पञ्चमस्वरेणैव भवान् भुवनविजये प्रभुरभूत् । ध्वनिनानैव तवेदृशी महतीकविषु रसिकेषु । नचेत्त ध्वनिमाधुर्यं को वा विचारयेकुरूपिणं त्वाम् । यदि नाभविष्यत्पञ्चमस्वरः सहायकस्तदा न कोऽपि ते मानमकरिष्यत् । केवलं कंठसामर्थ्ये-नैव सर्वत्रादरमाप्नुषे । तद्विनाकृतश्चेद्भवान् पदे पदे मानखंडनमेव विन्दते स्म । स्वरमेकमपहाय काकोलूकादिभ्योऽपि लघीयान् भवान् । तारुण्यलावण्यमन्तरा यद्रमणीजनस्य मौल्यं देवते विना ध्वनिं ॥

पिकसार्वभौम, मुक्तफलविडंबिनक्षत्रमालालंकृते पार्वणशर्वरी-सार्वभौमगौरगौररोचिर्विरोचिते नानाविधवर्णभूषिते नगनदीनगर-कुञ्जादिचारुतरासनराजिसुसज्जिते प्रकृतिरम्याकृतिभृति प्रकृतिरूप-महासदसि विस्मृतान्यविषयं दत्तावधानरसिकश्रोतृततिसनाथे शा-खोपरितनपीठे तिष्ठन्नात्मनः पंचमस्वरवावदूकतया सकलं सभा-निलयमापूरय । वाक्पाटवेन तव कस्यापि लाभोऽस्तु मास्तु वा ।

परं शिरोधिनोति सरसस्वरेण ते जगतीतलमखिलमिति नास्ति संशीति लेशांशोऽपि । मादृक्षः कश्चन भिक्षुकः त्वदीयवक्तृता विष्फलेति सतुच्छं सोपहासं सिषाधयिषति चेत्तं 'कु-ऊ, इति भाषमाणः 'मूर्खः, इति विष्वगाघोषय । यद्भवदुदीरितमनृतमपि सूनृतमामनन्ति मानवा मेदिन्याम् । इथत्समयं समस्ताः कवयो विद्वांसो रसिकाश्च तव महिमानं भृशमस्तुवन् स्तुवन्ति चाद्यापि । तव मधुरभाषणस्य गुणावगुणानां सूक्ष्मपरीक्षणे सांप्रतमहमेक एव प्रथमं प्रवृत्त इति भाति मे । कोकिल, इतः परं सम्यग्जागृहि त्वरितम् । वसुधातलेऽस्मिन् स्वयमेव न कोऽपि विचारयति सारासारम् । प्रायो निखिलाः 'परप्रत्ययनेयबुद्धयः । एतावदवधि कविवचासि विश्वस्तं विश्वविश्वं श्लाघते स्म भवन्तम् । परमिदानीं कर्हिचिन्मे मतं जगन्मान्यतां लभेत । नास्तीति निश्चयेन कोवानिवेदयेत् ॥

तथापि, परभृताधिपते, त्वत्प्रतीपभाषिणि मयि कुपितो न तन्मधुरं स्वरमुपसंहर । तन्मेऽतिमात्रं हृदयापहारीति पूर्वमेवावेदितं भवतः । कस्यापि वस्तुनो यथायोग्यपरीक्षणं पृथक् । तस्मिन्प्रेमनिधानं भिन्नमेव । न तयोर्मिथः कोऽपि संबन्धः । विदितावगुणेऽपि वस्तुनि प्राणी स्वभावादेव प्रणयमाबध्नाति । न खलु तवावश्यकमिदमावेदनम् । तर्हि तदुदीरय 'कु-ऊ, इति । साधु गदितमिदं साधु । अमुना कलकण्ठेन 'कु, इति व्यवहरति भवति तथैव जानन्ति जना अशेषाः । 'ऊ, इति समुच्चरति तदेवोररीकुरुत ॥

सत्यं यदावेदयामि तदपि सर्वात्मना नानृतकोटिमाटीकते त्वदुक्तवदेव कृत्स्ना अपि भावाः कुभावमंशेनाप्यवलम्बते । लतायां कंटकम् ,

कुसुमेषु कीटकः, सुगन्धे चन्दनादौ विषम्, स्फुटमीक्ष्यत एव। म्लाति कोमलमपि पल्लवं रम्यमपि रूपं विकृतिमापद्यते । वर्तते च रामारत्नेषु वञ्चनाकालुष्यं । तर्हि समग्रं 'कु इति व्याहृतिरवितथैव तव । निर्भयं गायतु वयस्यः 'कु ऊ, इति । परमिदं स्मरणसरणिमारोहणीयमनिशं भवता । यत्पञ्चमस्वरेण निगदितमेव 'कु, इतीदं सत्यमवगच्छन्ति मर्त्याः । कुक्कुटमहाभागः प्रत्यहं नः प्राभातिकसुखमयनिद्रावेलायां 'कु–ऊ–कुकू, इति विदारितश्रवणविवरमाक्रोशति । न कोऽपि तत्करोति कर्णौ न जहाति च सुखस्वापम् । किंच तमेव ताम्रचूडमनृतभाषिणं चिकीर्षवो भगवतो भासांनिधेरायुगारोहणं शेरते स्वच्छन्दम् । निदानमत्र तवेव कुक्कुटपण्डितस्य मधुरस्वरविधुरतैवेति मे मतिः । अत एव तस्य कर्कशनादेन विहितं हितकरमपिप्रभातोत्थानोपदेशं नाकलयन्ति मनसापि ॥

मधुरस्वरेण वशमायाति निखिलं भूवलयम् । यन्नादमुग्धाः सकलसचेतना इति । परं स च स्वरः शुद्धपंचम एवावश्यकः । न किल किंचिदप्युपयुज्यते तस्मिन् मिश्रणं नाम । संसारेस्मिन् श्रेयःकामुकः शद्धपंचमस्वनमवश्यमेव संपादयेत् । न कदापि सिध्यति गान्धारमध्यमादिध्वनिना कार्यमस्मिंल्लोके । कालिदासादिकविकुलतिलकाः शद्धपंचमरवेणैव दर्शितप्रभावाः प्राभवन् भुवनेखिलमानवमानसविनोदकर्मणि । न चेत्कविपुंगवानामृषभस्वरं को वा कर्णयेत् । कुतस्तावद्दूरेऽनुधावनम् । सर्वैरप्यनुभूतमेव तावदत्रोदाहरामः । जरन्मातरपित्रोर्धर्मकृत्यविषयकमपस्वरोदितमुपदेशं को वा श्रुणोति सावहिति दत्तकर्णः । परन्तु कान्ताजने कोकिलमंजुलपंचमरवेण मौक्तिकहारमर्थयति विकासितवदनवारिजः पतिराजः

'यतोऽयं निस्ससार स्वभावमधुरः स्वरः, प्रेयस्या स्तत्कंठेऽविलंबितमेव पारितोषिकतया परितोषाय मुक्तासरमर्पयति ॥

अये वनप्रिय, मम पञ्चममध्यमर्षभादिसंगीतशास्त्रपारिभाषिकशब्दोच्चारमात्रेण मां समासादितगंधर्वविद्यावैशारद्यमभिज्ञाय साध्वसेन माभजस्व संकोचं किंचिदपि कूजने गीतिकलायां मदीयवैदुष्यं भवत्पोषककाकसुधिसदृशमेवेति कथनं नातिशयोक्तिवर्गमवगाहते । 'मधुरः सुखदः, इत्येव पञ्चमशब्दस्य स्वकपोलकल्पितसरसोऽर्थः । अद्य माध्यन्दिनभोजनसमये 'कीदृशो लड्डुकः, इति पृच्छति यजमाने ऊनशर्करतया 'किंचिन्यूनपञ्चमो लड्डुकः, इति त्वत्पञ्चमस्वरविचारनिवृष्टचेतास्तदैवोत्तरमदाम् । तदाकर्ण्य यजमानो मां भ्रमिष्ठं विज्ञाय नाधिकमापेदे विस्मयम् ।

वस्तुतः पञ्चमोऽयं मध्यमोऽसौ गांधारोऽयमृषभ एष इति मां बोधयितुं भगवान्विधातापि नालं भवेत् । हस्तिनो बृंहितमिदं हयानां हेषेयं बर्हिणः केकासाविति वेत्तुमपि तावती न पर्याप्ता मे मतिः । केवलमस्मदीयमङ्गलानाम धेनोः 'अंबा, रवो नितरां परिचितो मे । मृत्पिंडबुद्धीनां नस्तव तत्पञ्चममध्यमधैवतगान्धारनिषादादीनां कथं कल्पनापि जायेत ?

एहि तर्हि हे कोकिल, आवामुभौ मिलित्वा गीतमुद्गिरावः । यथा भावांस्तथायं जनोऽपि । समानसुखदुःखौ खल्वावां । पुष्पमयकाननेऽस्मिन् विटपिनो विटपिनमानन्दातिशयेनोत्पतति भवान् । अहमपि संसारकान्तारे पर्यटामि गृहाद्गृहं । तद्बन्धो पिक, मिलितावेवावां पञ्चमस्वरं प्रपञ्चयावः । जगत्यस्यां यथा ते सर्वस्वमयं

कण्ठः तथा ममापीयमेकैव सुरवाणी । अनयोरितरदधिकं किं वा प्रार्थयाव: संस्तुतावस्थाम् ।

यत्किलसर्वाङ्गसुन्दरं महाजनादृतं वस्तुतदेवापेक्ष्यते लोकैः । अस्मदभीप्सितमुपरितनमीदृशमेव तत्कुतोऽन्यपदाकाङ्क्षावहे । यः किलास्य विश्वशरीरस्यात्मा यस्य च श्रोत्रमशेषशब्दग्राहि तमनल्पकृपाकूपारं प्रार्थितफलदातारं जन्मान्तरेऽपि सर्वस्वमिदमस्मदीयं नौ प्रदिशेति विहिताञ्जलिपुटमनन्यरतचेतसा नाथावस्तरसा ।

तर्हि कोकिल,भवत: 'कु ऊ, शब्दमसकृत्कूजस्व द्रक्ष्येऽहम् । कण्ठमाधुर्यवैधुर्येण न कथंचिदपि शक्नोमि मनोगतमावेदयितुं त्वदीयभुवनमोहकः स्वरोऽधिगतश्चेन्मया लेखलपितं मे कांचनसंगतमिव रत्नं प्रतिक्षणं नवनवतां रुचिरतां च भवति । न तावदावर्जितं सुकृतं पूर्वजन्मनि । तर्हि वयस्य वनप्रिय, भवानेव मन्मानसेप्सितं प्रकाश्य प्रसूनप्रचुरेऽस्मिन्नुपवने स्फुटमेकवारं 'कु-ऊ, स्वरं बहिरवतारय । किमपि दिविषद्भाषाविषयकं पुरतो रसिकानां वाच्यमिति निश्चिनोमि । परंतु वाचैव न मे स्फुटति । तत्कथयतु भवानेव सखे पिक । यदि कोकिलकण्ठं कालिदासगिरं तारकानिकरश्रोतृजनं विन्देयं तदा निवेदयामि मच्चेतोगतं । तावत्त्वमेव मे प्रतिनिधीभूय निर्वहामरगीरुन्नतिकार्यं । अतीवपरिचितः स्तुतः प्रेमास्पदीकृतश्च कालिदासादिकविवरैर्भवान् । स्तौति किलातिवेलं त्वां सुरसरस्वती । तत्कर्तव्यमेव तवेदं त्रिदशभाषोन्नयनं नाम कार्तज्ञ्यमावहतः । सखे तत्त्वरस्व पञ्चमसरसस्वरेण रसिकलोकोपदेशे । अमरभारत्या इदानीमवनतिरूपशीतवर्षासमय इति माभूरुदासीनः । उच्चतरपञ्चरवेण दिगन्तरं मुखरीकृत्य जनमनःकुसुमं विकास्य क्षणेऽपि समुन्नतिवसन्तकालानय-

नमधीनमेव ते । तत्त्वरितं कुरु कर्मेदं सुकृतफलम् । अनिशमधमर्णास्याद्देववाणी रसिकावलिश्च । सखे संस्मृत्य सौहार्दं मे निध्याय च रसिकप्रणयं भवानाचरतु कार्यमिदमचिरादेवेति याचे त्वां सविनयं । तादृशीं ते सुदृशं कुशेशयसदृशादयोदर्कदृशा श्रीश इति सकतुकचेतसा समाशास्य विरिरिंसावशगमधुनात्मानमातनवै ।

रामाचार्यः । ( गलगलि )

॥ श्रीः ॥

## ॥ गोविन्दसूरिः ॥

( पूर्वतोऽनुवृत्तम् । )

पार्वतीरमणपरिचर्यापरायणाश्च सान्त्वादिभिः सुबहुशोऽनुरुन्धन्तोऽपि यदा निराशाः संवृत्तास्तदा ते यथागतं जग्मुः । गोविन्दगुरुश्च मातुलाच्छ्रीशैलपूर्णाद्गुरोः श्रीविशिष्टाद्वैतसम्प्रदायार्थानधिगच्छन् आचार्यकैङ्कर्यैकपरायणो गुरोः कथामृते नान्यत्किंचिद्विदन् सुसुखमुवास ॥

दिव्ययात्राप्रसङ्गेन श्रीवेङ्कटाचलमुपगताय भगवद्रामानुजाचार्याय तदीयया याञ्चया श्रीशैलपूर्णगुरुवरस्तमेनं गोविन्दसूरिमुदकधारापूर्वकं वितताररेति साम्प्रदायिका वदन्ति । ‘हरिभक्तिदास्यरसिकाः परस्परं क्रयविक्रयार्हदशया समिन्धते’ इति च सुभाषितं वृत्तान्तमेनमेव हृदये करोतीति वदन्ति ॥

‘भक्तेषु ते वरगुणार्णवपारतन्त्र्याद्दास्यं भजन्ति विपणिव्यवहारयोग्यम् ।’ इति च सुभाषितान्तरम् ।

( क्रमशः । )

इन्तैते मणिपादुके चरणयोरासञ्जयन्नञ्जसा
हस्तालंबितवेत्रयष्टिरपरं यावन्न गृह्णाम्यहम् ।
अक्षारध्वनिताद···विलसत्यैरावती सा नदी
यत्सन्दर्शनमेव कार्मणमभूदेतादृशश्रेयसः ॥

अहो मणिपादुकयोरनयोः प्रभावः । तथा हि—

जम्बूद्वीपे चरणघटिते पादुके तत्र कुर्वन्
प्रागद्राक्षं बत समुदितं भानुमन्तं यथैव ।
शीघ्रं प्राप्य प्रथितमधुना सिंहलद्वीपमाभ्यां
पश्याम्येनं बलरिपुदिशि प्रायशोऽहं तथैव ॥

(प्राचीं दिशमवलोक्य) अयं खलु भगवानिह मघवदाशाविशालनयनावदनारविन्दहरिचन्दनतिलकायितनिजमण्डलो जगदण्डभवनकुहरविहरदखर्वशार्वरषण्डखण्डनदीपायमानदीधितिधारा विरचितदुःसहविरहज्वरातिशयजर्झरिताङ्गरथाङ्गदंपतीपरिषदमितंपचसुधाभिषेचनविधिरुदयसमयाभिषेणनदालितदेहमन्देहदनुजसंदोहसंक्रान्तरुधिरसन्देहसन्धायिबन्धूककुसुमबन्धुरुचिबन्धुरवपुरुदयमहीधरशिखरमधिवसति दिवसपतिः । संप्रति हि—

घ्रायं घ्रायं प्रकृतिसुरभिं गल्लपालिं प्रियाणां
सौधे सौधे मुहुरतिरतिश्रान्तमङ्गं वहन्तः ।
मन्दं मन्दं सविधमयितं मारुतं जालमार्गात्
सेवं सेवं भुवि सुकृतिनः स्वापसौख्यं भजन्ते ॥

विविधसौधवलभिषु—

आस्वाद्य चन्द्रातपमाप्रभातं
चकोरडिम्भा बहुचापलेन ।
अन्योन्यसंबाधमबुध्यमानाः
स्वपन्ति कामं सुखपारवश्यात् ॥

( ऐरावतीमवलोक्य सहस्तनिर्देशम् )

पाथोजानि निशावियोगविवशाः स्रग्णूधिशाय्यप्रिया-
स्तन्वन्तो विकृता यथापुरममी चञ्चूपुटैः पक्षतीः ।
आरादत्र मृगाङ्कपादमृदितस्वाङ्गाः रथाङ्गाह्वयाः
पत्रैः संप्रति वीजयन्ति विततैः पश्यन्ति हृष्यन्ति च ॥

(सूर्याभिमुखो भूत्वा साञ्जलिबन्धम्) अयि भोस्त्रयीमय समस्तभुवनतिमिरामयजनितातङ्काविनोदनागदङ्कार भगवन् गगनालङ्कार । (समन्तादवलोक्य )

अहो मणिचतुष्किकां कथमवापमैरावती-
प्रतीरभुवि संप्रति प्रभुमहं त्विषां भावयन् ।
विलासविपिने यतो मम विधेयभूयं विधे-
र्वशेन बत या तया वनितया पुरा भूषिता ॥

( स्मृतिमभिनीय ) पुरा खलु पुटकिनीपतिं भावयतो मम मनसा सेयमाविष्कृता मरतकचतुष्किका । ततो निमिषार्धादेव मामेते मणिपादुके तामेतामनयताम् । ( मणिपादुकाभ्यामवतीर्य मरतकचतुष्किकायामुपविशति । समन्तादवलोक्य साश्चर्यानन्दम् । )

क्षोणीनव्यहरिन्मणीष्टकचितासोपानसीसन्तति-
स्थूलस्थूलकरीन्द्रदन्तरचितास्थूणाः प्रवालाहिताः ।

भद्रश्रीकलितास्तुलावलभयो भर्मद्रवैर्वर्मिताः
तन्व्या वासचतुष्किकामिह वने तस्याः परिष्कुर्वते ॥

( अभितो विलोक्य ) परितोऽपि मरतकचतुष्किकामिह बालसहकारकेसरचंपकचन्दनप्रमुखाः कतिचन पादपाः समानपरिमाणतया जानामि । तया योषिता समसमयहेषिता इति । ( पुनर्निरूप्य अङ्गुल्यग्रेणाग्रतो निर्दिशन् )

चन्द्रातपव्यतिकरद्रुतचन्द्रकान्त-
बद्धालवालवलयस्रुतवारिपूरैः ।
पुष्यत्ययं निशिवतंसितशीतभानौ
सर्वानिह क्षितिरुहः सहकार एकः ॥

तदयं तस्याः प्रेयस्याः प्रेमानुबन्धमहिमातिशयः । (पुनर्निरूप्य) अन्तिकालवालगताया वासन्तिकालतायाः स्वयंवरणाभिलाषी सलिलसहकारः । ( अन्यतोऽवलोक्य ) इह तावदभिमताभिकलाभनियमविशेषाय प्रतिष्ठापिता पुनरेषा चन्दनविटपिनिकटभुवं हाटकमयी भगवत्याः रत्याः प्रकृतिरध्यास्ते । ( विचिन्त्य )

सुभगंकरणव्रते सुदत्या
प्रतिमा हन्त रतेः प्रतिष्ठितेयम् ।
वपुषेव जिता तया वसन्ती
विपिने क्वापि रतिर्विभाति साक्षात् ॥

(पुरस्तादवलोक्य) इह तावदेतया समेधिता विशालदृशा हरिणशाबका निशामयन्तो मामपरिचितमतिचपलाद्दूरत एव पलायन्ते । (चिन्तामभिनयन् दीर्घमुष्णं च निश्वस्य) अहो तत्रभवती मनो-

भवतीक्ष्णतरनाराचनिकरमोचनतक्षीकृता सेयमंबुजाक्षी बलवदस्वस्थतामनुभवति । यतः—

**प्रमदवनं सवयस्या प्रमदा सेयं प्रमोदहेतुमपि ।**
**न प्रापयति पदाब्जन्यसनेनेदं कृतार्थतामधुना ॥**

(स्मृतिमभिनीय) सत्यमेवोक्तं तत्रभवत्या प्रतिभावत्या सेयं क्षामाकृतिरक्षमा चलितुमपि परमाणुमध्या सौधतलमध्यास्त इति । भवतु तावदासञ्जयन् मणिपादुके पदयोरञ्जसा तमेव प्रासादमासादये (विचिन्त्य) प्रतिभावती यदि भजेत्तदन्तिकं विभुना च सा विजयकेतुनाधुना चपलं विचारयति मां चतुष्किकां यदि चासावतनुरेष बाधते । अहो तस्या माध्यमिकागमप्रतिपाद्यमध्यमायाः प्रासादतलासादनसामग्र्यामपि समग्रायां संप्रति महानयं प्रतिबन्धः । [विभाव्य] सेयमेव कथंचन विलासेन सवयस्या प्रेयस्यागता चेदिममारामं पचेलिमं मम तपस्याफलम् । (इति चिन्तामभिनयन् पुरतः सुषुमातिशयं निरूप्य । साश्चर्यम् ।]

**या काचिद्बकुलद्रुमावलिपदादेषा शरीरोचिषा-**
**मायान्ती सुखदर्शना विसमया हा हन्त निर्धार्यते ।**
**बाहायन्त्रनियन्त्रितेन्दुजठरप्रस्यन्दमानामृतैः**
**क्लिन्नेवायति निर्वृतिं तनुरियं किं वानया भूयताम् ॥**

( पुनर्निरूप्य ) अहो कथमिहोपवनवेदिकाभुवं समया वेगेन स मया प्रवहन्नेषोऽपि भाव्यते सुषुमाप्रवाहः । ( भूयोऽपि सविशेषं निरूपयन् साश्चर्यानन्दम् । ) अनिर्धारितस्वरूपानपि रमणीयस्वभावान् कतिचनपदार्थानेष समाकर्षति । ( विभाव्य ) एते हि पदार्थाः कथमनिर्धारणपदवीमध्यासते । ( अङ्गुल्यग्रेणाग्रतः क्रमशो निर्दिशन् ।)

शैवालान्यसितांबुजे सरसिजं शङ्खौ मृणाल्यौ पुनः
कोकद्वन्द्वमितो न दृष्टिविषयं कोऽयं पदार्थो भवेत् ।

( विभाव्य पुनर्विभाव्य )

दृश्यते च सूक्ष्मतरा काचन मेचकालतिका ।

सान्द्रं सैकतमण्डलं कदलिकास्तंभद्वयं कच्छपौ
पाठीनद्वितयं नवे किसलये प्रान्ते तयोः कोरकान् ॥

(पुनर्विभाव्य । साश्चर्यम् )

अंशुप्रवाहचलवीचिभिरप्रयासा-
त्पुञ्जीकृताः पुनरमी पुरतः पदार्थाः ।
वेधोविधानविभवेन विनाधुना मे
दिव्या वधूरिव दृशोः प्रविशन्ति हर्षम् ॥

(मुहूर्तं निध्याय ।) सेयं दिव्या वधूरेव । नैते च शैवालादयो मिलिताः पदार्थाः (पुनरपि तेनैव क्रमेण करेण निर्दिशति ।)

केशान्ते नयने इमे मुखमिदं कर्णोऽयमेते भुजे
तद्वक्षोजयुगं वलग्नमयिता सा किञ्च रोमावली ।
तस्यास्तज्जघनं तदूरुयुगलं तौ मण्डलौ जानुनो-
र्जङ्घे ते चरणाविमौ नखततिः सा चञ्चलाक्षीमणेः ॥

( पुनर्विभाव्य )

वैशाखं मलयाद्रिमिन्दुकमठव्याप्तं गुहाधिष्ठितं
बध्वा कल्पलतागुणैर्बत रतेर्भद्रा वसन्तादिभिः ।
लावण्यांबुविधानतः प्रमथितो लक्ष्मीरिवान्योदिता
मध्ये दीधितिपूरमत्र सदसन्मध्येयमालक्ष्यते ॥

( विचिन्त्य सोत्कण्ठम् ) अये चिरेण गृहीतः परमार्थः ।

**सैवेयं चन्द्रकला प्रमदवनं पादपद्मविन्यसनैः ।**
**आयाती........सुलभं न तु दृशापि सुकृतित्वम् ।**

अन्यथा—कथमेतादृशी भुवि दरीदृश्यते सुषुमाञ्जरी । (निरूप्य) कथमचिरादेव सेयमारादिहाराममदेशे कुमुद्वतीचन्द्रिकादीयमानकरावलम्बना शंबरमदनकलंबकदम्बजनिताभिषङ्गातिशयकृशाङ्गा, मन्दमन्दमन्तिकभुवमवतरति चन्द्रकला । अहमिदानीमासं जयन्मणिपादुके पदयोरञ्जसा चन्दनविटपिकुञ्जगृहान्तरितः प्रेयस्याः सवयस्यायाः विलसितानि यावदवलोकयामि ( इति तथा करोति)

( ततः प्रविशति सखीचेटीदीयमानकरालम्बा विरहालसा नायिका )

**नायि—** हला कुमुज्जइ रुमे अज्जवि मं किन्ति इमाए चन्दिमाए सहिरापमदवणं णयसि अहवसोपमदवणमग्गो तुए विसुमरिदो ।

( उभे सविषादं परस्परमवलोकयतः )

**राजा—** अहो सुवदनाया विरहवेदनातिशयः । यदियमाराममभुवमागता मनागपि न जानाति । अस्याः किल निरवग्रहाविरहग्रहग्रसनातिशयेन विनाकृतविलासविशेषाया योषामणेरभिनवयौवनाधिगमो विषादहेतुरेव । तथा हि—

**क्षामक्षाममिदं वपुः प्रतिकलं कामेन मुक्तैः शरैः**
**स्थूलस्थूलमुरोजयोर्युगमिदं दुर्वारमुज्जृंभते ।**
**खिन्नं खिन्नपदं पदद्वयमहो स्थाने कृतं वेपतं**
**वारं वारमिदं मनश्च विहृतौ बद्धादरं जायते ॥**

**सखी—** हला चन्दकले......

**चेटी**— [जनान्तिकम्] हला कुमुज्जइ इमाए भट्टिदारिआए... णिमन्तमूलिआटिहें अणवो हणिज्जा खणे खणे अतिमेत्त... त्तिदा भयवदि पडिहावरिणागदा । किं एसा इमाए भट्टिदारियाए मण....

इदो खणादो एव्व तेण महाणुहावेण रहुणाहजहिणादेण सहिदा ।

**राजा**— पन्थानं नयनद्वयस्य भजते पद्माकरो भीकरः पाटीरद्रव.... विपिनं जानाति नैवाधुना । (विचिन्त्य) भवतु ज्ञातम् । आपुक्खव....भिरहहक्षुभिता कथं स्यात् । अतो न जानाति सेयं सुवदा घण्डाणिणदधावमाणमिगिसन्तदि सारङ्गो यूहाधिपईइदो एव्व अणुहावेइ ।

**सखी**— हला चन्दकले तुए वड्ढिदो मणोहरणामहेयो सारङ्गो इह तुमं अणुधावेइ । पेख्ख पेख्ख ।

**नायि**— हला कुमुञ्जु पञ्चसरसंजवणं किं लीलावणं उवगदह्म ।

(इति परिवृत्य पश्यति ।)

**राजा**—

**कर्णालंकृतिघण्टिकाघणघणत्कारैरमुष्या वने**
**शंसन्नागमनं स कोऽपि मुखतः संत्यक्तदर्भाङ्कुरः ।**
**घ्रायं घ्रायमयं पदानि सरणौ कान्तामणेः सांप्रतं**
**सारङ्गः सहितो मृगीभिरभितः सोद्वेगमागच्छति ॥**

**अमृतकिरणाङ्कवासी पाणौ**
**विधृतो मृगोऽपि पशुपतिना ।**

अयमित्र न कृती यदमुं
हरिणाक्षीनयनलक्ष्यमातनुते ॥

**नायि--** हले कुमुञ्जु मरकदचतुक्कियझंति गमिस्सामो ।

**सखी—** जवं अहिरुइदं अ सहीए (सर्वा अपि नाट्येन मरतकचतुष्किकासमीपमुपसर्पन्ति )

**नायि—** हले कुमुज्जू इह कहिं पदेसे मए वड्ढिदो बालसअआरो । वासन्तियावि सयआरसयंवराहिलासिणी केत्तिआ संवुत्तो । तत्थ गमिस्सामो। (सर्वा अपि मरतकचतुष्किकामभितः परिक्रामन्ति)

**चेटी—** (अङ्गल्यग्रेणाग्रतोनिर्दिश्य) एसो एव्व सो बालसहआरो । एसा एव्व सा वासन्तिआ ।

**सखी—** हले चन्दकले जंबूदीवापालइणो अणुरूव्वस्स रहुणाहभूविहुणो संवरणाहिलासिनि तुमं विअ एसा वासन्तियो बालसहआरस्स । तुहाणं विअ पसवोदयसंदसीदणवजोवणाणं इमाणं अज्ज एव्व सयंवरमहूसवो होदु ।

**नायि—** [ शृङ्गारलज्जां नाटयति ।]

**चेटी—** हला कुमुज्जू इमाए भट्टिदारिआए अज्ज दुव्वारं लज्जं असमयं किं जंभेसि ।

(नाटकमिदमभिनन्दनीयवाग्वैखरीसमावर्जितसहृदयलोकमिति कृत्वा मुद्रापयितुमुपक्रान्तमस्माभिः सहृदयायाम् । परमेक एवादर्शः अपशब्दबहुलः वम्रिभिर्भक्षितभूयिष्ठः अस्माभिरुपलब्धः नान्यः । अत एवात्र विद्यमानाः अपशब्दविच्छेदादिदोषाः कृपया क्षन्तव्याः सहृदयानुवाचकैरिति प्रार्थयामहे)

संपादकः ॥

**अश्मकेन्द्रः**— ( सधैर्यसम्भ्रमम् । ) तदियमेवाद्य साधीयसी सन्धा । अस्मिन्नेव तरुमूले आत्मानं हन्मि । ( इत्याकृष्य निस्त्रिंशं वक्षसि निक्षिप्य । ) अधुना गतजीवोऽहम् । ज्योत्स्ने, निष्क्राम त्वं रङ्गप्रदेशात् । ( ज्योत्स्ना—निष्क्रान्ता )

सामाजिकाः, अद्यैव सम्यग्गतप्राणोऽहमिति जानीत ।

( इति भूतले पतति । )

**मकरन्दः**— क्षणं जीव ।

**कनकलेखा**— कथं भानुमतीं गाढान्धतमसे विहाय ज्योत्स्ना निष्क्रामति । कथं वा विचेतनं वल्लभं साक्षात्करिष्यति बिलासिनी ।

**राजा**— नक्षत्रज्योतिषा । सापीत एवाभिवर्तते । अस्याः प्रणयप्रकाशनेन विराममेष्यति प्रकरणम् ।

[ ततः प्रविशति भानुमती । ]

**कनकलेखा**— किं वा भवेदनायतोऽस्याः प्रलापः ।

**वसन्तः**— अश्मकेन्द्रमद्यैव दृष्टवत्येषा ।

**मकरन्दः**— किं वा विस्मृतमनया वक्तव्यं वचनम् ।

**सामाजिकाः**— ( स्मयन्ते । )

**भानुमती**— ( स्मरणमभिनीय । ) दयित, कथं गाढं निद्रासि । ( स्पृशन्ती । ) अनाथास्मि मन्दभागिनी । यदि वा मूर्छितः । ( पुनरपि स्पृष्ट्वा । ) कथं गत एव दृश्यते । अहो नाथोत्तिष्ठ । देहि मे प्रतिवचनम् । कुतस्तवेदमतिनैर्घृण्यम् । कथय त्वदृते क गच्छामि । कमालपामि । कं वा शरणं भजामि । ( कम्पयित्वा । )

नियतमेव लोकान्तरं गतः। अपि न जानीषे यन्न शक्ष्यामि भवता विना क्षणमपि प्राणान् धर्तुम्। तदविलम्बेनानुम्रिये। ( इति तस्य हस्तादाच्छिद्यासिमुरसि निक्षिप्य। ) साम्प्रतं प्रियमनु मृतास्मि। ( इति भूमौ शेते। )

**राजा**— ( सस्मितम्। ) ज्योत्स्नाकेसरिणौ विनेतरे गता गन्तव्यां गतिम्।

**मकरन्दः**— महीपते, भित्तिश्च जीवति।

**अधरकः**— ( ससम्भ्रममुत्थाय। ) वळे शामाइआ, कुळिए वि णट्ठे बेअ। णेण ओशिदे आशी अम्हाण णाळअप्पओए।

सामाजिकाः कुड्यमप्यनश्यदेव। अनेनावसितोऽभवदस्माकं नाटकप्रयोगः।

**सर्वे**— ( सहासम्।। ) माऽस्तु माऽस्तु!

**अधरकः**— ओशाणविण्णावणा का वि वट्टइ। जइ कुऊहळे शावेम्हि वो।

अवसानविज्ञापना काचिद्वर्तते। यदि कौतूहलं श्रावयामि वः।

**राजा**— आवश्यकी न हि विज्ञापना। यदा गतान्यखिलानि पात्राणि। सम्प्रति सहर्षं नृत्यताम्।

[ नेपथ्ये मङ्गलगीतवादित्रध्वनिः। ]

[ सर्वेऽप्युत्थाय जयघोषेण पीत्वा मधु सम्मोदेन नृत्यन्ति। निम्बवती-प्रदोषप्रभृतयो विद्याधरा दिवि सहस्ततालं गायन्ति। अम्बरतलात् पुष्पवृष्टिः सञ्जाता।]

**मकरन्दः**— (सश्लाघम् ।) सखे वसन्त, प्रस्तूयतां केनापि महाराजस्य मङ्गल्या ।

**वसन्तः**— नन्वहमेव गायामि । नित्यमङ्गलस्य विभोर्मङ्गलान्तरमप्यावश्यकम् । तथापीदमस्तु भरतवाक्यम् ।

धर्माधर्मविचारदत्तहृदयो जीयादजस्रं नृपः
शौर्याक्रान्तसमस्तबाहुजशिरःसंसेविताङ्घ्रिद्वयः ।
भुञ्जन् सागरमेखलां भुवमहो ! मार्ताण्डवत्स्वैः करैः
कुर्वन् दुष्टजनस्य मूर्धनि सदा शार्दूलविक्रीडितम् ॥

[ इति निष्क्रान्ताः सर्वे । ]

इति वासन्तिकस्वप्ने पञ्चमोऽङ्कः संपूर्णः ॥



# PREFACE.

I may perhaps appear presumptuous in having come forward to render into Sanskrit the thougts of the immortal Bard of Avon, and I feel that my bold attempt needs a few words of explanation.

A literature is often enriched by translations. This has been the case with almost all the languages of Europe. We have thus English versions of Greek and Latin poets—not to speak of the English renderings of modern works of note in the current languages of Europe. Similarly the writings of Shakespeare have been translated into German, French and other tongues. Some of the choicest works of the East have also been thus rendered into several languages of the West. Sakuntala has her admirers on the banks of the Danube as much as on the banks of the Ganges or the Cauvery. It is a pity that Sanskrit should not have been thus enriched—the more so that it is peculiarly fitted for such a task by reason of its richness and pliability.

It has been my long-cherished wish to render into Sanskrit some of the plays of Shakespeare. But a translation in the form of a Sanskrit drama, is attended with difficulties. A Sanskrit drama, even if it should be a translation, has to conform to a string of hard and fast rules. Failing in this respect, the work, no matter however good, is sure to offend the taste of Sanskrit Pandits, and a work like mine written in the first instance to give our Pandits a taste of Western poetry will have no reason for its existence.

Translation in narrative form is not so fettered; but the feelings and dramatic effect are lost in such mere narra-

tions. It is for this reason that Prof. H. H. Wilson has adopted the form of the English drama in translating Sanskrit Natakas. Following the same plan a translation of Shakespeare should have the garb of a Sanskrit drama, though it may not be possible in every case to observe the rules laid down for Sanskrit Natakas.

Generally translations are less effective than the originals; much more should it be the case if they are Shakepeare's works. And in a first attempt of this kind Shakespeare must necessarily lose much of his original beauty, charm and grandeur. Yet this should not deter us from making the attempt.

This work is an adaptation of Shakespeare's Midsummer-night's Dream. The rendering is free in some places and literal in other places, without being detrimental to the general tenor of the passages in the original. The ideas are enlarged in some places, but the enlargement is generally in keeping with the dominant feelings. There are deviations in details with a view to keep up the characteristics of the Sanskrit drama. Some few passages pregnant with such ideas as cannot be brought home to our Pandits have been omited, as also some passages which relate purely to Western habits and customs. I daresay men of greater capacity and learning than myself may produce a much happier and better translation of the same play.

I have selected Midsummer-night's Dream at the outset, since it is not long and most of the ideas in it are not unfamiliar to the best of our Pandits. This play of Shakespeare has, of all his plays, the most Oriental cast about it, and I have accordingly given Sanskrit names for all the characters in the play; such as इन्दुवर्मा for Theseus,

इन्दुशर्मा for Egeus, वसन्त for Lysander, मकरन्द for Demetrius, प्रमोद for Philostrate, धान्यक for Quince, अधरक for Bottom, धनक for Snug, वसुपालित for Flute, राजस for Snout, साधक for Starveling, कनकलेखा for Hippolyta, कौमुदी for Hermia, सौदामिनी for Helena, प्रदोष for Oberon, निम्बवती for Titania, प्रमोह for Puck or Robin goodfellow, जयसेना, धूमिनी, विजया and गोमिनी for Peaseblossom, Mustardseed, Cobweb and Moth respectively. I trust that scholars will see some appropriateness in several of the names I have adopted.

I sincerely hope that this essay of mine may induce abler scholars to take up the task, and, with far better success, introduce to the literatii of the East some of the most chaste and beautiful thoughts of the West.

I am greatly indebted to the Honorable A. Seshiah Sastriar Avergal, C. S. I., Dewan-Regent of Pudukota, but for whose very kind patronage I should not have been able to bring out this work.

I thank my printers for the very neat style in which they have brought out the work.

24th February 1892.
PUDUKOTA.

THE AUTHOR.

## देशवृत्तान्ताः ॥

'शारदा' इत्यन्वर्थनाम्नी मासिकपत्रिका प्राचीनानां नवीनानां च विषयाणां विमर्शादिकं प्रकाशयन्ती सहृदयैरभिनन्द्यमानप्रचारा बाभाति । संपादकः श्रीचन्द्रशेखरः । अस्य समुद्यमेन समुचितलेखसंग्रहेण च सम्यक् प्रचाल्यमाना संस्कृतभाषाप्रणयिभिः समादरणीया माननीया च समुल्लसतितरामियं पत्रिका । वार्षिकं मूल्यं रूपिकात्रितयमेव । प्रकाशनस्थानं च शारदानिकेतनं दारागञ्ज प्रयाग ॥

वर्णाश्रमव्यवस्थायाः औचित्यमवगमयितुं काचन सभा मद्रपुरे प्रतिष्ठिता अनुदिवसमभ्युदयं नीता आस्तिकशिरोमणिभिः बहूपकरोति प्राचीनसमयाचारप्रणयिनाम् ।

वेदेषु पुराणेषु धर्मशास्त्रेषु च तत्र तत्रोपन्यस्ता विहिताश्च आध्यात्मिकवादाः भारतवर्षीयाणामार्याणां मतमधिकृत्य किं बोधयन्ति ? इति कश्चनोपन्यासः अचिरात्सहृदयायां प्रकाश्येत ॥




---

READY FOR SALE.

# Dharmakutam

## READY PART II.

## To the end of BALAKANDAM.

THIS is a rare work hitherto unpublished. The author is one Tryambakaraya Makhi a minister at the Court of King Ekkoji of Tanjore. The manuscript of the book was found only in the Tanjore Palace Library. The work consists of six dissertations in Sanskrit on the six kandas of Sri Valmiki Ramayana. The object of these lectures is to convince the public that the Ramayana is not a mere chronicle of the life of Sri Rama but that it is chiefly intended to inculcate a right conception of one's Dharma. Each incident therein depicted, each portrayal of character is chiefly intended to expound some one or other of the several aspects of Dharma. The lectures are all in very simple flowing style easily understandable by all, full of excerpts from the Dharma sastras in justification of the interpretations given of the Ramayana. The sample pages would give a clear idea that this kind of intrepreting the Ramayana, not as a mere epic detailing the story of Rama but as an allegory teaching morals and duty, was a desideratum up to now. The author who seems to have lived in the seventeenth century has performed his task in such a marvellously lucid manner that when we read the manuscript we became very eager to print and publish it at once. Since we found the lectures worth earnest study we resolved to print them in a most handy form and to publish them in parts so that the public may not have to wait till they are completely printed. The size of the book is Royal 16mo. Each part consists of two hundred pages and is priced at **Re. 1.** only.

THE MANAGER,
Bookselling Department,
SRI VANI VILAS PRESS,
*SRIRANGAM.*

